


विद्या प्रसारक मंडळ, ठाणे

| | | |
|---|---|---|
| पुस्तकाचे नाव | : | आर्यविद्यासुधाकरः |
| लेखक | : | मंगलदेवशास्त्री |
| प्रकाशक | : | लाहोर : मोतीलाल बनारसदास |
| प्रकाशन वर्ष | : | १९४० |
| पृष्ठे | : | २३६ पृष्ठे |

**गणपुस्तक**

**विद्या प्रसारक मंडळाच्या**

**“ग्रंथालय” प्रकल्पांतर्गत निर्मिती**

गणपुस्तक निर्मिती वर्ष : २०१४

गणपुस्तक क्रमांक : १६

# आर्यविद्यासुधाकरः

# ĀRYAVIDYĀ SUDHĀKARA

OR A

Compendium of Hindu Culture and Philosophy

BY

**YAJÑEŚVARA CIMAṆA BHAṬṬA**

EDITED WITH NOTES ETC.,

BY

Mahāmahopādhyāya


**PANDITA ŚIVADATTA D. KUDĀLA,**

Late Head Pandit and Superintendent, Oriental College, Lahore, Fellow of the Punjab University, Sanskrit Scholar of Jayapura Sanskrit Pâthaśâlâ


*New Edition, Revised with Notes,*

BY


**DR. MANGAL DEVA SHAṢTRI.**

M. A., D. Phil. ( Oxon, ),

**Principal, Government Sanskrit College, Benares**



PUBLISHED BY

**Moti Lal Banarsi Dass**

ORIENTAL BOOKSELLERS & PUBLISHERS,

SAID MITHA, LAHORE

1940

# आर्यविद्यासुधाकरः

प्राचीनार्वाचीनार्यजनसंपादितानां विविधविद्या-
नीतिधर्मादिविचाराणां
विज्ञानस्य प्रकाशकः
सुरतपत्तन निवासिना महाराष्ट्राभिजनेन
चिमणभट्टसूनुना भट्टयज्ञेश्वरशर्मणा विरचितः

स
चायं
महामहोपाध्याय श्री पं० शिवदत्तकृत टिप्पणीभिः
नूतनटिप्पणीभिश्च

काशिकराजकीय संस्कृत महाविद्यालयस्याध्यक्ष-
पदमधितिष्ठता
डाक्टर श्रीमङ्गलदेव शास्त्री,
एम० ए०, डी० फ़िल० ( आक्सफ़ोर्ड ) इत्येतेन
सपरिश्रमं संशोध्य
सम्पादितः ।



ख्रिस्ताब्दाः १९४०

# ❋ किञ्चित्प्रास्ताविकम् ❋

भारतीयार्यजनानां संस्कृतेः साहित्यस्य चैकत्रैव समष्टिरूपेण वर्णनपरस्यास्य ग्रन्थरत्नस्यातीवोपयोगित्वं कस्य खलु विपश्चितस्तिरोहितं भवेत्। प्रथमवारं १८६८ मिते खिस्ताब्दे प्रकाशितोऽसौ ग्रन्थो द्वितीयवारं महामहोपाध्यायश्रीपण्डितशिवदत्तमहोदयैर्नानाटिप्पणीभिः १९२३ मिते खिस्ताब्दे संपादित आसीत्। ततः किञ्चित्कालानन्तरमेव दुष्प्राप्यतामस्योपलभ्य प्रायेण १९३१ तमेऽब्दे तस्यैव पुनःप्रकाशनार्थं समुद्यतः प्रकाशकमहोदयोऽस्मास्वेव साग्रहं पुनःसंशोधनभारं न्यस्तवान्। सम्पादनकार्ये कतिचिद्वर्षेभ्यः प्रागेव समाप्तप्रायेऽपि यदस्य मुद्रणेन चिरायितं तत्र खल्वस्माकं कार्यातिभारेणानवकाश एव प्रथमतो मूलम्।

अस्य संशोधने सम्पादने च यादृशं काठिन्यमासीत्, यादृशं चास्य संस्करणस्य पूर्वसंस्करणापेक्षया वैशिष्ट्यमिति न तदस्माकं वक्तव्यमपेक्षते। पूर्वप्रकाशितसंस्करणद्वयमपि समीक्षापुरस्सरं पश्यतां नैतत्तिरोहितं भवेत्। नैकग्रन्थेभ्यस्तत्र तत्र समुद्धृतानां वचनानां स्थलनिर्देशैरुपयुक्ताभिर्नूतनटिप्पणीभिरेवास्य संस्करणस्य वैशिष्ट्यं स्पष्टीभविष्यति सर्वेषाम्। तत्र तत्र ५, ६ इत्यादिपृष्ठेषु कोष्ठगतैः प्रश्नचिह्नादिभिः संकेतिता मूलपुस्तकीयभाषाया अशुद्धयोऽपि अस्यापरं वैशिष्ट्यमावहन्ति। किंकृतास्ता अशुद्धय इति तु कथनं दुःशकम्।

कृतेऽपि परिश्रमे नैककारणतो विशेषतश्च मुद्रणदोषादनेका अशुद्धयोऽवशिष्टाः। प्रायेण सर्वा अपि ताः शुद्धिपत्रे संशोधिताः। सत्यप्येवं याः काश्चित्त्रुटयोऽवशिष्टाः स्युस्तदर्थमाशास्यते यदुदाराः पाठका अस्मान् क्षमिष्यन्ते।

विदुषां वशंवदः

१५।९।१९४० मङ्गलदेवशास्त्री

❀ श्रीः ❀

( टिप्पणीकर्तृकर्तृका )

# ❀ प्रस्तावना ❀

*याभ्यामियं भारती भूर्भूता राजन्वती किल ।*
*तौ जार्जमेयौ सम्राजौ प्रजाः पालयतां चिरम् ॥ १ ॥*

आर्यविद्यासुधाकरोऽयमार्यसाहित्यसागरमन्थनजन्मा सुधाकर इति ग्रन्थकारोक्तिः सर्वथाऽवितथा । यतोऽनेनोदितेन अद्यतनजनमनोगगनमावृण्वानमार्यविद्याविज्ञानवैधुर्यजं विविधसंशयकुतर्कसन्तमसं समपहर्तुं ज्ञानज्योत्स्ना प्रसारिता ।

यथा कश्चित् स्वगृहान्तर्निहितान् पूर्वपुरुषोपार्जितान् रत्नप्रदीपानपरिज्ञाय परान् भिक्षितैर्मृद्दीपैरुल्मुकनिकरैश्चावाससन्ततं तमोऽपसारयितुमुद्युङ्क्ते, तथाऽद्यतना आर्याः परसब्जाब्द (?) ( १९७२९४५०२४ वर्तमानकल्पकाल ) पूर्वप्रादुर्भूतऋषिवर्यैः सञ्चितं ज्ञानराशिमपरिचिन्वानाः पाश्चात्यैरार्यगौरवापकर्षाय कपोलकल्पितान् आर्यवञ्चनाप्रबन्धानुपजीव्य निजधर्मनिर्णयं तत्सम्बन्धिशङ्कानिरासं च कर्तुं प्रयतन्ते । तेषां कुकल्पनाभिर्व्यामोहिताश्च तन्मयतामेत्य —

*"दन्द्रम्यमाणाः परियन्ति मूढा अन्धेनैव नीयमाना यथान्धाः" ।*

इति न्यायलक्ष्यतां प्राप्ताः स्वपूर्वजान् साक्षात्कृतधर्मणो महर्षीन् अवाच्यवादैर्योजयन्ति, येषां विज्ञानवैभवं पाश्चात्या अपि शतमुखैः प्रशंसन्ति । हन्त नितान्तं लज्जाकरमिदं महर्षिसन्ततीनाम् ।

इदमेवानुभवता योग्येन ग्रन्थकृताऽङ्गीकृतः परिश्रमो ग्रन्थस्यास्य निर्माणे । उपकृतं च महत् कृतिनोऽनया कृत्याऽऽर्यसाहित्यपरिशीलनरसिकानां विदुषामपीति धन्यवादार्होऽसौ महानुभावः ।

यथामति ग्रन्थकृता साधु विशदीकृता अत्र ते ते विषयाः, विशयाश्च तद्गताः सम्यङ् निरस्ताः । मयापि ग्रन्थमिमं मुद्रणाय सज्जीकुर्वता निजाभिमतं तत्र २ टिप्पणीभिर्दर्शितम् ।

किञ्च अर्जुनेन नागकन्यायां नियोगः कलियुगे कृतः—इति यदत्र प्रतिपादितम्, तन्न नो रुच्यास्पदम् । यतो महाभारतयुद्धं कलियुगारम्भात् पूर्वमेव संवृत्तमासीत् । नियोगश्च ततोऽपि पूर्वं ( द्वापरापरसंधौ ) संवृत्त इति न तस्य ३६००० कलिप्रथमसन्धिसमाप्त्युत्तरं वर्तिष्यमाण ३६०००० वर्षमानकलियुगभवत्वं विभावनीयम् ।

ग्रन्थरत्नमिदमार्यसाहित्यसमालोचनरसिकाः सहृदया विद्वांसोऽक्षरयोजकप्रमादेन सञ्जाताशुद्धिकालुष्यमपि सकज्जलकालुष्यं मृगाक्षीणामक्षीव नियतं सत्करिष्यन्तीत्याशास्ते—

**महामहोपाध्यायपण्डित–**
**शिवदत्तशर्म्मा**
**दाधिमथः ।**

( ग्रन्थकर्तृकर्तृका )

# ❋ प्रस्तावना ❋

पुरा किलात्र भारते वर्षे वेदशास्त्रादिसकलसंस्कृतविद्यापारावारपारीणा धरणीगीर्वाणा विद्वांसो भूयांसः सम्बभूवुः। ते च सर्वे प्रायशो दक्षिणानपेक्षा एव विनयसौजन्यादिगुणोपेतान् ग्रहणधारणापटून् शिष्यबटून् सम्यगध्याप्य दीपाः प्रतिदीपानिव स्वसमानांस्तान्निर्वर्त्तयाञ्चक्रिरे। किञ्च तानेतान् विद्वज्जनान् यथोचितदानमानसत्कारैः स्वयशःसुधाकरचन्द्रिकाधवलिताखिलवसुन्धराधराधिपतयः परेऽपि श्रीमन्तः सद्गृहस्थाः प्रीणयाञ्चक्रुः। तथा चैवं शिष्यप्रणालिकया सन्ततमनुवर्त्तमान एव विविधगीर्वाणविद्याप्रकाशो भूतलमुद्योतयन्नास्ते। अथ कालवशादापतितेन वेदादिविद्यापठनपाठनसम्प्रदायस्यातिकृशत्वेन सलिलसेकादिसहकारिकारणविरहेणोद्यानभूमय इव गीर्वाणविद्या जीर्णतामावहन्ति। नचैतावता अर्वाचीनाः कुमारा अकृतबुद्धयः सन्तीति विवक्षितम्। यतो निजसद्गुणगणानुरञ्जितनिखिलभूमण्डलया निजप्रजाहितनिरतया हूणसाम्राज्यसिंहासनपदाधिष्ठितया श्रीमत्या विक्टोर्याख्यमहाराज्ञ्या स्वराष्ट्रे सर्वत्र ग्रामनगरादौ सुप्रतिष्ठापितासु पाठशालासु सम्प्रति सम्पादिताऽभिनवविविधविद्याशिल्पादिविज्ञाना नव्यतरास्तरुणपुरुषाः पुराणपण्डितबुद्धिवैभवमतिवर्त्तन्ते। परन्तु लोकहितानुबन्धिविचारशीलैर्नव्यजनैरार्यकुलोचितानां सांसारिकव्यवहारविचाराणां सनातनधर्म्माणां च विज्ञानमवश्यं सम्पादनीयम्। अन्यथा यथावस्थितं सारासारवस्तुविवेचनं न स्यात्। प्रकृतं च विज्ञानं पुरातनबुधजनैर्मनोवाक्कायकर्म्मभिर्लोककल्याणाय कृतभूरिपरिश्रमैर्विरचितानां विद्याधर्म्मन्यायनीत्यादिविषयप्रतिपादकग्रन्थानां व्युत्पत्तिसापेक्षमेव। ते च ग्रन्था एकैकविषयसमर्थनायानेकेऽतिविस्तृताः सर्वेऽपि गीर्वाणभाषयोपनिबद्धाश्च सन्ति। यद्यपि संस्कृतविद्यासिद्धान्तास्तत्तद्ग्रन्थाध्ययनमननादिभिर्यथास्थिता अवगन्तुं शक्यास्तथापि नानाविधापूर्वविद्याशिल्पाद्यन्वेषणे प्रयतमानैर्नव्यजनैस्तत्कार्यपर्याप्तशास्त्रव्युत्पत्तिसमयावसरादिसामग्रीविरहान्न ते यथार्थमवगन्तुं शक्यन्ते। तस्मात् प्रस्तुतविषयाणां संक्षेपतः सिद्धान्तप्रकाशनं यद्येकेनैव नातिविस्तृतेन ग्रन्थेन भवेत् तर्हि तत्तद्विषयजिज्ञासूनां सर्वेषां स ग्रन्थोऽतीवोपकारकः स्यादित्येवमर्थमार्यविद्यासुधाकरनामकोयं ग्रन्थः प्रारभ्यते।

प्रस्तुतग्रन्थरचनोपयुक्ताः कतिचिद्वार्त्ता हूणभाषाविचक्षणेन संस्कृतविद्याविशारदेन जवेरीलालोमाशङ्करनामधेयमित्रवर्येण मह्यमावेदिताः, पुस्तकमुद्रणायामपि तेन सहायतया व्यापृतमिति महान्तमहं तत्कृतमुपकारभारं धारयामि। तथा खाण्डिलकरोपाव्हयैरापदेवशास्त्रिभिरपि मुद्रणीपत्रशोधनपरिश्रमं स्वीकृतवद्भिर्मयि बहूपकृतम्।

य० चि०

# संस्करणेऽस्मिन् प्रमाणत्वेनोद्धृततत्तद्ग्रन्थबोधनार्थं प्रयुक्तानां संक्षिप्तचिह्नानां विवरणम्

अष्टा० = पाणिनीयाष्टाध्यायी
आप० श्रौ० = आपस्तम्बश्रौतसूत्रम्
आश्व० गृ० = आश्वलायनगृह्यसूत्रम्
आश्व० श्रौ० = आश्वलायनश्रौतसूत्रम्
ऋ० = ऋग्वेदसंहिता
ऋ० खि० = ऋग्वेदसंहिताखिलानि
ऋ० सर्वानु० = ऋक्सर्वानुक्रमणी
ऐ० ब्रा० = ऐतरेयब्राह्मणम्
क० उ० (कठोप० इति वा) = कठोपनिषद्
का० उ० = कालाग्निरुद्रोपनिषद्
का० श्रौ० = कात्यायनश्रौतसूत्रम्
गौ० ध० = गौतमधर्मसूत्रम्
च० = चरणव्यूहः ( शौनकीयः )
छा० उ० = छान्दोग्योपनिषद्
जा० उ० = जाबालोपनिषद्
तै० आ० = तैत्तिरीयारण्यकम्
तै० उ० = तैत्तिरीयोपनिषद्
तै० सं० = तैत्तिरीयसंहिता
नि० = निरुक्तम्
नि० परिशि० = निरुक्तपरिशिष्टम्
न्या० सू० = गौतमन्यायसूत्राणि
न्या० सू० वा० भा० = न्यायसूत्रवात्स्यायनभाष्यम्
प्र० सू० = प्रतिज्ञासूत्रपरिशिष्टम्
बृ० उ० (बृह० उ० इति वा) = बृहदारण्यकोपनिषद्
बृ० दे० = बृहद्देवता ( 'मैक्डानेल' द्वारा संपादिता)
भ० गी० = भगवद्गीता
भाषा० = भाषापरिच्छेदः
मनु० = मनुस्मृतिः
महाना० उ० = महानारायणोपनिषद्
महा० पस्पशाह्नि० = महाभाष्यपस्पशाह्निकम्
मु० उ० = मुण्डकोपनिषद्
या० स्मृ० = याज्ञवल्क्यस्मृतिः
यो० भा० = योगसूत्रव्यासभाष्यम्
रघु० = रघुवंशकाव्यम्
वा० = कात्यायनीयवार्त्तिकानि
वाक्यप० का० २ = वाक्यपदीयस्य द्वितीयकाण्डम्
वा० रा० अयो० का० = वाल्मीकिरामायणस्य अयोध्याकाण्डम्
वा० सं० = वाजसनेयिमाध्यन्दिनसंहिता
वे० सू० = वेदान्तसूत्रम्
वे० सू० शां० भा० = वेदान्तसूत्रशाङ्करभाष्यम्
श० ब्रा० = शतपथब्राह्मणम्
श्वे० उ० = श्वेताश्वतरोपनिषद्
सां० का० = सांख्यकारिका

# ❀ अत्र ग्रन्थे प्रतिपाद्यविषयाणामनुक्रमणिका ❀

## ❀ प्रथमः प्रकाशः ❀


| | |
|---|---|
| मङ्गलाचरणम् | १ |
| उपोद्घातः | १ |
| आर्यसंमतसृष्टिविचारः | २ |
| आर्यजनानामुत्पत्तिस्थानविचारः | ४ |
| ब्राह्मणादिजातिविवेकः | ८ |
| चीनयवनादीनामुत्पत्तिकथनम् | ९ |
| आर्याणामुत्पत्तिकालविचारः | १० |
| पुरातनानामार्यजनानां विद्या-शिल्पादिविज्ञाननिरूपणम् | ११ |
| प्रसङ्गात् वर्णलिपिसमुद्भवविचारः | १६ |
| गणितविद्योत्पत्तिविचारः | २१ |
| व्याकरणविद्योत्पत्तिविचारः | २३ |
| स्वर्गादिसाधनानि | २४ |
| उद्योगवादः | २५ |
| आर्यधर्म्मविचारः | २६ |
| वेदशब्दार्थः | २६ |
| वेदभेदाः | २७ |
| ऋग्वेदमानं तच्छाखाश्च | २८ |
| शाखाभेदकारणम् | २९ |
| ऋग्वेदस्य सूक्तादिपदव्यपदेश्यो विभागः | २९ |
| सूक्तलक्षणम् | २९ |
| मण्डललक्षणम् | ३० |
| दशानां मण्डलानामृषयः | ३१ |
| ऋषीणां लक्षणादिविचारः | ३१ |
| कृष्णयजुर्वेदीयशाखानिरूपणम्. | ३६ |
| यजुर्वेदस्य कृष्णशुक्लभेदे कारणम् | ३७ |
| शुक्लयजुःशाखास्तन्मानं च | ३८ |
| सामवेदशाखास्तन्मानं च | ३८ |
| अथर्वणशाखास्तन्मानं च | ३९ |
| वेदाङ्गानां सप्रयोजनं निरूपणम् | ३९ |
| वेदस्योपाङ्गानि | ४० |
| स्मृतिकाराः पुराणनामानि च | ४० |
| धर्म्मनिर्णये प्रमाणविचारः | ४२ |
| तत्र प्रबलदुर्बलविवेकः | ४२ |
| धर्म्मस्य सत्यमूलकत्वम् | ४४ |
| सत्यप्रशंसा | ४४ |
| धर्म्मस्य द्विविधत्वं प्रवृत्तनिवृत्तभेदेन | ४५ |


## ❀ द्वितीयः प्रकाशः ❀


| | |
|---|---|
| श्रौतयज्ञास्तेषां च भेदाः | ४९ |
| प्रकृतिविकृत्यादिलक्षणम् | ४९ |
| ऋत्विजः | ५० |
| अग्न्याधानम् | ५१ |
| यज्ञियकुण्डादिनिरूपणम् | ५१ |
| यज्ञपात्राणि वेदोदितानि | ५२ |
| अग्निहोत्रम् | ५३ |
| दर्शपूर्णमासयागः | ५३ |
| यज्ञस्वरूपविचारः | ५४ |
| आग्रयणेष्टिः | ५५ |
| चातुर्मास्यानि | ५६ |
| वैश्वदेवयागो वैदिकेतिहाससहितः | ५७ |
| वरुणप्रघासः सेतिहासः | ५८ |

साकमेधः सेतिहासः ५८
शुनासीर्य्ययागः ६०
सोमयागः सप्रभेदः ६०
यागयोग्यभूमिविचारः ६०
सौमिकवेदिनिरूपणम् ६३
पशूपाकरणं सप्रयोजनम् ६५
सोमपात्राणि ६६
सोमाभिषवप्रकारः ६७
अग्निष्टोमीयदक्षिणाविचारः ६९
राजसूययज्ञः ७१
अश्वमेधयज्ञः ७३

## ❀ तृतीयः प्रकाशः ❀

स्मार्त्तसंस्काराः ७५
संस्कारप्रयोजनविचारः ७६
गर्भाधानं सप्रयोजनम् ७६
पुंसवनसंस्कारः ७७
सीमन्तोन्नयनम् ७७
जातकर्म्मसंस्कारः ७८
जननाद्याशौचे श्रुतिसंमतिः ७८
नामकरणनिष्क्रमणान्नप्राशन-चौलसंस्काराः ७९
उपनयनसंस्कारः ८०
ब्राह्मणादिबटूनां मौञ्जीमेखलादयः ८०
वेदाभ्यासविचारः ८१
ब्रह्मचारिनियमाः ८४
विवाहनिरूपणम् ८६
सापिण्ड्यनिर्णयः ८६
वधूवरयोर्विवाहयोग्यगुणादि ८९
असवर्णकन्याविवाहप्रकारः ९३
प्रसङ्गात् पुनर्विवाहविचारः ९४
मृतभार्यादेः पुनः परिणयनम् ११०
गृहस्थधर्म्माः ११२
गृहस्थस्य जीविकाः ११३
आपदि सर्वेषां जीवनोपायाः ११५
अथाह्निकविचारः ११६
सन्ध्योपासनम् ११७
देवार्चनविधिः ११८
दानधर्म्मकथनम् ११९
पात्रलक्षणम् १२०
पञ्चमहायज्ञविचारः १२१
अतिथिलक्षणम् १२३
आतिथ्यविचारः १२४
शूद्रस्य धर्मकर्मणि क्रियानधिकारः १२५
श्राद्धप्रकरणम् १२८
मृतानां श्राद्धफलप्राप्तिद्वारम् १३१
गृहस्थानां हितोपदेशः १३२
गृहस्थाश्रमस्थस्यैव संन्यासप्रकारः १३३
अथ वानप्रस्थाश्रमः १३३
अथ संन्यासाश्रमः १३४
वर्णक्रमेणैकद्व्याद्याश्रमविचारः १३४
सर्वाश्रमिणां साधारणधर्म्माः १३६

## ❀ चतुर्थः प्रकाशः ❀

अथ पौराणमतस्वरूपम् १३७
सामान्यरूपेण तान्त्रिकमतम् १३९
तन्त्रभेदास्तेषां लक्षणानि च १३९
तान्त्रिकानुष्ठाने कस्य क्रियानधिकारः १३९
चतुःषष्टिकौलतन्त्राणां नामानि १४०
तत्र तत्र तन्त्रेषु प्रतिपाद्या विषयाः १४०
अथ दर्शनमतविचारः १४२
नास्तिकास्तिकयोर्लक्षणम् १४२
चार्वाकमतसङ्ग्रहः १४२
बौद्धमतदर्शनानि १४४
बौद्धान्तर्गतस्य माध्यमिकस्य मतम् १४४
योगाचारमतम् १४७

| | | | |
|---|---|---|---|
| सौत्रान्तिकमतम् | १४८ | वल्लभाचार्यमतं सेतिहासम् | २०० |
| वैभाषिकमतम् | १४९ | अथ माहेश्वरमतानि | २०१ |
| जैनमतम् | १५१ | अथ पाशुपतानां मतम् | २०१ |
| चार्वाकादीनामुत्पत्तिकालविचारः | १५६ | शैवमतदर्शनम् | २०४ |
| अथास्तिकदर्शनानि | १५९ | प्रत्यभिज्ञामतदर्शनम् | २०६ |
| न्यायशास्त्रमतदर्शनम् | १५९ | रसेश्वरमतदर्शनम् | २०७ |
| सांख्यशास्त्रमतम् | १६७ | स्वामिनारायणोत्पत्तिकालः | २०८ |
| सेश्वरसांख्यभूतयोगशास्त्रमतम् | १७२ | ❀ पञ्चमः प्रकाशः ❀ | |
| धर्ममीमांसाशास्त्रमतम् | १७४ | पूर्वोक्तार्थस्य सारांशः | २०९ |
| ब्रह्ममीमांसाशास्त्रमतम् | १७९ | धर्मसंप्रदायाभासप्रचारे कारण-विचारः | २०९ |
| शङ्कराचार्योत्पत्तिकालकथनम् | १९१ | युगधर्मनिरूपणम् | २१० |
| वैष्णवलक्षणम् | १९३ | पुराणानां परस्परविरोधस्य परिहारः | २१० |
| विष्णुस्वामिमतप्रदर्शनम् | १९३ | नानादेवतावादतात्पर्यविचारः | २११ |
| विष्णुस्वामिन इतिहासः | १९३ | सर्वदर्शनानामैकमत्यप्रदर्शनम् | २१४ |
| रामानुजाचार्यमतप्रदर्शनम् | १९४ | सारार्थनिष्कर्षः | २१५ |
| तस्येतिहासश्च | १९६ | ग्रन्थोपसंहारश्लोकाः | २१७ |
| मध्वाचार्यमतप्रदर्शनम् | १९६ | | |
| मध्वाचार्यस्येतिहासः | १९९ | | |


समाप्तिः



श्रीगणेशाय नमः ।

भट्टयज्ञेश्वरकृत

# आर्यविद्यासुधाकरः ।

## अथ प्रथमः प्रकाशः

सतां साध्यानि सिध्यन्ति यत्प्रसादान्महान्त्यपि ॥
तं विघ्नदावदहनं देवं वन्दे गजाननम् ॥ १ ॥
नमस्तस्मै महेशाय निर्म्मलज्ञानमूर्त्तये ॥
अचिन्त्यचित्ररचनं यत्सङ्कल्पभवं जगत् ॥ २ ॥
जयन्ति रामभद्रस्य पावनाः पादपांसवः ॥
लेभे शिलापि यैः स्पृष्टा वाचं वाक्पतिदुर्वचाम् ॥ ३ ॥
वसिष्ठवामदेवादीन् महर्षीन् मन्त्रदर्शिनः ॥
विश्ववन्द्यान् नमस्यामि विभूतीः परमेशितुः ॥ ४ ॥
जयन्ति मनुहारीतयाज्ञवल्क्यादयो बुधाः ॥
प्रकाशितश्चतुर्वर्गो येषां वाक्यार्करश्मिभिः ॥ ५ ॥
कालमहार्णवमग्ना अपि भावा यैः स्वबुद्धितूलिकया ॥
आलिखिता वाक्फलके जयन्ति ते क्रान्तदर्शिनः कवयः ॥६॥
महाशंकरशर्माणं गुरुं नत्वा विदां वरम् ॥
यज्ञेश्वरेण क्रियते आर्यविद्यासुधाकरः ॥ ७ ॥
प्राचां कवीनां वाक्पङ्क्तिर्भूयान्मेऽमुं चिकीर्षतः ॥
सन्दर्भं दृढ आधारो नौकेवाब्धिं तितीर्षतः ॥ ८ ॥
ग्रन्थेऽस्मिन्नार्यलोकानां व्यवहारप्रदर्शकाः ॥
विद्याशिल्पादयो भावाः प्रकाश्यन्ते यथामति ॥ ९ ॥

अथात्र ग्रन्थे येषां विद्यादयोऽर्थाः प्रकाश्यन्ते तेषामार्यजनानां मूलोत्पत्तिस्थानादिवर्णनरूपश्चिरन्तन इतिहासस्तावदादौ युज्यते वक्तुम्। येन सुलक्षिता आर्यजना भवेयुरिति चेत्। सत्यम्। परन्तु महर्षीनारभ्य एतत्कालपर्यन्तमनुवर्त्तमानानामार्यजनानाम-विकलवृत्तान्तप्रधानेतिहासरूपं विषयमवलम्ब्य प्रवर्त्तमानो नैको-

१ पदार्थाः । २ चित्रलेखनी तूलिकेत्यभिधीयते ।

ऽपि निबन्धः सम्प्रत्युपलभ्यतेऽस्माभिः। यद्यपि श्रुतिस्मृतिपुराणादीनि धर्मशास्त्रानुशासनानि सन्तीतिहासविमिश्राणि तथापि न तेभ्यो यथालक्षित इतिहासो लभ्येत। श्रुत्यादीनां प्राधान्यतो धर्म्मनिरूपणार्थं प्रवृत्तत्वेनेतिहासवर्णनस्य तत्राप्रकृतत्वात्। अप्रकृतोऽप्यर्थः प्रसङ्गेनोपस्थितश्चेन्नोपेक्ष्यते किन्तु मुख्यं विषयमुपोद्वलयितुं यावदादेयस्तावदेवोपादीयते इति ग्रन्थकृतां समयः। तस्मादत्र सनातनस्तत्तत्काले परिवर्तमानश्चार्याणां धर्मो निरूपितश्चेत् तत एव तथाविधधर्म्मचारिणां तेषां मनोधर्म्मा व्यवहाररीतयश्च समुन्नीता भवेयुः। एवं चेतिहासोऽप्यवगतो भविष्यति। ननु श्रुत्यादिग्रन्थपर्यालोचनयैव प्रकृतार्थसिद्धौ विफलोऽयमुपक्रम इति चेत्। न। विप्रकीर्णानां नवनीतकणानां दध्नि विद्यमानत्वेऽपि दधिमन्थनादेरिवास्य प्रयत्नस्य सफलत्वसम्भवात्। निजकारणाद्दध्नो नवनीतस्येव श्रुत्यादितोऽस्य प्रारिप्सितसन्दर्भस्य रसविशेषोपजनकत्वावश्यंभावाच्च।

## अथार्यसंमतसृष्टिविचारः।

अथात्र कीर्त्यते पूर्वं लोकायात्रार्यसम्मता।
या निर्वहति देवस्य सर्वज्ञस्य प्रभावतः॥

तत्र तावल्लोको नाम स्थावरजङ्गमात्मकं विश्वम्। लोक्यते दृश्यतेऽनुभूयते यदिति कर्मव्युत्पत्तिस्वीकरणात्। यदिदमपारचमत्कारनिधानमखिलं जगत् स्थितिकाले तत्तल्लोकगतैः प्राणिभिरनुभूयते तदिदं सृष्टेः प्राक् बीजे वटद्रुमवन्निजकारणवस्तुनि प्रलीनं नामरूपवैचित्र्यविहीनं केवलमव्यक्तस्वभावं सत्यज्ञानानन्दलक्षणब्रह्मात्मवस्तुस्वरूपेणैवासीत्। तथा च श्रूयते। 'तद्धेदं तर्ह्यव्याकृतमासीत्' (बृह० उ० १। ४। ७) इति, 'सदेव सोम्येदमग्र आसीत्' (छा० उ० ६। २। १) इति च। ततश्च स परमात्मा आकाशादिभूतपञ्चकसृष्टिक्रमेण सकलं जगत् ससर्जेति तैत्तिरीयश्रुतिरावेदयति 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः, आकाशाद्वायुः वायोरग्निः अग्नेरापः अद्भ्यः पृथिवी पृथिव्या ओषधयः ओषधीभ्योऽन्नम्' (तै० उ० २। १। १) इत्यादिना।

सद्रूपं ब्रह्मैव च जगत्सिसृक्षासंवलितं सत् कारणतामापन्नं हिरण्यगर्भ इति प्रजापतिरिति ब्रह्मा स्वयम्भूरित्यादिशब्दैः श्रुत्यादिषु गीयते। यथा ऋग्वेदेऽष्टमाष्टकस्य सप्तमाध्यायगतसप्तमे वर्गे-

हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत् ।
स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥
(ऋ० १० । १२१ । १)

इति श्रूयते । तथा ऐतरेयब्राह्मणेऽपि 'प्रजापतिरकामयत प्रजायेय भूयान्स्यामिति स तपोऽतप्यत स तपस्तप्त्वेमाँल्लोकानसृजत पृथिवीमन्तरिक्षं दिवम्' (ऐ० ब्रा० ५ । ३२) इति श्रूयते । मानवधर्मशास्त्रेऽपि विस्पष्टोऽयमर्थः स्मर्यते ।

[2] ततः स्वयम्भूर्भगवानव्यक्तो व्यञ्जयन्निदम् ।
महाभूतादि वृत्तौजाः प्रादुरासीत्तमोनुदः ।
योऽसावतीन्द्रियग्राह्यः सूक्ष्मोऽव्यक्तः सनातनः ।
सर्वभूतमयोऽचिन्त्यः स एव स्वयमुद्बभौ ॥
सोऽभिध्याय शरीरात् स्वात् सिसृक्षुर्विविधाः प्रजाः ।
अप एव ससर्जादौ[3] तासु बीजमवासृजत् ॥
तद[4]ण्डमभवद्धैमं सहस्रांशुसमप्रभम् ।

---

१ हिरण्यगर्भो नाम देवोऽग्रे सर्वस्मात्पूर्वं समवर्त्तत स्वयमेवाविरभवत् । [ज]ातः प्रादुर्भूतः सन् भूतस्य स्वस्मात्सम्भूतस्य विश्वस्य एकः असाधारणः पतिः [स्वाम]कः आसीत् । स देवः पृथिवीम् उत अपि इमां द्याम् अन्तरिक्षं स्वर्गं च । [..]न्दस्योक्तोभयार्थकत्वेन वेदनिघण्टौ लौकिककोशादौ चाभिधानात् । दा[धार] धृतवान् । अतः कारणात् कस्मै देवाय हविषा विधेम । क इत्यदन्तं [प्रा]तिपदिकं प्रजापतिवाचकम् । क्रियार्थोपपदस्य च कर्मणि स्थानिन इति [चतु]र्थी । हविषेति द्वितीयाबहुवचनम् । सुपां सुलुगिति विभक्तेराकारादेशः । [त]च प्रजापतिं देवमनुकूलयितुं हवींषि विधेम कुर्म्म इत्यर्थः ।

२ ततः प्रलयावसानानन्तरम् । स्वयम्भूः परमात्मा । स्वयं भवति स्वेच्छया [श]रपरिग्रहं करोति, नत्वितरजीववत्कर्माधीनदेहः । भगवान् ऐश्वर्यादिसम्पन्नः । महाभूतादि आकाशवायुतेजोजलभूम्यादि । आदिग्रहणान्महदादीनि च । [व्यञ्ज]यन् अव्यक्तावस्थं प्रथमं सूक्ष्मरूपेण ततः स्थूलरूपेण प्रकाशयन् । वृत्तौ[जाः] वृत्तमप्रतिहतमोजः सृष्टिसामर्थ्यं यस्य स तथा । तमोनुदः प्रकृतिप्रेरकः । [प्रादु]रासीत् प्रकटो बभूवेत्यर्थः ।

३ आदौ सर्वकार्याधिष्ठानभूतब्रह्माण्डसृष्टेः प्राक् अप एव ससर्ज तासु [अप्सु] बीजं शक्तिरूपम् आरोपितवान् ।

४ तत् बीजं परमेश्वरेच्छया हैममण्डमभवत् । हैमामिव हैमम् शुद्धिगुण[योगा]त् । न तु हैममेव, तदीयैकशकलेन भूमिनिर्म्माणस्य वक्ष्यमाणत्वात् भूमे-

तस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः ॥
आपो[1] नारा इति प्रोक्ता आपो वै नरसूनवः ।
ता यदस्यायनं पूर्वं तेन नारायणः स्मृतः ॥
यत्तत्कारणमव्यक्तं लोके सदसदात्मकम् ।
तद्विसृष्टः स पुरुषो लोके ब्रह्मेति गीयते ॥
तस्मिन्नण्डे स भगवानुषित्वा परिवत्सरम् ।
स्वयमेवात्मनो ध्यानात्तदण्डमकरोत् द्विधा ॥
ताभ्यां स शकलाभ्यां च दिवं भूमिं च निर्ममे ।
मध्ये व्योम दिशश्चाष्टावपां[2] स्थानं च शाश्वतम् ॥ (मनु० १ । ६-१३)

इत्याद्यभिधायाग्रे उक्तम् ।

द्विधा[3] कृत्वात्मनो देहमर्धेन पुरुषोऽभवत् ।
अर्धेन नारी तस्यां स विराजमसृजत्प्रभुः ॥
तपस्तप्त्वासृजद्यं तु स स्वयं पुरुषो विराट्[4] ।
तं मां वित्तास्य सर्वस्य स्रष्टारं द्विजसत्तमाः ॥ ( मनु० १ । ३२-३३ ) इति ।

एवमादिभ्यः श्रुतिस्मृत्यादिवाक्यकदम्बेभ्यो भूतं भवद्भविष्यच्च सर्वमपि विश्वं सर्वज्ञात्सर्वशक्तिमतः परमात्मनः सकाशाद्धिरण्यगर्भमनुप्रभृतिपरम्परया सम्भवतीत्येवंविधः श्रुतिस्मृत्यादिनिबद्धो घण्टापथः ॥

## अथार्यजनानामुत्पत्तिस्थानविचारः ।

अथार्यजनानां मूलोत्पत्तिस्थानं कुरुक्षेत्रादयो भूप्रदेशाः । तथा चोक्तं मनुना—

---

ञ्चाद्वैमत्वस्य प्रत्यक्षत्वात् उपचाराश्रयणम् ।

१ इदानीमागमसिद्धनारायणशब्दार्थनिर्वचनेन उक्तमेवार्थं द्रढयति । आपो नारा इति । नरसूनवः नराख्यस्य परमात्मनोऽपत्यानि । एतेनाप्सु नाराशब्दस्य अन्वर्था प्रवृत्तिरुपपादिता ।

२ अपां शाश्वतं स्थानं समुद्राख्यम् ।

३ द्विधा कृत्वेति । स ब्रह्मा निजदेहं द्विखण्डं कृत्वा । तस्यां नार्यां विराजं विराट्संज्ञं पुरुषं निर्मितवान् ।

४ स विराट् तपो विधाय यं निर्मितवान् तं मां मनुं जानीत अस्य सर्वस्य जगतः स्रष्टारम् ।

कुरुक्षेत्रं च मत्स्याश्च पञ्चालाः शूरसेनकाः ।
एष ब्रह्मर्षिदेशो वै ब्रह्मावर्तादनन्तरः ॥
एतद्देशप्रसूतस्य सकाशादग्रजन्मनः ।
स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः ॥ (मनु० २ । १९–२० ) इति ।

कुरुक्षेत्रादिभूप्रदेशानां वेदेऽपि प्रशंसा श्रूयते । तथा च शतपथब्राह्मणस्य प्रवर्ग्यकाण्डे 'तेषां कुरुक्षेत्रं देवयजनमास तस्मादाहुः कुरुक्षेत्रं देवानां देवयजनम्' इति । तथा जाबालोपनिषत्स्वपि श्रूयते 'यदनु कुरुक्षेत्रं देवानां देवयजनं सर्वेषां भूतानां ब्रह्मसदनम्' ( जा० उ० १ ) इति । किंच—

इमं मे गङ्गे यमुने सरस्वति
शुतुद्रि स्तोमं सचता परुष्ण्या ।
असिक्न्या मरुद्वृधे वितस्तयाऽऽ-
र्जीकीये शृणुह्या सुषोमया ( ऋ० १० । ७५ । ५ ) इति ।
सिताऽसिते सरिते यत्र संगते
तत्राऽऽप्लुतासो दिवमुत्पतन्ति ( ऋ० खि० १० । ७५ । १ )

इत्यादिमन्त्रैर्ऋग्वेदादौ भरतखण्डान्तर्गतानां गङ्गायमुनादिनदीनां तत्र तत्र श्रवणात्त एते भूप्रदेशा अभिजनदेशा एवार्यजनानामिति स्फुटमेवावगम्यते । तथा कृष्णयजुःसंहितायाः प्रथमे काण्डेऽष्टमप्रपाठकस्य दशमेऽनुवाके श्रूयते 'ये देवा देवसुवः स्थ त इममामुष्यायणमनमित्राय सुवध्वं महते क्षत्राय महत आधिपत्याय महते जानराज्यायैष वो भरता राजा सोमोऽस्माकं ब्राह्मणानां राजा' ( तै० सं० १ । ८ । १० ) इति । हे देवा अग्न्यादयो ये यूयं देवसुवो यजमानप्रेरकाः स्थ ते यूयमिमं यजमानमामुष्यायणम् अमुष्य देवदत्तस्य पुत्रममुष्य यज्ञदत्तस्य पौत्रं चानमित्राय शत्रुराहित्यार्थं सुवध्वम् अनुजानीध्वम् । किंच महते क्षत्रायानुत्तमक्षत्रियकुलाय महते आधिपत्याय अप्रतिहतनियमनसामर्थ्याय महते जानराज्याय जनसम्बन्धि यद्राज्यं तच्च सागरपर्यन्तभूमिविषयत्वान्महत् तस्मै सार्वभौमत्वाय सुवताम् अभ्यनुजानीताम्(?)। हे भरता राजन्यवैश्यादयो धनिका एष यजमानो युष्माकं राजा । एनं स्वामिनं यथोचितं सेवध्वमित्यभिप्रायः । सोम उत्तमदेवोऽस्माकं ब्राह्मणानां राजा न त्वधमो यः क्षत्रियः इति श्रुत्यर्थः । राजसूययज्ञाङ्गभूतोऽभिषेचनीय-

यागे ब्रह्माऽभिधान ऋत्विक् क्षत्रियवैश्यप्रभृतीन् भरतखण्डोद्भवान् वर्णाननेन मन्त्रवाक्येनावेदयति । ततश्चावगम्यते भरतखण्डमभिजनदेश आर्यप्रजाया इति ॥

अत्र केचिद्वदन्ति । आर्यजनानां हिन्दुपदव्यपदेश्यता हि देशान्तरभवत्वं साधयति । तथा हि । पुरा किल कदाचित्समये जलप्रलयो बभूव । तत्र यद्यपि मनुष्यादयः सर्वे प्राणिनः जले निमग्नाः सन्तः पञ्चत्वमापेदिरे । तथापि काकेससनामके पर्वते कश्चिदेकः पुरुषो जीवन्नवशिष्टः । तस्य च सन्तानलतायाश्चिरकालेन प्रवर्द्धमानाया एकः प्रतानो यूरोपखण्डं प्रविवेशाऽपरश्च पारसीकदेशम् । ततश्च भूयसा कालेन पारसीकदेशमभिव्याप्नुवन् प्रवर्द्धमानः स लताप्रतानः सिन्धुनद्स्योभे तटे समाश्रित्य प्रतिष्ठामलभत् (?=अलभत)। प्रतिष्ठितानां तत्पुरुषवंश्यानां देशनाम्ना सिन्धुपदेन व्यपदेशे कर्त्तव्ये करणाऽपाटववशात् प्राकृतजनैर्हिन्दुपदेन व्यपदेशश्चक्रे । त एवैते भरतखण्डवास्तव्या आर्यजनाः सन्ति । न ह्येषां मूलस्थानं भरतखण्ड इति ।

सेयं कल्पना न सर्वांशतः सम्भवतुलामधिरोहति । तस्य जलप्रलयस्याऽसार्वत्रिकत्वे एकस्यैव विवक्षितपुरुषस्यावशिष्टत्वासम्भवात् । सार्वत्रिकत्वे तु यमाश्रित्य प्राणान् स पुरुषो दधार स एवैकः पर्वतः प्रलयपयोधिजलैर्न प्लावित इति भाषणस्य बालजनश्रवणीयतया प्रेक्षावतामश्रद्धेयत्वात् । किञ्च स्वदेशं विहाय यथाकथंचिदुद्देशवशाद्भारतं वर्षं प्रविशद्भिरनार्यैः प्रथमं सिन्धुदेशवासिभिरेवार्यजनैः परिचयः संवृत्त इति तेनैव देशनाम्ना सर्वेषामार्याणां संज्ञाव्यवहारस्तैः कृतः स्यादित्यपि कल्पयितुं शक्यते । अथेयं प्रस्तुतवार्त्ता यथाकथंचिन्मूलमासाद्यांशतस्तु प्रमाणपदवीमधिरोहति । तथा च शतपथब्राह्मणे भारतरामायणादौ च मत्स्याऽवतारकथा गीयते । तत्र च कतिपयमहर्षिजनपरिवारेण मनुनाऽध्यासितां नावं निजैकशृङ्गनिबद्धामुद्वहता भगवता स्वीकृतमहामत्स्यरूपेण परमेश्वरेण सपरिवारो मनुः प्रलयपयोधिप्रचण्डतरङ्गताण्डवात् परित्रात इति । ततश्चातिक्रान्ते प्रलयकालसंकटे परमेश्वरप्रसादादवाप्तसमस्तसम्पत्समृद्धो मनुः पुत्रपौत्रादिवंशपरम्परया सर्वेषां जनानां मूलपुरुषः सम्बभूव । तन्मूलक एव च सर्वेषां द्विपदजातीनां जनानां मनुजमनुष्यमानवादिपदैः सनातनो लोकव्यवहारः सम्बभूवेत्याहुः ॥

यत्तु केचिद्वदन्ति

मनुष्या मनुतो जाता मनुर्दैवतनूद्भवः।
देवानां वसतिः स्वर्ग इति श्रुत्यादिसम्मतम् ॥

ततश्चावगम्यते हिमालयगिरेरुत्तरभूप्रदेशा एवार्याणां मूलोत्पत्तिस्थानम्। यतस्तत्र भूप्रदेशेषु तिबेट इतिनाम्ना प्रख्यातो भूप्रदेशोऽद्यापि विद्यते। तिबेटइति हि त्रिविष्टपशब्दस्यैवाऽपभ्रंशो भवेत्। त्रिविष्टपशब्दश्च स्वर्गपर्याय इति प्रोक्तार्थसिद्धिरिति। तत्त्वापाततो रमणीयम्। तिबेटशब्दस्य त्रिविष्टपशब्दाऽपभ्रंशरूपत्वेऽपि भूलोकगतस्य तद्देशस्यार्यजनसंमतस्वर्गत्वे मानाभावात्। भूलोकादन्तरिक्षलोकाच्च पृथगेव स्वर्गलोक इत्यर्थस्य श्रुतिस्मृत्यादिसकलप्राचीनग्रन्थेषु कोशकाव्याद्यर्वाचीननिबन्धेषु च विस्पष्टमभिधानाच्च। हिमालयोत्तरभूप्रदेशा अप्यार्याणामेव देशाः। नहि ते अनार्यनिवासस्थानभूता इत्यार्यजना मन्यन्ते किन्तु पावनानि धर्मक्षेत्राण्येवेति। अत एव महाभारतादौ श्वेतगिरिकैलासमानससरोवरादीन्युत्तरकुरुनामकप्रदेशाश्च तीर्थयात्रादिप्रस्तावे देवानामाक्रीडस्थानत्वेन तत्र तत्र स्तूयन्ते। न ह्येवं प्रशंसामात्रेण इमे पवित्रतीर्थप्रदेशा एव स्वर्गलोको नातः परः कश्चिद्देवनिवासः स्वर्गोऽस्तीति श्रुत्यादिसिद्धान्तो वक्तुं शक्यते। 'प्रजापतिरकामयत प्रजायेय भूयान् स्यामिति स तपोऽतप्यत स तपस्तप्त्वेमाँल्लोकानसृजत पृथिवीमन्तरिक्षं दिवम्' ( ऐ० ब्रा० ५। ३२ ) इत्यादिपूर्वोदाहृतश्रुतिस्मृत्यादिविरोधात्।

यदपि वदन्ति

शतं जीव शरदो वर्द्धमानः शतं हेमन्ताञ्छतमु वसन्तान्।
( ऋ० १०। १६१। ४ )

इत्यादिमन्त्रैर्बहुशो वेदे हेमन्तशतमानमायुः प्रार्थ्यते ततश्च शीतप्रदेशवर्त्तिन एवैते आर्या भवेयुरिति कल्प्यत इति। तदपि दुर्बलम्। भरतखण्डीयभूप्रदेशानां हेमन्तपरिचयाऽयोग्यत्ववत्संततोष्णप्रदेशत्वाभावात्। किंच भरतखण्डान्तर्गतानां देशानां ब्रह्मावर्त्तार्यावर्तब्रह्मर्षिदेशादिपदैरन्वर्थाः संज्ञा मन्वादिभिः स्मर्यन्ते। ब्रह्माणो ब्राह्मणा आवर्त्तन्ते उद्भवन्त्यत्रेति ब्रह्मावर्त्तः, आर्या आवर्त्तन्ते अत्रेत्यार्यावर्तः, ब्रह्मर्षीणां देशो मूलनिवासस्थानं ब्रह्मर्षिदेश इत्येवं संज्ञापदानामर्थः स्फुटमेवावेदयति भरतखण्डमप्यार्याणां मूलत एव जन्मभूमिरिति।

आ ब्रह्मभुवनाल्लोकात् पुनरावर्त्तिनोऽर्जुन ।
मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते ॥ ( भ० गी० ८ । १६ )

इत्यादिस्मृतिषु 'न स पुनरावर्त्तते' ( का० उ० २ ) इत्यादिश्रुतिषु च उत्पत्तिसमानार्थकत्वेनैवावर्त्तनशब्दस्य प्रसिद्धया प्रकृते आगमनरूपार्थकत्वकल्पनमनुचितमित्याहुः । युक्तं चैतत् । अन्यथा 'तस्मिन् देशे य आचारः पारम्पर्यक्रमागतः' ( मनु० २ । १८ ) इत्यनेन 'एतद्देशप्रसूतस्य सकाशादग्रजन्मनः' (मनु० २ । २०) इत्यनेन च समनन्तरोदाहृतमनुवचनेन विरोधापत्तेश्च ॥

## अथ ब्राह्मणादिजातिविवेकविचारः ।

अथायं ब्राह्मणादिजातिविवेकः पुरातनोऽर्वाचीनो वेति सम्प्रधारणायामुच्यते पुरातन एवायं जातिविवेको नार्वाचीन इति। तथा चोक्तं मनुस्मृतिदशमेऽध्याये—

ब्राह्मणः क्षत्रियो वैश्यस्त्रयो वर्णा द्विजातयः ।
चतुर्थ एकजातिस्तु शूद्रो नास्ति तु पञ्चमः ॥
सर्ववर्णेषु तुल्यासु पत्नीष्वक्षतयोनिषु ।
आनुलोम्येन सम्भूता जात्या ज्ञेयास्त एव ते (मनु० १० । ४-५)

इति । ब्राह्मणादित्रयो वर्णा द्विजातयो द्विजन्मानः सन्ति । तेषां द्वितीयजन्मरूपोपनयनसंस्कारविधानात् । शूद्रः पुनश्चतुर्थो वर्ण एकजातिरेव । तस्योपनयनसंस्काराभावात् । पञ्चमस्तु न कोपि वर्णोऽस्ति । सङ्कीर्णजातीनां त्वश्वतरवन्मातृपितृजातिव्यतिरिक्तजात्यन्तरत्वेन वक्ष्यमाणत्वादिति भावः । गवाश्वादीनामिव ब्राह्मणादीनां जात्यभिव्यञ्जकावयवविशेषस्याभावात्तेषां लक्षणं स्मर्यते सर्ववर्णेष्विति । ब्राह्मणादिषु चतुर्ष्वपि वर्णेषु समानजातीयासु यथाशास्त्रं परिणीतासु अक्षतयोनिषु आनुलोम्येन ब्राह्मणेन ब्राह्मण्यां क्षत्रियेण क्षत्रियायामित्येवमनुक्रमेण ये जातास्ते मातापित्रोर्जात्या ब्राह्मणत्वादिरूपया युक्तास्तत्तज्जातीया एव ज्ञातव्या इत्यर्थः । अत्र पत्नीग्रहणादन्यस्य पत्न्यां सवर्णेनाप्यन्यपुरुषेण जारधर्मतो जनितानां ब्राह्मणादिजातिमत्त्वं नास्तीति मन्वाशयः । तथा च देवलः ।

द्वितीयेन तु यः पित्रा सवर्णायां प्रजायते ।
अवावट इति ख्यातः शूद्रधर्मा स जातितः ॥
व्रतहीना न संस्कार्याः स्वतन्त्रा अपि ये सुताः ।
उत्पादिताः सवर्णेन व्रात्या इव बहिष्कृताः ॥ इति ।

तथा याज्ञवल्क्योऽपि 'सवर्णेभ्यः सवर्णासु जायन्ते हि द्विजातयः' ( या० स्मृ० १ । ९० ) इत्यभिधाय 'विन्नास्वेष विधिः स्मृतः' ( या० स्मृ० १ । ९२ ) इति वदन् पत्युः सकाशादुत्पादितस्यैव ब्राह्मणादिजातिमत्त्वं निश्चिकाय । न च स्मृतिप्रसिद्धा एव ब्राह्मणादिजातयो न वेदबोधिता इति वाच्यम् । स्मृतीनां वेदमूलकत्वात् । वेदेऽपि ब्राह्मणादिजातिवाचकाः शब्दा बहुश उपलभ्यन्ते । तथाहि ऋग्वेदे 'ब्रह्माणस्त्वा शतक्रत उद्वंशमिव येमिरे' ( ऋ० १ ।१०। १ ) इति, 'पञ्च जना मम होत्रं जुषध्वम्' ( ऋ० १० । ५३ । ४ ) इति, 'यत्पाञ्चजन्यया विशा (ऋ० ८ । ६३ । ७) इति, 'त्यान् नु क्षत्रियाँ अव आदित्यान्याचिषामहे' ( ऋ० ८ । ६७ । १ ) इति च श्रूयते । पञ्चजनाः 'चत्वारो वर्णा निषादः पञ्चमः' ( नि० ३ । ८ ) इति हि नैरुक्ते व्याख्यातं यास्केन । तत्र निषाद इति सर्वासां सङ्करजातीनामुपलक्षणम् । निषादस्य सङ्कीर्णजातित्वात् । यदाह मनुः

ब्राह्मणाद्वैश्यकन्यायामम्बष्ठो नाम जायते ।
निषादः शूद्रकन्यायां यः पारशव उच्यते॥ (मनु० १० । ८) इति ।

कन्याग्रहणादूढायामित्यध्याहार्यम् । 'विन्नास्वेष विधिः स्मृतः' इति याज्ञवल्क्येन स्फुटीकृतत्वात् ।

## अथ चीनयवनादीनामुत्पत्तिकथनम् ।

अम्बष्ठनिषादादिजातिवच्छकयवनचीनादिजातयोऽपि ब्राह्मणादिवर्णेभ्य एवोद्गता इत्यार्या मन्यन्ते । यथाह मनुर्दशमेऽध्याये

शनकैस्तु[1] क्रियालोपादिमाः क्षत्रियजातयः ।
वृषलत्वं गता लोके ब्राह्मणादर्शनेन च ॥
पौण्ड्रकाश्चोड्रद्राविडाः काम्बोजा यवनाः शकाः ।
पारदाः पह्लवाश्चीनाः किराताः दरदाः खशाः ॥ इति ।
मुखबाहूरुपज्जानां[2] या लोके जातयो बहिः ।

१ इमा वक्ष्यमाणाः पौण्ड्रकादयो मूलतः क्षत्रियजातय एव राज्यलोभवशाद् दूरदेशान्तरं पराक्रान्ताः सन्तः क्रियालोपेनोपनयनादिसंस्कारकर्मलोपेन याजनाध्यापनप्रायश्चित्ताद्यर्थं ब्राह्मणानां दर्शनाभावेन च शनैः शनैर्लोके शूद्रतां प्राप्ता इत्यर्थः । पौण्ड्रका इत्यादेः पौण्ड्रादिदेशोद्भवा इत्यर्थः ।

२ ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः। ऊरु तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायतेति मन्त्रश्रवणान्मुखबाहूरुपज्जा ब्राह्मणक्षत्रियवैश्यशूद्रास्तेषां क्रियालोपादिनिमित्तेन या जातयो बहिः स्वस्वमण्डलबहिर्भूता जाता म्लेच्छभाषायुक्ता आर्यभाषोपेता वा सन्ति ते सर्वे दस्यवः स्मृताः । यथा सुवर्णस्तेयी

म्लेच्छवाचश्चार्यवाचस्ते सर्वे दस्यवः स्मृताः ॥
( मनु० १० । ४३-४५ ) इति च ।

इदमत्र विचारणीयम् । राज्यादिलोभेन देशान्तरं प्रति संक्रान्तानां शकयवनादीनां भाषास्वरूपतारतम्यपरीक्षणे क्रियमाणे पितृमातृस्वसृभ्रातृदुहितृप्रभृतयोऽनेके गीर्वाणभाषाशब्दा अपभ्रष्टाः सन्तः स्वल्पयाऽऽनुपूर्व्या विभिन्नास्तत्तद्भाषासूपलभ्यन्ते। ततश्चानुमातुं शक्यते यथा सर्वेषामेषां कदाचित्समये मूलकुटुम्बमेकमेव भवितुमर्हतीति । तदेवमनुमितार्थस्योदाहृतमिदं मानववचनद्वयं संवादकमिति। तथा चातुर्वर्ण्यातिरिक्ताः सर्वा अपि मनुष्यजातयो व्यभिचारादिदोषसम्भवाः सामान्यतो वर्णसङ्करपदेनाभ्यधीयन्त दशमेऽध्याये मनुना

व्यभिचारेण वर्णानामवेद्यावेदनेन च ।
स्वकर्मणां च त्यागेन जायन्ते वर्णसङ्कराः॥ (मनु० १०।२४) इति।

एवं च पृथिव्यां सर्वेऽपि मानवा आर्यकुलत एव समुद्भूताः, परन्तु यैर्दुर्दैववशात् स्वकर्माणि तत्यजिरे तेषामार्यत्वं प्रलुप्तं बभूवेति ध्येयम्। अत एव ब्राह्मणादय आर्यजना यत्र न निवसन्ति ते जनपदा निन्दितेन कीकटादिशब्देन व्यपदिश्यन्ते वेदे । यथा 'किं ते कृण्वन्ति कीकटेषु गावः'(ऋ० ३ । ५३ । १४) इति। व्याख्यातश्चायं मन्त्रो नैरुक्तग्रन्थे षष्ठाध्यायस्य द्वात्रिंशे खण्डे यास्केन 'किं ते कुर्वन्ति कीकटेषु गावः। कीकटा नाम देशोऽनार्यनिवासः । कीकटाः किंकृताः किं क्रियाभिरिति प्रेप्सा वा' इति ॥

## अथार्याणामुत्पत्तिकालविचारः।

अथार्यप्रजोत्पत्तेः कियान् कालः समतीयायेति चेन्नासौ कालनियमः परिच्छेत्तुं शक्यते। प्रत्यक्षादीनां प्रमाणानामनुपलम्भात्। अनुमानतोऽपि वर्षसङ्ख्यां समधिगन्तुं सद्धेतुरन्वेषणीयः। सोऽपि न कश्चिद्यथावस्थितो निर्दोषः प्रसरति। वेदेऽपि हि ब्राह्मणानामार्यपदव्यपदेश्यता श्रूयते। तथा च ऋग्वेदे तृतीयाष्टकस्य षष्ठेऽध्याये 'अहं भूमिमददामार्यायाहं वृष्टिं दाशुषे मर्त्याय' ( ऋ० ४।२६।२ ) इति। अत्र वामदेवऋषिर्निजतपोबलेन स्वात्मनि सर्वात्मतामनुभूय प्रोवाच। अहं प्रजापतिरूपः आर्यायाङ्गिरसे भूमिं दत्तवान् । अह-

धर्मापराधी तथैव क्रियालोपादिकारिणोऽपि धर्मापराधिन इति गुणयोगाल्लक्षणया दस्युपदव्यवहार्याः सन्तीति भावः।

मिन्द्ररूपः सन् दाशुषे हविर्दत्तवते मर्त्याय वृष्टिं दत्तवानिति तदर्थः। एवं च ऋग्वेदकालेऽपि आर्याणां प्रसिद्धत्वात्ततोऽपि पुरातनं किंचित्प्रमाणमार्योत्पत्तिप्रदर्शकं यद्युपलभ्येत तर्हि चिकीर्षितानुमानं सिध्येत्, तदेव तु नोपलभामहे ॥

## अथ पुरातनानामार्यजनानां विद्याशिल्पादिविज्ञाननिरूपणम् ।

स्यादेतत् । वर्त्तमानकालभवप्रजाभ्यः संवत्सरशतात् प्राक्तना जना अप्रगल्भा आसन्निति जनश्रुत्युपलम्भादतिपुरातन्यः प्रजा विद्याशिल्पादिकुशलत्वहीनाः केवलं पशुकल्पा अभूवन्निति निश्चेतुं शक्यते इति चेन्मैवम्। प्रमाणाभावात्। प्राचीनलोकस्थितिरूपदर्शकेभ्यः सकलप्रमाणवस्तुभ्यः पुरातनत्वेन सर्वसम्मताद्वेदपुस्तकात् तु तदानीन्तनानामपि जनानां विद्याशिल्पादिकुशलत्वावगमाच्च। युक्तं चैतत्। यतोऽत्र लोके मनुष्याः प्रथमं तावदन्नमाच्छादनं च नियमेन कामयन्ते ततो निवासाय सदनमित्येवं क्रमः सर्वानुभवसिद्धः। एतत्त्रितयलाभेन निर्व्यूढदेहयात्राः कलत्रपुत्रादिसुखं कामयमाना जना यं यं काममविन्दन्त तत्र तत्रालंबुद्धिविधुराः सांसारिकसुखविवृद्धये निजनैसर्गिकस्वभावत एव नानाविधोद्यमेषु सयत्नाः सन्तो यथेदानीन्तनाः समधिगतविविधविद्याशिल्पादिकौशला उपलभ्यन्ते तथैव पुरातना अपि जना निजनैसर्गिकस्वभाववशादेव स्वस्वबुद्ध्यनुसारेण प्रवर्त्तमानाः सन्तोऽधिगतविद्याशिल्पादयो बभूवुरिति प्रत्येतुं शक्यते।

प्रोक्तार्थप्रत्यायकानि कानि चिद्वेदवाक्यान्युदाह्रियन्ते । यथा ऋग्वेदतृतीयाष्टकस्याष्टमेऽध्याये 'शुनं वाहाः शुनं नरः शुनं कृषतु लाङ्गलम्' ( ऋ० ४ । ५७ । ४ ) इति श्रूयते । वाहा बलीवर्दाः शुनं सुखं यथा स्यात्तथा भारं वहन्तु। नर इति नृशब्दस्य प्रथमाबहुवचनान्तम्। कर्षुका नराः शुनं यथा स्यात्तथा कृषिकर्म कुर्वन्तु। लाङ्गलं नाम अयोमुखं भूविदारकं काष्ठं कृषतु भुवं विदारयत्वित्यर्थः। अत्राद्यवाक्यद्वये क्रियापदयोरश्रवणेऽप्यौचित्यादध्याहर्त्तव्ये।

सामर्थ्यमौचिती[1] देशः कालो व्यक्तिः स्वरादयः।

---

१ सामर्थ्यं निर्दिष्टजननशक्तिः कारणता वा । औचिती प्रकृतोपयोगित्वं योग्यता वा। देशः समभिव्याहृतप्रदेशः । कालः समभिव्याहृतदिनरात्र्यादिः । व्यक्तिः शब्दस्य पुंस्त्वादि लिङ्गम् । स्वर उदात्तादिः । शब्दार्थस्यानवच्छेदे तात्पर्यसन्देहे तदपाकरणद्वारेण विशेषस्मृतिहेतवो निर्णयहेतव इत्यर्थः। अत्र विशेषस्तु साहित्यदर्पणस्य द्वितीयपरिच्छेदे द्रष्टव्यः। ( मं० दे० शा० )।

शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः ॥ ( वाक्यप० का० २ )

इति सिद्धान्तात्। यथा

यश्च निम्बं परशुना यश्चैनं मधुसर्पिषा ।
यश्चैनं गन्धमाल्याद्यैः सर्वस्य कटुरेव सः ॥

इति पद्ये छिनत्ति सिञ्चति अर्चतीति क्रियापदानामौचित्याद्ध्याहारस्तथा प्रकृतश्रुतिवाक्ययोरपीति बोध्यम्। तथा ऋग्वेदप्रथमाष्टकस्य द्वितीयेऽध्याये—

स्योना पृथिवि भवानृक्षरा निवेशनी ।
यच्छा नः शर्म सप्रथः ॥ ( ऋ० १ । २२ । १५ ) ।

इति श्रूयते। हे पृथिवि त्वमस्मान् प्रति स्योना शिवा अनृक्षरा निष्कण्टका निवेशनी स्थानप्रदा च भव, किंच नोऽस्मभ्यं सप्रथो विशालं शर्म गृहं यच्छ देहीत्यर्थः । भव यच्छेत्यनयोः पदयोः संहिताकाले दीर्घश्छान्दसः । एवमादिश्रुतिवाक्यपर्यालोचनया तदानीन्तना जनाः कृष्यादिना विविधानि धान्यानि समुत्पाद्य गिरिकाननादौ ग्रामनगरादौ वा सदनान्याबध्य निजनिर्वाहं चक्रुरिति प्रतीयते । न च तदानीं पुरग्रामादिव्यवस्था नासीदिति वाच्यम्।

शतमश्मन्मयीनां पुरामिन्द्रो व्यास्यत् ।
दिवोदासाय दाशुषे ( ऋ० ४ । ३० । २० )

इति ऋग्वेदतृतीयाष्टकस्य षष्ठाध्यायगतायां श्रुतौ पाषाणचितानां पुरां नगरीणां शतं दिवोदासनाम्ने दाशुषे निजयाजकायेन्द्रो व्यास्यद्दत्तवानिति स्फुटमभिधानात्। तथा ।

इमां रुद्राय तवसे कपर्दिने क्षयद्वीराय प्रभरामहे मतिम् ।
यथा नः शमसद् द्विपदे चतुष्पदे विश्वं पुष्टं ग्रामे अस्मिन्ननातुरम् ॥

[ तै० सं० ४ । ५ । १० ] इति कृष्णयजुर्वेदस्य चतुर्थकाण्डस्य पञ्चमाध्यायगतश्रुतिवाक्ये ग्रामपदश्रवणाच्च । श्रुत्यर्थस्तु। नोऽस्माकं द्विपदे मनुष्यवर्गाय भार्यापुत्रादिरूपाय चतुष्पदे पशुवर्गाय गवाश्वमहिष्यादिरूपाय च शं सुखम् असत् स्यात्। किंचास्मिन् ग्रामे विश्वं सर्वं प्राणिजातं पुष्टं सुखपूर्णमनातुरमुपद्रवरहितं च यथा भवेत्तथा वयं रुद्राय देवाय इमां मतिं पूजाध्यानादिविषयां बुद्धिं प्रभरामहे प्रकर्षेण पोषयामः। कीदृशाय रुद्राय तवसे बलवते कपर्दिने जटाबन्धयुक्ताय तापसाय वा क्षयद्वीराय क्षीयमाणप्रतिपक्षायेति । अपि च ऋग्वेदे प्रथमाष्टकस्य द्वितीयेऽध्याये 'तद्दन्नासत्याभ्यां परिज्मानं

सुखं रथम्' [ऋ० १।२०।३] इति श्रूयते। अश्विनीकुमारार्थमृभवः सुखं सुखकारकं परिज्मानं सर्वतःसञ्चरणक्षमं रथं तक्षन्निर्मितवन्त इति तदर्थः। एवं तत्र तत्रर्ग्वेदमन्त्रेषु तन्तुवायकर्मारादिसम्बन्धिशिल्पक्रियाणां रूपकविधया दृष्टान्तमर्यादया वोपन्यासात्, कृष्णयजुःसंहितायाश्चतुर्थकाण्डे षष्ठ[?]प्रपाठके 'वाजश्च मे प्रसवश्च मे प्रयतिश्च मे प्रसितिश्च मे' [तै० सं० ४।७।१] इत्यादिश्रुतिवाक्यकदम्बेन संसारोपयोगिनां नानाविधवस्तूनामभ्यर्थनीयत्वेनोपन्यासाच्च विविधशिल्पक्रियाणामनेकवस्तूनां च प्रकृष्टः परिचयः प्राचां बभूवेति निश्चीयते। नहि खपुष्पशशविषाणादयोऽलीकपदार्थाः कस्यापि कदाप्याशाविषया भवितुमर्हन्ति। तेषामत्यन्तासत्त्वेन परिचयायोग्यत्वात्। वर्णनाभ्यर्थनादिकं च स्वविषयभूतवस्तूनामुत्पादिका विविधशिल्पक्रियाः समाक्षिपति। जन्यस्य वस्तुजातस्याकस्मादुद्भूतस्याननुभवेनानुपपद्यमानत्वेन च यथायोग्यकारणसामग्र्या अवश्यापेक्षणीयत्वात्।

भूयसा[1] वस्नमचरत्कनीयोऽविक्रीतो अकानिषं पुनर्यन्।
स भूयसा कनीयो नारिरेचीद्दीना दक्षा वि दुहन्ति प्र वाणम्॥
[ऋ० ४।२४।९]

इति ऋग्वेदे तृतीयाष्टकस्य षष्ठाध्याये श्रूयते। तथा[2] तत्रैव वेदे प्रथमाष्टकस्य द्वितीयेऽध्याये।

वेदा यो वीनां पदमन्तरिक्षेण पतताम्।
वेद नावः समुद्रियः॥ (ऋ० १।२५।७) इति।

---

१ कश्चिद्विक्रेता भूयसा बहुमूल्येन वस्तुना कनीयः स्वल्पतरं वस्नं मूल्यम् अचरत्कृतवान्। ततश्च यन् एतीति यन् क्रेतारं प्रति गच्छन् सन्, अविक्रीतः द्रव्यविनिमयेनायं पदार्थस्तुभ्यं मया न दत्तः, पुनः अकानिषम् अधिकं वनं लब्धुं कामये। स पूर्वोक्तरीत्या विवदमानो विक्रेता भूयसा स्वरूपतो बहुमूल्यवस्तुनापि कनीयः विक्रयसमये स्वयमङ्गीकृतमल्पतरमपि मूल्यं नारिरेचीत् न वर्द्धयितुं शक्नुयात्। तत्र हेतुमाह चरमपादेन। दीना असमर्था दक्षाः समर्था वा प्र वाणं प्रतिपन्नं वचनं विदुहन्ति विशेषेण स्वेष्टप्रपूरणायावलम्बन्ते इत्यर्थः। वाचनिकेषु क्रयविक्रयव्यवहारेषु वचनमेव स्वत्वस्योत्पत्तौ निवृत्तौ वा निमित्तमिति भावः।

२ यो वरुणदेवः अन्तरिक्षेणाकाशमार्गेण पततां गच्छतां वीनां पक्षिणां पदं गम्यस्थानं वेद, तथा समुद्रियः सागरान्तर्वर्त्ती वरुणदेवः नावो नौका वेद जानातीत्यर्थः।

तथा अष्टमाष्टकस्य द्वितीयेऽध्याये ।

सुत्रामाणं पृथिवीं द्यामनेहसं सुशर्माणमदितिं सुप्रणीतिम् ।
दैवीं नावं स्वरित्रामनागसमस्रवन्तीमा रुहेमा स्वस्तये ॥
( ऋ० १० । ६३ । १० )

इति च श्रूयते । एवं तत्र तत्र मन्त्रेषु बहुशो वाणिज्यव्यवहारनिबन्धनाः क्रयविक्रयादिक्रिया नौकायानादिक्रियाश्च वर्णिता उपलभ्यन्ते । ततश्च तथाविधव्यापारा अपि तदानीन्तनैरनुसृता बभूवुरिति स्फुटमेवावगम्यते ।

अथोपस्थिते सङ्ग्रामप्रसङ्गे लोहमयकवचेन गुप्तगात्रस्य शत्रुपराजयाय समुद्यतस्य राज्ञः स्वरूपं धनुर्बाणाः सैनिकवीराश्चेत्येवमादिरूपा सङ्ग्रामसामग्री ऋग्वेदे पञ्चमाष्टकस्य प्रथमेऽध्याये

जीमूतस्येव भवति प्रतीकं यद्वर्मी याति समदामुपस्थे ।
अनाविद्धया तन्वा जय त्वं स त्वा वर्मणो महिमा पिपर्त्तु ॥
( ऋ० ६ । ७५ । १ )

इत्यादिमन्त्राणां वर्गद्वयेन वर्णिता श्रूयते । तथा अष्टमाष्टकस्य पञ्चमाध्यायेऽपि

अस्माकमिन्द्रः समृतेषु ध्वजेष्वस्माकं या इषवस्ता जयन्तु ।

---

१ वयं यजमाना दैवीं नावमारुहेम । दिवः स्वर्गस्य इमां दैवीं द्युलोकप्रापिकां यज्ञमयीं नौकां स्वस्तये कल्याणार्थमारोहामः । प्रकृतां नावं विशिनष्टि—सुत्रामाणं सुष्ठुत्रायमाणां संरक्षणकर्त्रीमिति यावत् । पृथिवीं विशालां द्यां द्योतमानामनेहसं समयप्राप्तां सुशर्माणं सुष्ठुशरणभूतामदितिमखण्डितां सुप्रणीतिं सुष्ठुरीत्या गम्यस्थानप्रापिकां स्वरित्रां शोभनमरित्रं केनिपातकं महाराष्ट्रभाषया सुकाणुपदव्यपदेश्यं यस्यास्तथाविधाम् । अनागसं निर्दोषाम् अस्रवन्तीम् अन्तः प्रविशज्जलस्रावरहितां सूक्ष्मच्छिद्रैरपि वर्जितामिति यावत् ।

२ हे राजन् यत् यदा भवान् वर्मी कवचावृतवपुः सन् समदां सङ्ग्रामाणामुपस्थे मध्ये यासि गच्छति तदा तव प्रतीकं वपुः जीमूतस्येव भवति । यथा निदाघपरितापशामकशीतलजलपूर्णस्य मेघस्य श्यामलं वपुः प्रचण्डमपि सर्वलोकानुग्राहकं तथा परचक्रपरितापशामकशौर्यपूर्णस्य तवापि लोहकवचावृतत्वेन श्यामलं वपुः प्रजानुग्रहायैव भवतीत्युपमातात्पर्यम् । अतस्त्वमनाविद्धया तन्वा अक्षतेन देहेन जय सर्वथा विजयमाप्नुहि । स तथाविधो वर्मणः कवचस्य महिमा त्वां पिपर्त्तु पालयत्वित्यर्थः ।

३ इन्द्रोऽस्माकं ध्वजेषु समृतेषु सङ्गतेषु शत्रुसेनाध्वजैः सम्मिलितेषु सत्स्विति यावत् । जयमावहत्विति शेषः । समृतशब्दः सम्पूर्वकाद् ऋगताविन्य-

अस्माकं वीरा उत्तरे भवन्त्वस्माँ उ देवा अवता हवेषु
( ऋ० १० । १०३ । ११ )

इत्यादयो मन्त्राः सङ्ग्रामख्यापकाः पठ्यन्ते । तथा ऋग्वेदे चतुर्थाष्टकस्य प्रथमेऽध्याये

के ते अग्ने रिपवे बन्धनासः के पायवः सनिषन्त द्युमन्तः ।
के धासिमग्ने अनृतस्य पान्ति क आसतो वचसः सन्ति गोपाः॥
( ऋ० ५ । १२ । ४ )

इति श्रूयते । तथा ऋग्वेदचतुर्थाष्टकस्य द्वितीयेऽध्याये

न स राजा व्यथते यस्मिन्निन्द्रस्तीव्रं सोमं पिबति गोसखायम् ।
आ सत्वनैरजति हन्ति वृत्रं क्षेति क्षितीः सुभगो नाम पुष्यन्॥
( ऋ० ५ । ३७ । ४ )

इति श्रूयते ।

किंच कृष्णयजुःसंहिताया प्रथमकाण्डे द्वितीयप्रपाठकस्य नवमानुवाके राजसूययज्ञाङ्गत्वेनानुष्ठेयं रत्निहोमाख्यं कर्म्म विधीयते। तच्च कर्म्म द्वादशभिरहोभिः साध्यम् । तत्र प्रथमेऽहनि यजमानो

स्माद्धातोः कर्तरि क्तप्रत्ययेन सिद्धः । अस्माकमिषवो बाणा जयन्तु । अस्माकं वीरा योद्धारः उत्तरे उत्कर्षवन्तो भवन्तु। हे देवा यूयमाहवेषु युद्धेषु अस्मानवत रक्षतेत्यर्थः ।

१ हे अग्ने ये पुरुषा रिपवे बन्धनासः शत्रुं निबध्नन्ति ते के इति प्रसिद्ध-विषयकः प्रश्नः । ते त्वदीयभक्ता एवेत्युत्तरं प्रसिद्धत्वादनुक्तमध्याहृत्य बोध्यम् । एवमग्रिमवाक्येषूहनीयम् । यद्वा हे अग्ने ते प्रसिद्धास्त्वदुपासकाः के किंविधाः सन्तीति न वक्तुं शक्यते । यतस्ते रिपवे बन्धनासः शत्रुं निबध्नन्ति । पायवः पालका द्युमन्तस्तेजस्विनः सनिषन्त दीनेभ्यो दानमकुर्वत । किंच हे अग्ने अनृतस्य धासिमसत्यस्य पोषकम् अनृतभाषणशीलमिति यावत् । के पान्ति सत्यभाषित्वं ग्राहयित्वा के रक्षन्ति । तथा असतः कुत्सिताचारान् वचसः सदुपदेशवचनेन । तृतीयार्थे व्यत्ययेन षष्ठी । गोपाः पालकाः के सन्ति । त्वद्भक्ता एवैवंभूता नान्ये इति भावः । आसत इत्यत्र संहिताकाले दीर्घश्छान्दसः । पदकाले असत इत्येव पदकाराः पठन्ति ।

२ यस्य राज्ञो यज्ञे गोसखायं दुग्धादिरसमिश्रं तीव्रं मादकं सोममिन्द्रः पिबति स राजा न व्यथते न दुःखमनुभवति । सत्वनैर्बहुजनैः सह आ समन्तात् अजति देशेषु सञ्चरति वृत्रं शत्रुं हन्ति । क्षितीर्ब्राह्मणादिप्रजाः क्षेति व्याप्नोति। सुभगः शोभनैश्वर्यसम्पन्नः पुष्यन् सर्वसमृद्धिपुष्टो भवतीत्यर्थः । नामेति निश्चयार्थे वाक्यालङ्कारे वा ।

ब्राह्मणगृहं गत्वा बृहस्पतिचरुणा यजते श्वेतपृष्ठं च वृषभं यज्ञाङ्गदक्षिणात्वेन ददाति। ततो द्वितीयेऽहनि क्षत्रियस्य गृहं, तृतीयेऽहनि महिष्याः, चतुर्थेऽहनि वावातायाः, पञ्चमेऽहनि परिवृक्तेः, षष्ठेऽहनि सेनापतेः, सप्तमेऽहनि सारथेः, अष्टमेऽहन्यन्तःपुराध्यक्षस्य, नवमेऽहनि ग्रामण्यः, दशमेऽहनि सङ्ग्रहीतुः, एकादशेऽहनि भागदुघस्य, द्वादशेऽहनि द्यूतकारस्य, गृहं गत्वा श्रुत्युक्ततत्तद्धविर्भिः श्रुत्युक्ततत्तद्देवता यजमानो यजते इत्युक्तम्। तत्र कृताभिषेका राजपत्नी महिषी, प्रिया राजपत्नी वावाता, अप्रिया राजपत्नी परिवृक्तिरित्यभिधीयते। ग्रामस्य नेता राजनियुक्तोऽधिकारी ग्रामणीः, कोशाध्यक्षः सङ्ग्रहीता, षष्ठांशादिरूपं राजग्राह्यभागं यो दोग्धि प्रजाभ्य आदत्ते स भागदुघ इत्युच्यते। अवशिष्टं स्पष्टम्।

एवं चैवमादिश्रुतिवाक्यपर्यालोचनया तदानीन्तना आर्यजनास्तेजस्विनः प्रजापालनदक्षा दीनानुकम्पिनः सन्मार्गप्रवर्त्तकाः शूराः शत्रुपराजयकुशलाः सर्वसुखेभ्यो विजयसुखं बहु मन्यमाना महोदारचरित्रा उत्तमायां पदव्यामवर्त्तिषतेति स्फुटमेव प्रतीयते। नहि वैदिकैः शब्दकदम्बैरभिव्यञ्जितान्युदारकृत्यानि क्षुद्राणां नरपशूनां सम्भवन्ति। किञ्च लोकोपद्रवकारिणश्चोरजारपिशुनपाखण्डिनो निगृह्य देशविप्लवकारिणः क्रूरखलान् संहृत्य सन्मार्गानुवर्त्तिनी प्रजा निजकुटुम्बवत्परिपाल्येत्येवं लोकहितं विधाय स्वस्थमनसो राजानो राजसूयादिभिर्महामखैर्देवान् यजन्तो बहव ऋग्वेदादौ सङ्कीर्त्तिताः श्रूयन्ते। ततश्चावगम्यते राजनीतिरपि तत्कालोचिता समीचीनैव तदानीमासीदिति। एवं स्थिते केचिदर्वाञ्चः स्वमनीषया यथेष्टं कल्पयित्वा पुरातनजनानामारण्यकपशुप्रायतां कथयन्ति तत्प्रमाणविधुरं वेदितव्यम्॥

## अथ प्रसङ्गात् वर्णलिपिसमुद्भवविचारः।

अथास्यामीश्वरसृष्टौ प्रादुर्भवन्तो भावा भास्करादिप्रकाशेन यथा सुपरिचिता भवन्ति तथा ब्राह्मीसृष्टौ[1] प्रादुर्भवन्त्यो विविधविद्या अपि वर्णलिपिप्रकाशेनैव परिचयविषयाः संजायन्ते। नान्यथा। यद्यपि प्रतिभाविशिष्टाभिर्विद्वन्मनोवृत्तिभिः[2] प्रकाश्यमाना एव विविधोदारविचारा विद्यारूपेण परिणमन्ति, तथापि तेषां चिरकालमवस्थितिर्वर्णलिपिप्रकाशायत्तैव। मनोवृत्तीनां क्षणिकत्वेन चिरकालमेकरूपतयाऽवस्थानासम्भवात्। तथा च क्षणभङ्गुराभिस्ताभिः

१ सरस्वती। २ नवनवोन्मेषशालिता।

प्रकाशिता विद्या अपि स्वप्रकाशिकानां वृत्तीनां विलये सति अज्ञानान्धतमसावृताः सत्यो न कदाप्यभिव्यक्तिं प्राप्नुयुः । तस्मादपेक्षितसमये तासामभिव्यक्तये नियमेनापेक्षित एव वर्णलिपिप्रकाशः । तथा च निखिलाविद्याभासां निधेर्वेदभास्करस्योदयो नहि वर्णलिप्यरुणोदयं विना सम्भवतीति निपुणमवधातव्यम् ।

अत्र विषये शर्मण्यदेशीयो भट्टमोक्षमूलराभिधः पण्डितो यः सायनाचार्यप्रणीतमृग्वेदभाष्यं संशोध्य मुद्रयित्वा च यूरोपखण्डे प्रसिद्धिमनयत् स प्रत्यवतिष्ठते । तद्यथा—भरतखण्डवासिनामार्यजनानां वर्णलिपिपरिचयो वेदकालमारभ्य सूत्रकालपर्यन्तं न बभूव । पुरातनैरार्यजनैर्हि शब्दकदम्बरूपो वेदराशिर्गुरुपरम्परया यथाश्रुतमधीयमानः श्रवणेन्द्रियविषयतयैवानुबभूवे । अत एवास्य श्रुतिरिति नामधेयं तैः प्रख्यापितम् । लिपिसद्भावे तु पुस्तकरूपेण दर्शनविषयताऽपि वेदस्य सम्भाव्यते । ततश्च 'श्रुति'संज्ञा निरालम्बा स्यात् । किञ्च येषां जनानां वर्णलिपिपरिचयो भवेत्तत्कृतनिबन्धेषु लिपिसूचकपदघटितो वाक्यप्रयोगोऽकल्पितोऽपि यथाकथंचित्प्रसङ्गवशादुपजायेतैव । यत एवंविधः कोपि सामर्थ्यविशेषो लिपिकलायामस्तीति संप्रतीतम् । वेदनिबन्धेषु तु 'गायन्ति', 'अवोचाम', 'अधीते', 'अनुब्रूयात्' इत्येवं वाक्यप्रयोगा वाग्व्यापारसूचका उपलभ्यन्ते; न तु लेखनपद्धत्यनुमापका 'लिखति','वाचयति', 'अक्षराणि', 'वर्णाः','पत्रं','लेखनी' इत्येवमादयः । एवमेव पाणिनिसूत्रपाठपर्यन्तेषु ग्रन्थेषु क्वापि लेखनपद्धत्यनुमापकपदप्रयोगाभावाद्वेदकालमारभ्य सूत्रकालपर्यन्तं वर्णलिपिर्नोदीयायेति ।

अत्र ब्रूमः—यदि वेदानां 'श्रुति'रित्याकारकं नामधेयमुक्तरीत्या वेदकाले वर्णलिप्यभावमनुमापयेत्, तदा मन्वादिप्रणीतग्रन्थानां स्मृतिरित्याकारकनामधेयतोऽपि स्मृतिकाले तथाविधानुमानमापद्येत । उभयोर्नामधेयपदयोः समानतात्पर्येण प्रयुज्यमानत्वात् । तथाहि—पूर्वपूर्वमहर्षिभ्यः श्रुता ये ये मन्त्रसूक्तादयो वेदविभागास्ते सर्वे उत्तरोत्तरैः ऋषिभिः संगृह्य तत्तद्वेदसंहितारूपेणोपनिबद्धा इति स्वकारणीभूतश्रुतिवाचकपदेन कार्यभूतानां तत्तद्वेदनिबन्धानामपि यथा व्यवहारस्तथैव नानावेदशाखासूपदिष्टान् विविधधर्म्मान् स्मारं स्मारं मन्वादिभिः प्रणीतानां तत्तद्धर्मसंहिताग्रन्थानां स्वकारणीभूतस्मृतिवाचकपदेन व्यवहारः समजनीति । न च स्मृतिकालेऽपि वर्णलिपिर्नासीदिति वाच्यम् । स्मृतिग्रन्थेषु लेख्यप्रकरणस्यो-

पन्यासात्। यत्तु लिखति वाचयतीत्यादिप्रयोगाणां वेदेष्वनुपलम्भात्तत्काले लिप्यभावानुमानमित्युक्तम्, तन्न विचारसहम्। वेदानां यज्ञादिधर्मावबोधनार्थं प्रवृत्तत्वेन यज्ञियद्रव्यदेवतागुणस्तवनादेरेव वर्ण्यतया लिखतीत्यादिप्रयोगाणां तत्रानुपयुक्तत्वात्। नहि याज्ञे कर्म्मणि पुस्तकलेखनादिकमुपयुज्यते। प्रत्युत पुस्तकसहायतया सूक्तमन्त्रपाठादिकं याज्ञे कर्म्मणि वैगुण्यापादकमेव। यतो वाचनार्थमवश्यापेक्षणीयेन पुस्तकेन सह मनश्चक्षुषोः सन्निकर्षे जायमाने चक्षुरिन्द्रियद्वारा बहिःप्रवणाया मनोवृत्तेर्मन्त्रप्रतिपाद्यदेवतायामेकतानता भज्येत। अत एव केवलवागिन्द्रियसहायतयैव यज्ञकर्म्मणि सूक्तमन्त्रजपादिसम्प्रदायो मूलत एव प्रववृते। तथा संप्रत्यपि याज्ञिकधुरीणाः कर्म्मकाले पुस्तकं नावलोकयन्ति। अथ वेदगतैरधीयते इत्यादिपदप्रयोगैरध्ययनादि प्रतीयते, तच्च केवलं मुखपाठक्रमेणैव न पुस्तकसहायतयेति नियमो न वक्तुं शक्यते। महतः शब्दवारिधेर्वेदराशेरध्ययनाध्यापनयोर्वाङ्मात्रेण सम्भावयितुमशक्यत्वेनोक्तनियमस्य कल्पयितुमशक्यत्वात्। किञ्च।

उत त्वः पश्यन् न ददर्श वाचमुत त्वः शृण्वन् न शृणोत्येनाम्
उतो त्वस्मै तन्वं वि सस्रे जायेव पत्य उशती सुवासा। (ऋ० १०।७१।४)।

इति ऋग्वेदे दशममण्डले श्रूयते। इयमृक् पूर्वार्द्धेनाविद्वांसम्, उत्तरार्द्धेन तु विद्वांसमाचष्टे। अत्र प्रयुक्तस्त्वशब्दः सर्वादिगणे पठितोऽन्यपर्यायः। उतशब्दस्तु अपिशब्दार्थकमव्ययम्। तथा च त्वो नाम कश्चिदन्यः पुमान् वाचं पश्यन्नपि न पश्यति। अविदुषा पुस्तकरूपेण दृष्टाऽपि वागदृष्टैव। वाचनाभावादिति भावः। एतेन वेदकाले लिपिसद्भावोऽवगम्यते। अन्यथा वाचश्चाक्षुषविषयत्वाभावेन दृशिकर्म्मत्वानुपपत्तेः। तथा त्वोऽन्यः पुमान् एनां वाचं शृण्वन्नपि न शृणोति। परेण वाचिता सती श्रुताप्यश्रुतकल्पैव। अर्थज्ञानाभावादिति तात्पर्यम्। त्वस्मै अन्यस्मै विदुषे तन्वं निजमूर्त्तिं शब्दार्थोभयात्मिकां विसस्रे समर्पयति। वागिति शेषः। तत्र दृष्टान्तमाह। पत्ये सुवासाः शोभनवस्त्रादिभूषिता उशती कामयमाना जायेवेति श्रुत्यर्थः।

यदप्युच्यते—कतिपयानां वेदशाखानामुच्छेदो विद्यमानासु शाखासु तत्र तत्र पाठभेदो वर्णलिप्यभावमूलक एव। लिपिसद्भावे तु लिखितपुस्तकानामाश्रयेण सर्वासां शाखानां समान-

पाठस्य चावस्थानं सम्भवेदिति। तदपि निःसारम्। स्मृतिकालमारभ्यैतत्कालपर्यन्तं लेखनपद्धतेर्निःसन्देहमविच्छिन्नानुवृत्तिसत्त्वेऽपि बहूनां स्मृतिपुराणकाव्यादिग्रन्थानामुच्छेददर्शनात्। प्रवरेषु ग्रन्थेषु संवादार्थं तत्र तत्रोपन्यस्तैस्तत्तन्नामभिरेव तेषां ग्रन्थानां भूतत्वावगमात्। सम्प्रति विद्यमानग्रन्थेष्वपि नानाविधपाठदर्शनाच्च। अत्रोदाहरणमाबालप्रसिद्धं प्रदर्श्यते। यथा रघुवंशकाव्यस्य द्वितीयसर्गे 'विस्मापयन्विस्मितमात्मवृत्तौ भूपालसिंहं निजगाद सिंहः' (रघु० २। ३३) इति पद्ये विस्माययन्नित्येव पाठ इति केचित्, विस्मापयन्नित्येव पाठ इत्यन्ये वदन्ति। स्पष्टं चेदं सिद्धान्तकौमुद्या उत्तरार्द्धे 'भीस्म्योर्हेतुभये' (अष्टा० १। ३। ६८) इति सूत्रव्याख्याने। यथा वा तत्र काव्ये चतुर्थसर्गे 'इक्षुच्छायनिषादिन्यः शालिगोप्यो जगुर्यशः' (रघु० ४। २०) इति पाठः। 'इक्षुच्छायानिषादिन्य' इति पाठे त्वाकप्रश्लेषो बोध्य इति वदन्ति। स्पष्टं चेदं सिद्धान्तकौमुद्याः पूर्वार्द्धे 'छाया बाहुल्ये' (अष्टा० २। ४। २२) इति सूत्रव्याख्याने।

अथाऽकाराद्यक्षरवाचकोऽक्षरशब्दोऽपि वेदे प्रयुज्यमान उदाह्रियते। यथा ऐतरेयब्राह्मणस्य प्रथमपञ्चिकायां द्वितीये (?) खण्डे 'तदाहुर्यदेकादशकपालः पुरोळाशो द्वावग्नाविष्णू कैनयोस्तत्र क्लृप्तिः का विभक्तिरिति। अष्टकपाल आग्नेयोऽष्टाक्षरा वै गायत्री, गायत्रमग्नेश्छन्दस्त्रिहींदं विष्णुर्विचक्रमत सैनयोस्तत्र क्लृप्तिः सा विभक्तिः'[1][2] (ऐ० ब्रा० १। १) इति पठ्यते। अत्र 'अष्टाक्षरा गायत्री' इति गायत्र्याः पादमाश्रित्योक्तम्। त्रिपदायाः सकलगायत्र्यास्तु चतुर्विंशत्यक्षराणि भवन्तीति ध्येयम्। तथाऽस्मिन्नेव ब्राह्मणे प्रथमाध्यायस्य पञ्चमखण्डे—'अनुष्टुभौ स्वर्गकामः कुर्वीत द्वयोर्वा अनुष्टुभोश्चतुःषष्टिरक्षराणि' (ऐ० ब्रा० १। ५) इति

१ दीक्षणीयेष्टौ प्रधानदेवते अग्नाविष्णू एकादशकपालपुरोडाशेन यजनीये इत्युक्तम्। तत्र शङ्कते—द्वयोर्देवतयोरेकः पुरोडाश एकादशसु कपालेषु संस्कृतो विधीयते। तत्र कपालेष्वनयोः का क्लृप्तिः कीदृशी कल्पना का च विभक्तिः कथं वा विभाग इति। समाधत्ते—अष्टकपाल आग्नेय इत्यादिना। अग्निदेवताकपुरोडाशस्याष्टाकपालत्वे हेतुमाह—अष्टाक्षरा गायत्रीत्यादिना। वैष्णवपुरोडाशस्य त्रिकपालत्वे हेतुमाह—त्रिर्हीत्यादिना। इदं त्रिरवमित्यर्थः। स्पष्टमन्यत्।

२ मुद्रितपुस्तकेषु तु एतत्सन्दर्भगतानाम् 'अष्टकपाल', 'त्रिहींदं', 'विचक्रमत' इत्येतेषां स्थाने यथाक्रमम् 'अष्टाकपाल', 'त्रिकपालो वैष्णवस्त्रिर्हीदं,' 'व्यक्रमत' इत्येवं पाठः (सं०दे०शा०)।

श्रूयते । तथा शुक्लयजुर्वेदस्य त्रयोविंशाध्यायेऽश्वमेधप्रकरणे 'कत्यस्य विष्ठाः कत्यक्षराणि' ( वा० सं० २३ । ५७ ) इत्यादिः प्रश्नमन्त्रः, 'षडस्य विष्ठाः शतमक्षराणि' (वा० सं० २३। ५८) इत्युत्तरमन्त्रश्चेति मन्त्रद्वयं श्रूयते । तत्रोत्तरमन्त्रस्यायमर्थः—अस्य यज्ञस्य विष्ठा अङ्गानि षट् मधुराम्लादिषड्रसरूपाणीत्यर्थः। अक्षराणि व्यञ्जनसहिताऽऽरूपाणि शतसंख्याकानीति । ननु मन्त्रसमूहसाध्यस्य यज्ञस्य कथं शतमक्षराणि भवेयुरिति चेदत्र भाष्यानुसारि समाधानमुच्यते । याज्ञे कर्मणि विनियुज्यमानानां गायत्र्यादिच्छन्दसां मध्ये प्रथमान्तिमयोर्द्वितीयोपान्त्ययोस्तृतीयोपान्त्यसमीपयोरित्येवंरूपेण युग्मभावापन्नयोर्द्वयोर्द्वयोर्मन्त्रयोर्यज्ञेषु विनियोगादेकैकस्य युग्मस्य शतमक्षराणि भवन्तीति तात्पर्येण 'शतमक्षराणी' त्युक्तम् । तथाहि—गायत्र्या अक्षराणि चतुर्विंशतिः (२४), अतिधृतेः षट्सप्ततिः (७६), संकलनयाऽक्षराणि शतम् (१००)। एवमुष्णिहः २८, धृतेः ७२। अनुष्टुभ. ३२, अत्यष्टेः ६८ । बृहत्याः ३६, अष्टेः ६४ । पङ्क्तेः ४०, अतिशक्कर्याः ६० । त्रिष्टुभः ४४, शक्कर्याः ५६ । जगत्याः ४८, अतिजगत्याः ५२ । इति वेदितव्यमिति ।

तथा ऐतरेयब्राह्मणस्य प्रथमपञ्चिकाया एकविंशे खण्डे 'इत्यैतरेवैनं तत्कामैः समर्धयतीति नु पूर्वं पटलम्' इति स्थितम् । अत्र वाक्ये ग्रन्थावयववाची पटलशब्दः प्रयुज्यमानः श्रूयते । ततश्च तस्मिन् काले भूर्जपत्रादौ लेखनसंप्रदाय आसीदिति गम्यते । एवं शतपथब्राह्मणस्याष्टमे काण्डे चयनप्रकरणे छन्दस्यासंज्ञकेष्टकानामुपधानं श्रूयते 'अथ छन्दस्या उपदधाती' त्यादिना । तत्र च 'छादनाच्छन्द' इति छन्दःशब्दस्य व्युत्पत्तिरपि दर्शिता । ततोऽप्यवगम्यते छादनशीलेषु वृक्षादीनां त्वक्पत्रादिषु तदानीन्तनो लेखनसम्प्रदाय इति । ऋग्वेदेऽपि छन्दःशब्दो बहुशः प्रयुज्यमानोऽस्ति। किञ्च शुक्लयजुर्वेदस्य पञ्चदशेऽध्याये 'एवश्छन्दो वरिवश्छन्दः' ( वा० सं० १५ । ४) इत्यादिमन्त्रः श्रूयते। तत्र क्षुरभ्रजश्छन्द इति पदं पठितमस्ति। स चायं मन्त्रो विराट्स्वरूपभावनातात्पर्येण 'एवश्छन्दो भूलोको, वरिवश्छन्दोऽन्तरिक्षलोक' इत्यादिप्रकारेण शतपथब्राह्मणस्याष्टमे काण्डे चयनप्रकरणे व्याख्यातः । मन्त्रोक्तानां छन्दोनाम्नां प्रसिद्धार्थास्तु स्पष्टत्वान्न प्रदर्शिताः । तत्र क्षुरभ्रजशब्दस्य 'क्षुरेण लेखसाधनेन भ्राजते दीप्यते प्रकाशते' इतिव्युत्पत्तिसिद्धोऽर्थो लोकप्रसिद्ध एव । 'क्षुर विलेखने' इत्यस्माद्धातोः क्षुरशब्दस्य 'भ्राजदीप्ता' वित्य-

स्माच्च भ्रजशब्दस्य निष्पन्नत्वात्। एवं चाक्षरघटितच्छन्दसां क्षुरशलाका प्रकाशिका। ततश्चाक्षरलिपेस्तदानीन्तनं साधनं क्षुरशलाकेत्यवगम्यते। किञ्च शतपथब्राह्मणस्य दशमे काण्डे 'अथ सर्वाणि भूतानि प्रैक्षत् स त्रय्यामेव विद्यायाम्' ( श० ब्रा० १० । ४ । २ ) इत्यादिना वेदत्रयस्य संवत्सरप्रजापतिना साम्यं प्रतिपादयितुमष्टशताधिकदशसहस्रसङ्ख्याकानि (१०८००) संवत्सरस्य मुहूर्त्तानि, तावन्त्येव च वेदत्रयस्य पङ्क्तियुग्मानीत्यभिधाय 'संवत्सरस्य सूक्ष्मोऽवयवो यथा मुहूर्त्तस्तथा त्रय्या विद्याया अपि सूक्ष्मोऽवयवः पङ्क्तियुग्मम्' इत्युपसंहृतम्। तदित्थमुपपद्यते—एकस्याहोरात्रस्य त्रिंशन्मुहूर्त्तानि संवत्सरदिनसंख्यया ( ३६० ) गुणितानि चेत्, प्रोक्तसंख्याकानि ( १०८०० ) भवन्ति। तथा वेदत्रयस्यापि अशीत्यक्षरप्रमाणकानि पङ्क्तियुग्मानि संवत्सरमुहूर्त्तसंख्यातुल्यसंख्याकानि भवन्तीति भवति त्रयीविद्यायाः संवत्सरप्रजापतिना साम्यमिति। इयं हि कल्पना लिखितपुस्तकमनाश्रित्य न संभवत्येव। वेदत्रयस्य यावतामक्षराणां पङ्क्तिच्छन्दःस्वरूपं चत्वारिंशदक्षरप्रमाणलक्षणं परिकल्प्य पङ्क्तियुग्ममानेन संख्योन्नयनस्य वाग्व्यापारमात्रेण कर्त्तुमशक्यत्वात्। पुस्तकसहायेनैव ग्रन्थानां श्लोकसंख्यानियमकरणस्य सर्वविद्वदनुभवसिद्धत्वाच्च॥

## अथ गणितविद्योत्पत्तिविचारः।

अथात्र प्रसङ्गवशाद् गणितविद्याया वा वर्णलिपेर्वा प्रथमं प्रादुर्भाव इति चिन्त्यते। तत्राज्ञानां शिशूनां लिपिज्ञानात्पूर्वं गणितविद्यानुभवो न भवति। गणितप्रक्रियाया गहनत्वात्। वर्णलिपिर्या ब्राह्मणादिपरिगृहीता, सा त्वतीव सुगमत्वाद्भवति गणितविद्याव्युत्पत्तेः पूर्वमेवानुभवयोग्या। न च वैदिकी भाषा गणितविद्यापरिचयं न सूचयतीति वाच्यम्। वेदेषु बहूनां तत्परिचायकवाक्यानां विद्यमानत्वात्। तथा च शुक्लयजुर्वेदस्य सप्तदशेऽध्याये 'एका च दश च दश च शतं च शतं च सहस्रं च सहस्रं चायुतं चायुतं च नियुतं च नियुतं च प्रयुतं चार्बुदं च न्यर्बुदं च समुद्रश्च मध्यं चान्तश्च परार्द्धश्च' (वा० सं० १७। २ ) इत्येवं सङ्ख्यापदानि श्रूयन्ते, तानि च गणितविद्यापरिचायकान्येव। ऋग्वेदे ४ अष्टके २ अध्यायस्य १२ वर्गे [illegible]डलस्य राहुच्छायया वेध उपवर्णितः। तत्रेयमृक्।

यं वै सूर्यं स्वर्भानुस्तमसाविध्यदासुरः।

---

१ तीक्ष्णाग्रा लोहमयी शलाका लेखनीति यावत्।

अत्रयस्तमन्वविन्दन् नह्यन्ये अशक्नुवन् (ऋ० ५।४०।६) इति ।

आसुरोऽसुरकुलजः स्वर्भानू राहुर्यं सूर्यं तमसा निजच्छायया अविध्यत् विद्धमकरोत् तं तथाविधं सूर्यम् अत्रयोऽत्रिगोत्रजा ऋषयोऽन्वविन्दन् प्राप्तवन्तः । सूर्यमण्डलवेधविषयकं तत्त्वज्ञानं प्राप्तवन्त इत्यर्थः । ननु अन्यजनसाधारण्येनात्रयोऽपि दृष्टवन्तश्चे-त्किमित्येते नामग्राहिकया प्रशस्यन्ते इत्याङ्कायामाह—न हीत्यादि । अन्ये जना नहि अशक्नुवन् । याथातथ्येनावगन्तुं शक्ता नाभूवन्नि-त्यर्थः । एतदपि मन्त्रलिङ्गं गणितविद्यापरिचायकमेव यथार्थग्रहण-ज्ञानस्य गणितसाध्यत्वात् । तथा समनन्तरोदाहृतेन संवत्सरमुहूर्त्त-गणनापरेण शतपथब्राह्मणेनापि वेदकाले गणितविद्यायाः सत्त्वमनुमी-यते । किञ्च वेदानां यज्ञार्थं प्रवृत्तत्वात् दर्शपूर्णमासेष्टिचातुर्मास्यादी-नां यज्ञानां च नियतकालेष्वेवानुष्ठेयत्वात् , कालज्ञानस्य च सूर्यादि-ग्रहगतिज्ञानैकसाध्यत्वात्तत्साधनभूतगणितविद्यायास्तदानीं सम्भ-वोऽवश्यमङ्गीकर्त्तव्यः ।

अथ यस्यां रात्रौ प्रथमक्षणमारभ्य चरमक्षणपर्यन्तं सर्वथा चन्द्र-स्यादर्शनेनामावास्यायाः, षोडशकलापूर्णस्य चन्द्रस्य दर्शनेन पौर्णमा-स्या ज्ञानं, तथाऽऽपूर्यमाणाभिश्चन्द्रस्य कलाभिः शुक्लपक्षीयप्रतिपदा-दितिथीनाम्, अपक्षीयमाणाभिश्च कृष्णपक्षीयतत्तत्तिथीनां ज्ञानम् । तथा दक्षिणोत्तरवीथ्योः सूर्यस्य परिवर्त्तनेन दक्षिणायनोत्तरायणयोः, शीतातपवृष्टीनामनुभवतारतम्येन च हेमन्तशिशिरादिऋतूनां वि-ज्ञानं भवेदेव तत्किमर्थं गणितविद्यापक्षपात इति चेत्सत्यम् । प्रोक्त-विज्ञानानां यथाकथंचित्सम्भवकल्पनेऽपि सिद्धान्तरूपेण ग्रन्थमध्ये निवेशनीयस्य कालनिर्णयस्य गणितविद्यासहायतां विनोक्तिसम्भवा-भावात् । केवलं चन्द्रदर्शनेन मासनिर्णयं कुर्वतामनार्याणां द्वादशापि मासाः कालेन स्वं स्वमृतुसमयमतिक्रामन्ति । आर्यजनैरादृताश्चैत्रा-दिमासास्तु न कदापि स्वकीयमृतुकालमतिवर्त्तन्ते । न च व्यवस्थि-तमासनिर्णयोऽर्वाचीन इति वाच्यम् । वेदेऽपि तदुल्लेखदर्शनात् । तथा हि कृष्णयजुःसंहितायाः प्रथमकाण्डे चतुर्थप्रपाठके (चतुर्दशेऽनु-वाके) सोमयागप्रकरणे चतुर्दशभिः सोमग्रहैर्मासाभिमानिन्यो देवता मधुर्माधवः शुक्रः शुचिर्नभा नभस्य इष ऊर्जः सहाः सहस्यस्तपास्त-पस्यश्चेति द्वादशमासनामभिर्यजनीयत्वेनाभिहिताः । तत्र द्वादशानां मासानामेकैकः सोमग्रहो मलमासस्य त्वधिकक्षयभेदेन द्विरूपत्वात् द्वौ सोमग्रहावित्येवं चतुर्दश सोमग्रहाः सम्पद्यन्ते । एवमेव शुक्लय-

जुर्वेदेऽपि द्वाविंशेऽध्याये स्थितम् ।

यस्मिन्मासे न सङ्क्रान्तिः सङ्क्रान्तिद्वयमेव वा ।
मलमासः स विज्ञेयो मासः स्यात्तु त्रयोदशः ॥

इति काठकगृह्ये मलमासस्य द्विरूपता स्फुटीकृता । तत्र-असङ्क्रान्तिमासोऽधिकमासः, द्विसङ्क्रान्तिमासस्तु क्षयमास इत्याख्यायते । उभयोरपि मलरूपत्वेनैकत्वादयमुभयविधोऽपि त्रयोदशो मास इत्युक्तं गृह्यकारैः । तथा ऋग्वेदेऽपि प्रथमाष्टकस्य द्वितीयेऽध्याये ।

वेद[1] मासो धृतव्रतो द्वादश प्रजावतः ।
वेदा य उपजायते ॥ ( ऋ० १ । २५ । ८ )

इति श्रूयते । तस्मादेवंविधकालसिद्धान्तनिर्णयगर्भाः श्रुतयो गणितविद्यापरिचयमावेदयन्ति ।

वर्णलिपिं शोधयता मया समासादिता गणितविद्या ।
निध्य[2]ञ्जनौषधैरिह मूलं खनता यथैव निधिः ॥

येषां जनानां सर्वथा वर्णलिपिपरिचयो नास्ति, तेषां मेधा छन्दोनिबद्धमेव निबन्धमवधारयितुं शक्नोति, न तु वीतच्छन्दस्कान् वाक्यग्रथितमहानिबन्धानिति हि नियमः । वेदास्तु प्रायेण ऋङ्मन्त्रभागेतरे सर्वेऽपि मन्त्रब्राह्मणात्मका निगदरूपा एव सन्ति । तत्कथं ते वर्णलिपिमजानद्भिः पुराणैर्विप्रैरवधृता भवेयुरिति विभाव्यताम् ।

यत्तु तेनैव शर्मण्यदेशीयपण्डितेनोच्यते 'पाणिनिव्याकरणोत्पत्तिपर्यन्तमार्यदेशे वर्णलिपिर्नासीत्' इति । तद्भसात् । पाणिनिसूत्रपाठस्य तृतीयेऽध्याये 'दिवाविभानिशाप्रभाभास्कारान्तानन्तादिबहुनान्दीकिंलिपिलिबि० (अष्टा० ३ । २ । २१) इत्यादिसूत्रे दिवाकरादिशब्दवल्लिपिकरशब्दस्य साधुत्वबोधनाय पठिते साक्षादेव लिपिशब्दप्रयोगात् । वर्णलिपिं विना व्याकरणोद्भवस्यैवासम्भावनीयत्वाच्च । न हि मृत्पिण्डेन घटा इव व्याकरणेनापूर्वाः शब्दा उत्पाद्यन्ते किन्तु सिद्धानामेव शब्दानां साधुत्वमन्वाख्यायते इति स्पष्टं पतञ्-

१ धृतव्रतो वरुणदेवः प्रजावतः कालस्य सर्वाधारत्वात् प्रजाः सन्ति एषु तान् द्वादश मधुमाधवादिभिश्चैत्रवैशाखादिभिर्वा नामभिः प्रसिद्धान् मासः मासान् वेद जानाति । तथा उपजायते द्वादशमासानामन्यतमस्य कस्यचित् उप समीपे यो मलमासो जायते प्रादुर्भवति । वेद जानाति । तमपीति शेषः । कर्माध्याहारमन्तरेणाकाङ्क्षाशान्तेरभावात् ।

२ येनाञ्जनेन भूमिष्ठो गुप्तोऽपि धनकुम्भश्चाक्षुषविषयो भवति तन्निध्यञ्जनम् ।

लिकृते व्याकरणमहाभाष्ये पस्पशाह्निके। तथा च बहुषु प्राचीनग्रन्थेषु परस्परविलक्षणान् बहुविधशब्दप्रयोगान् पर्यालोच्यापरेषां ग्रन्थकाराणां तत्तच्छब्दप्रयोगविषये विप्रतिपत्तयः कियन्तं कालमुपजायन्ते। ततश्चानियमनिवृत्तये शब्दानुशासनरचनायां विद्वांसः प्रवर्त्तन्ते इत्यवगन्तुं शक्यते। शब्दानुशासनकृतो बहव आचार्याः पाणिनेः पूर्वं बभूवुरिति 'लङः शाकटायनस्यैव' (अष्टा० ३।४।१११), 'अवङ् स्फोटायनस्य' (अष्टा० ६।१।१२३), 'वा सुप्यापिशलेः' (अष्टा० ६।१।९२), 'सर्वत्र शाकल्यस्य' (अष्टा० ८।४।५१) इत्यादिभिरष्टाध्यायीस्थसूत्रैरवगम्यते। सर्वेषां व्याकरणकृतामिन्द्रः प्रथमो बभूव।

इन्द्रश्चन्द्रः काशकृत्स्नापिशली शाकटायनः।
पाणिन्यमरजैनेन्द्रा जयन्त्यष्टादिशाब्दिकाः॥

इति बोपदेवकृते कविकल्पद्रुमाख्यधातुपाठे पूर्वाचार्याणां जयवादेन प्रशंसने इन्द्रस्य प्राथम्येनोपन्यासात्। तथा च कृष्णयजुर्वेदस्य षष्ठे काण्डे चतुर्थप्रपाठकस्य नवमानुवाके[1] श्रूयते 'वाग्वै पराच्यव्याकृता[2] अवदत्। ते देवा[3] अब्रुवन्निमां नो वाचं व्याकुर्विति। सोऽब्रवीद्वरं वृणै मह्यं चैवैषे[4] वायवे च सह गृह्याता इति। तस्मादैन्द्रवायवः सह गृह्यते। तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोत्तस्मादियं व्याकृता वागुद्यते' इति। एवं च वेदकालेऽपि व्याकरणप्रवृत्तिख्यापिकेयं श्रुतिस्तदानीमपि लिपिसद्भावमवगमयतीत्यलं पल्लवितेन॥

अथात्र संसारे शुभाशुभस्वकर्मपरिपाकवशादुच्चावचयोनिषु संसरन्तः सर्वेऽपि प्राणिनः स्वभावत एव दुःखविद्वेषिणः सुखानुरागिणश्च दृश्यन्ते। तान् प्रति सुखादिप्राप्तिसाधनमुपदिश्यते ऋग्वेदे।

हविर्भिरेके[5] स्वरितः सचन्ते सुन्वन्त एके सवनेषु सोमान्।

---

१ सप्तमानुवाके; सत्यव्रतसामश्रमिणा संपादितपुस्तकानुसारेण। [मं० दे० शा०]

२ पराची पुरातनी वाक् वेदरूपिणी अव्याकृता मेघस्तनितवदखण्डाकारा अविदितपदवाक्यप्रभेदेति यावत्। तामिन्द्रो मध्यतोऽवक्रम्य विच्छिद्य एतावदिदं वाक्यम्, वाक्ये चैतानि पदानि, पदेषु चैताः प्रकृतयः, एते प्रत्यया, इत्येवमवक्रमणम् अखण्डाया वाचो विभेदनं कृत्वेत्यादिरर्थः।

३ देवा इन्द्रमिति पाठः सत्यव्रतसामश्रमिणा संपादितपुस्तके। [मं० दे० शा०]

४ चैवैष इति पाठः सामश्रमिणा संपादिते सभाष्ये पुस्तके। [मं० दे० शा०]

५ एके सत्पुरुषा हविर्भिः विधिनाहुतैश्चरुपुरोडाशादिभिः साधनभूतैरित्तो-

शचीर्मदन्त उत दक्षिणाभिर्नेज्जिह्मायन्त्यो नरकं पताम ॥
( नि० १ । ११ ) इति ।

अन्यत्रापि श्रूयते 'तरति शोकमात्मवित्' (छा० उ० ७ । १ । ३) इति, 'आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन' ( तै० उ० २।६।१ ) इति च । एवं च वेदप्रदर्शिते कर्ममार्गे ज्ञानमार्गे वा प्रस्थितानां मनुजानां दुःखासम्भिन्नः स्वर्गो वाऽपवर्गो वा भवतीति श्रुतिरहस्यम् ।

स्यादेतत्—सुखलाभाय प्रयतमाना अपि बहवो जना दुर्दैववशाद् दुःखैरेव युज्यन्ते । तथा सुखनिःस्पृहा अयत्नवन्तोऽपि केचिद्भाग्यवशान्नरेन्द्रस्पृहणीयैः सुखैरेव युज्यन्ते । तस्माद्दैवायत्तमेव सुखं वा दुःखं वा प्राणिभिर्लभ्यत एव । तत्किमिति सत्कर्मसु प्रवृत्तौ पापकर्मभ्यो वा निवृत्तौ यत्न आस्थेयः । नहि सदसत्कर्मणोर्यथासंख्येन सुखदुःखहेतुता निश्चेतुं शक्यते । बहुशो व्यभिचारदर्शनादिति चेत् । मैवम् । पुरुषप्रयत्नस्य सर्वार्थसाधकत्वात् । व्यभिचारदर्शनस्य यथायोग्यसाधनसम्पत्तिवैकल्यप्रयुक्तत्वेनादोषत्वात् । येषां सत्कर्मकृतां यत्नवतामपि दुःखमापतति, तेषां जन्मान्तरीयं प्रचुरदुष्कृतमिह फलितम् । येषां त्वयत्नवतां सुखनिःस्पृहाणामप्यनुत्तमं सुखं समापतति, तेषां तु जन्मान्तरीयं प्रचुरसुकृतमिह फलितम् । तथा च प्रचुरदुरितक्षयाय प्रचुरसुकृतस्यैव कारणत्वान्न व्यभिचारः । तथा चोक्तं भाषापरिच्छेदे—

सुखं तु जगतामेव काम्यं धर्मेण जन्यते ।
अधर्मजन्यं दुःखं स्यात्प्रतिकूलं तु चेतसाम् ॥ इति ।

योगवासिष्ठेऽप्युक्तं रामभद्रं प्रति वसिष्ठेन—

सर्वमेवेह हि सदा संसारे रघुनन्दन ।
सम्यक्प्रयत्नात्सर्वेण पौरुषात्समवाप्यते ॥

---

ऽस्माल्लोकात्स्वः स्वर्गं लोकं सचन्ते गच्छन्ति । एके सवनेषु प्रातःसवनादिषु अग्निष्टोमादिष्विति यावत् । सोमान् सुन्वन्तः सोमाभिषवं कुर्वन्तः सन्तः स्वर्गं गच्छन्ति । उत अपि दक्षिणाभिः शचीः क्रतून् मदन्तो हर्षेण कुर्वन्तः स्वर्गं गच्छन्ति । जिह्मायन्त्यः पापमाचरन्त्यः प्रजा नरकं पताम पतन्तीत्यर्थः । व्यत्ययो बहुलमिति पुरुषव्यत्ययः । नेदिति निपातसंघातः पादपूरणार्थः । यद्वा इदिति पादपूरणार्थकं नेत्युपमार्थकमव्ययम् । एवं च यथा जिह्मायन्त्यो नरकं पतन्ति तथा एके हविर्भिर्यज्ञसाधनैः स्वर्गं गच्छन्ति इत्यादिरीत्या व्याख्येयम् । "नरकं न्यरकं नीचैर्गमनं नास्मिन्नमणं स्थानमल्पमप्यस्ति" इतिनरकशब्दार्थं एतन्मन्त्रव्याख्याने निरुक्तग्रन्थे प्रथमाध्यायस्यैकादशे खण्ड उक्तो यास्कमुनिना ।

उच्छास्त्रं शास्त्रितं चेति पौरुषं द्विविधं स्मृतम्।
तत्रोच्छास्त्रमनर्थाय परमार्थाय शास्त्रितम्॥ इति।

अवश्यमिदमकामेनापि भाग्यशरणेनाभ्युपगन्तव्यम्। अन्यथा कृषिवाणिज्यादिलौकिकव्यापाराणां चिकित्साप्रभृतिमोक्षशास्त्रपर्यन्तोपदिष्टशास्त्रीयोद्यमानां च सर्वेषामानर्थक्यं प्रसज्येतेति दिक्॥

——:o:——

अथात्र धर्म आर्याणां कीर्त्यतेऽस्माभिरादरात्।
वेदादीनां प्रमाणानामुपन्यासपुरःसरम्॥

धारणार्थकाद् धृधातोः कर्त्तर्यौणादिकमन्प्रत्ययेन व्युत्पादितो धर्मशब्दः पङ्कजादिशब्दवद्योगरूढः। तत्र पततो जनानाश्रयो भूत्वा धरतीति धर्मशब्दस्य योगार्थः। रूढ्यर्थस्त्वनिष्टाननुबन्धीष्टफलसाधनमित्याकारकः। तथा चानिष्टपरिहार इष्टफललाभश्च भवति येनानुष्ठीयमानेन स धर्म्म इत्युक्तं भवति। यद्यपि रोगाद्यनिष्टनिवृत्तिः शरीरपुष्ट्यादीष्टप्राप्तिश्च भवति भिषग्वरोपदिष्टौषधसेवनेन, तथा शत्रुभयाद्यनिष्टनिवृत्तिर्धनादीष्टप्राप्तिश्च भवति भूपतिवरानुवर्त्तनादिना। तथापि नैतानुपायान् धर्मलक्षणमतिव्याप्नोति। आमुष्मिकयोरनिष्टपरिहारेष्टलाभयोर्लक्षणवाक्ये विवक्षितत्वात्। नरकयातनानिवृत्तिस्वर्गादिसुखावाप्तिरूपयोस्तयोर्धर्मैकसाध्यत्वस्य 'हविर्भिरेके स्वरितः सचन्ते' (नि० १।११) इत्यादिसमनन्तरोदाहृतश्रुतिसिद्धत्वाच्च। यद्यपि आमुष्मिकस्वर्गादिफलस्यातीन्द्रियत्वात्तत्सिद्धौ लौकिकोपायानामयोग्यत्वम्, तथापि सर्वज्ञपरमेश्वराज्ञावाक्यभूतवेदविहितधर्म्मः साधनं भवत्येवेति सर्वेषामृषीणां धर्मसंहिताकाराणां मन्वादीनाञ्च सम्मतम्। वेदस्य च यथा परमेश्वरप्रणीतत्वं तथाऽग्रे उपपादयिष्यामः॥

अथ वेदो नाम वेद्यन्ते ज्ञाप्यन्ते धर्मार्थकाममोक्षा अनेनेति व्युत्पत्त्या चतुर्वर्गज्ञानसाधनभूतो ग्रन्थविशेषः। करणे घञ् बाहुलकात्। स च किंलक्षण इति चेत् 'मन्त्रब्राह्मणयोर्वेदनामधेयम्' (प्र० सू० १।२) इति आगमोक्तं तल्लक्षणं वेदितव्यम्। यो ह्यव्यभिचरितस्वरवर्णादिपठनपाठनक्रमागतः सन्सर्वकालं सर्वदेशेषु प्रतिशाखमविभागेन वर्त्तमानः स एको मन्त्रराशिः। अपरस्तु

१ परस्वहरणानृतभाषणादिलक्षणम्।
२ योग्यवृत्त्या धनार्जनसत्यभाषणादिलक्षणम्।

विधिनिन्दाप्रशंसासम्प्रश्नाख्यानादिभिस्तस्यैव प्रायो विनियोगप्रख्यापक उपव्याख्यानभूतो वाक्यनिचयो ब्राह्मणराशिः । अनयोरेकः सङ्ग्रहो वेद इत्यभिधीयते। वेदनिबन्धेषु मन्त्रब्राह्मणभागौ परस्परमसम्मिश्रावेव प्रायः पठ्येते। क्वचित्तु ब्राह्मणसम्मिश्रितोऽपि मन्त्रभागः पठितोऽस्ति । एवमुभयात्मकोऽपि विध्यर्थवादमन्त्ररूपेण त्रिधा व्यवस्थितोऽयं वेदराशिरेकमूल एककर्मलक्षणफलो महाकल्पवृक्षो वरीवर्त्ति अस्य च फलभूतं कर्म्म विधिना विहितमर्थवादेन प्ररोचितं मन्त्रेण च स्मृतं सदभ्युदयकारि भवति। ननु प्रतिशाखं यज्ञकर्म्माणि भिद्यन्ते तत्कथमेककर्म्मफलोऽयं वेदकल्पवृक्ष इत्युच्यते । नैष दोषः। अवान्तराकृतिभेदेऽपि कर्म्मजातिव्यञ्जकप्रधानाकृतिभेदाभावात् । नह्येकस्यां शाखायां विहितस्याग्निहोत्रादिकर्म्मणः स्थाने विजातीयस्य ग्रहयज्ञादेरपरस्यां शाखायां विधानमस्ति। तस्मान्न प्रतिशाखं कर्मभेद इति मन्तव्यम्। यदि प्रतिशाखं बदरामलकादिवज्जात्यैव कर्म्मभेदः स्यात् तदा एकमूलाभावादादित एवारभ्य भिद्यमानत्वाद् वृक्षान्तरवद्वेदान्तराण्येवोच्येरन्, न शाखान्तराणि। तस्मादेकमूलः समानफलोऽयं वेदकल्पशाखीत्याहुः॥

सर्वार्थवेदको वेदश्चतुर्द्धा भिद्यते क्रमात्।
ऋग्वेदोऽथ यजुर्वेदः सामवेदो ह्यथर्वणः॥ इति।

यद्यपि बहुषु श्रुतिस्मृत्यादिवाक्येषु वेदत्रयी संकीर्त्यते, न तु चतुर्थोऽथर्वणवेदः। तथापि ब्रह्मवेदशब्देन चतुर्थस्याथर्वणवेदस्यापि मुण्डकोपनिषदि[1] श्रवणात् स्मृतिपुराणादिष्वपि बहुशः संकीर्त्तनाच्च चतुर्द्धेत्युक्तम्। तथा चरणव्यूहेऽपि 'अथातश्चरणव्यूहं व्याख्यास्यामः । तत्र निरुक्तं चातुर्विध्यं चत्वारो वेदा विज्ञाता भवन्ति' (च० १) इति स्थितम्। तथा व्याकरणमहाभाष्ये पतञ्जलिनाप्युक्तम् 'महान् शब्दस्य प्रयोगविषयः—सप्तद्वीपा वसुमती त्रयो लोकाश्चत्वारो वेदाः साङ्गाः सरहस्या बहुधाभिन्ना एकशतमध्वर्यु[2]शाखाः सहस्रवर्त्मा सामवेद एकविंशतिधा बह्वृचा[3] नवधाऽथ-

---

१ 'तस्मै स होवाच। द्वे विद्ये वेदितव्ये इति ह स्म यद् ब्रह्मविदो वदन्ति परा चैवापरा च। तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति । अथ परा यया तदक्षरमधिगम्यते।' (मु० उ० १ । ४–५ )। [मं० दे० शा०]

२ अध्वर्युर्यजुर्वेदः।

३ 'बाह्वृच्यम्' पाठभेदः।

र्वणो वेदः' ( महा० पस्पशाह्नि० ) इति । एवं वेदस्य चातुर्विध्यं ३ अष्टके ८ अध्याये १० वर्गे श्रूयमाणया ऋचाप्यभिधीयते।

चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य ।
त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्याँ आ विवेश ॥[1]

(ऋ० ४ । ५८ । ३) इति । अत्र निरुक्ते 'चत्वारि शृङ्गेति वेदा वा एते उक्ताः' ( नि० परिशि० १३ । ७ ) इति यास्केनोक्तम् । वेदभाष्ये सायनाचार्येणापि तथैव भाषितमित्यलम् ॥

तत्र तावदृग्वेदस्य मानमुक्तं चरणव्यूहे ।

ऋचां दश सहस्राणि ऋचां पञ्च शतानि च ।
ऋचामशीतिः पादश्च ( १०५८० ) तत्पारायणमुच्यते ॥

( च० १ ) इति ।

अस्य च वेदस्य पञ्च शाखाः सन्ति । शाकला बाष्कला आश्वलायनाः शाङ्खायना माण्डूकाश्चेति । तथा चोक्तं शौनकीये प्रातिशाख्ये[2] ।

ऋचां समूहो ऋग्वेदस्तमभ्यस्य प्रयत्नतः ।
पठितः शाकलेनादौ चतुर्भिस्तदनन्तरम् ॥
शाङ्खाश्वलायनौ चैव माण्डूको बाष्कलस्तथा ।
बह्वृचा ऋषयः सर्वे पञ्चैते एकवेदिनः ॥ इति ।

अत्र शाकलादिषु ऋषिशब्दो गौणो, न तु मुख्यः । आश्वलायनगृह्ये देवर्ष्याचार्यतर्पणविधिविधायके सूत्रे[3] शाकलादीनामृषिष्वपरिगणनादाचार्येषु गणनाच्च । एवमैतरेयि, कौषीतकि, शैशिरि, पैङ्गीत्यादयोऽन्येऽपि ऋग्वेदस्य शाखाभेदाः क्वचिदुपलभ्यन्ते । तथा विष्णुपुराणेऽप्युक्तम् ।

---

१ वर्षणात् कामपूरणाद् वृषभो यज्ञस्तस्य चत्वारि शृङ्गाणि स्वरूपव्यञ्जकतया शृङ्गस्थानीयाश्चत्वारो वेदाः । त्रीणि सवनानि त्रयः पादाः । द्वे प्रायणीयोदयनीये इष्टी शीर्षे । सप्त च्छन्दांसि हस्ता भवन्ति । त्रिधा मन्त्रब्राह्मणकल्पैर्बद्धो वृषभो रोरवीति । यदेनमृग्भिः शंसन्ति यजुर्भिर्यजन्ति सामभिः स्तुवन्तीति तदिदमस्य सवनक्रमेण रोरवणम् । महो देवो महानयं देवो यज्ञरूपोऽग्निर्मर्त्यानाविवेश यजनक्रियानिष्पत्त्यर्थं मनुष्येषु प्रविष्ट इत्यर्थो निरुक्तसंमतः ।

२ शौनिकीयऋग्वेदप्रातिशाख्यस्य मुद्रितपुस्तकेषु तु अयं पाठो नोपलभ्यते । हस्तलिखितपुस्तकेष्वप्यद्य यावन्नहि दृष्टोऽस्माभिः । [मं० दे०शा०]

३ आश्व० गृ०।३।४।४ ॥ [मं० दे० शा०]

मुद्गलो गोकुलो वात्स्यः शैशिरः शिशिरस्तथा ।
पञ्चैते शाकलाः शिष्याः शाखाभेदप्रवर्त्तकाः ॥ इति ।

तथा व्याकरणमहाभाष्ये 'एकविंशतिधा बह्वृचाः' इति स्थितम्। एवं चाध्ययनसंप्रदायप्रवर्त्तकानामेषां शाकलादीनामाचार्याणां प्रवचनभेदः शाखाभेदव्यवहारे कारणम् । ततश्च मन्त्रब्राह्मणात्मकः स्वाध्यायैकः शाखेति पर्यवसितोऽर्थः।सा च शाखा अध्ययनभेदाद्वा सूत्रभेदाद्वा भिद्यते। एकस्मिन्नेव वेदे मन्त्रब्राह्मणयोरन्यतरभेदेन योऽवान्तरशाखाभेदः, सोऽध्ययनभेदकृतः। यथा शाकलबाष्कलयोर्द्वयोः शाखयोः स्वाध्यायो यत्किंचिद्भिद्यते सूत्रं तु भिन्नाध्ययनयोर्द्वयोरप्याश्वलायनीयमेकमेव । तथा च शाकलबाष्कलयोर्भेदोऽध्ययनभेदकृतः। अथैकस्यां समानपाठायामपि तैत्तिरीयशाखायामवान्तरशाखाभेदो बौधायनापस्तम्बहिरण्यकेशिप्रभृतिसूत्रभेदकृतो वेदितव्यः। एवं प्रवचनभेदात् प्रतिवेदं भिन्ना भूयस्यः शाखाः सन्ति। प्रवचनशब्दः सूत्रप्रातिशाख्यशिक्षाद्यङ्गवाचकः। तथा च ।

अग्र्याः सर्वेषु वेदेषु सर्वप्रवचनेषु च ।
श्रोत्रियान्वयजाश्चैव विज्ञेयाः पङ्क्तिपावनाः ॥ (मनु० ३ । १८४)

इति तृतीयाध्यायगतमनुवचनव्याख्यायां कुल्लुकभट्ट आह 'प्रकर्षेणोच्यते वेदार्थ एभिरिति प्रवचनान्यङ्गानि' इति। एवं प्रवचनशब्देन ब्राह्मणमप्युच्यते यतस्तेनापि प्रकर्षेण वेदार्थस्य परिभाषणादित्याहुः।

ऋग्वेदस्य सप्तदशाधिकमेकसहस्रं सूक्तानि । षडधिके द्वे सहस्रे वर्गाः । चतुःषष्टिरध्यायाः। दश मण्डलानि। अष्टौ अष्टकानि। इत्येवं विभागः परिकल्पितः। तत्र सूक्तलक्षणं यथा बृहद्देवतायाम्[1]– 'सम्पूर्णमृषिवाक्यं तु सूक्तमित्यभिधीयते' ( बृ० दे० १ । १३ ) इति। सम्पूर्णं निराकाङ्क्षं यदृषेर्वेदस्य वाक्यं तत्सूक्तमिति तदर्थः। वैदिकं महावाक्यं सूक्तमिति यावत्॥तच्च त्रिविधम्। ऋषिसूक्तम्,देवतासूक्तम् छन्दःसूक्तमिति भेदात्। त्रयाणामेषां लक्षणानि बृहद्देवतायां यथा—

ऋषिसूक्तानि यावन्ति सूक्तान्येकस्य वै स्तुतिः ।
स्तूयेतैकां तु यावत्सु तत्सूक्तं दैवतं विदुः ।
समानच्छन्दसो मन्त्राश्छन्दःसूक्तं तदुच्यते[2] ॥ ( cp. बृ० दे० १। १३-१६ ) इति ।

---

१ बृहद्देवतानामको ग्रन्थः शौनकेन महर्षिणा कृतः ।

२ मैक्डानेल संपादितबृहद्देवतापुस्तके त्वत्र विभिन्न एव पाठः । स च तत्रैव द्रष्टव्यः। [मं० दे० शा०]

तत्र ऋषिसूक्तं यथा—'अग्निमीळे' ( ऋ० १ । १ । १ ) इत्यारभ्य 'इन्द्रं विश्वा अवीवृधन्' ( ऋ० १ । ११ । १ ) इत्यतः प्राग् विंशतिवर्गसमाप्त्यन्तमेकमृषिसूक्तम्। तावतीनामृचामेकेनर्षिणा मधुच्छन्दसा दृष्टत्वात्। यथा वा—' इन्द्रं विश्वा अवीवृधन् ' इत्यष्टर्चं द्वितीयमृषिसूक्तम्। तासामृचां मधुच्छन्दसः पुत्रेण जेत्रा दृष्टत्वात्। देवतासूक्तं यथा—'अग्निमीळे पुरोहितम्' इत्यादिनवर्चमग्निदेवताकमाद्यं देवतासूक्तम्। यथा वा—'वायवा याहि दर्शत' (ऋ० १।२।१) इति नवर्चं वायव्यं द्वितीयं देवतासूक्तम्। छन्दःसूक्तं यथा—'अग्निमीळे पुरोहितम्' इत्यारभ्याष्टादशवर्गपर्यन्तं 'गायन्ति त्वा गायत्रिणः' ( ऋ० १ । १० । १ ) इत्यतः प्राग् गायत्रीछन्दोबद्धमाद्यं छन्दःसूक्तम्। एवं यथायथमुदाहर्त्तव्यम्। त्रिविधानामप्येषां सूक्तानां कर्म्मसु विनियोगः श्रुत्या प्रतिपाद्यते। तथा हि 'उदु ब्रह्माण्यैरत श्रवस्येति ब्राह्मणाच्छंसी[1] ब्रह्मण्वत्समृद्धं सूक्तमहरहः शंसति' इति प्रकृत्य 'तदु वासिष्ठम्। एतेन वै वसिष्ठ इन्द्रस्य प्रियं धामोपागच्छत्' इति ऐतरेयब्राह्मणस्य पञ्चमपञ्चिकायामुक्तम्[2]। तथा देवतासूक्तस्य विनियोगोऽप्यैतरेयब्राह्मणस्य षष्ठपञ्चिकायामुपदिश्यते—'तस्मान्मैत्रावरुणं मैत्रावरुणः प्रातःसवने शंसति' ( ऐ० ब्रा० ६।४ ) इति। मैत्रावरुणनामक ऋत्विक् मैत्रावरुणं मित्रावरुणदेवताकं सूक्तं प्रातःसवनकर्म्मणि शंसतीति तदर्थः। एवमैतरेयब्राह्मणस्य पञ्चमपञ्चिकायाम्—' तदु त्रैष्टुभं तेन प्रतिष्ठितपदेन ' ( ऐ० ब्रा० ५।४ ) इति वाक्येन त्रिष्टुप्छन्दोघटितं छन्दस्सूक्तमुपदिश्यते। वर्गविभागोऽध्यायविभागश्चाध्यापकसम्प्रदायक्रमागत एवेति भाति, यतोऽनुगतं तयोः किंचिल्लक्षणं न पश्यामः। मण्डललक्षणं तु शक्यते उक्तुम्—तत्तदृषिदृष्टानां बहूनां सूक्तानामेकर्षिकर्तृकः सङ्ग्रहो मण्डलमिति। अत एव सर्वानुक्रमणिकायामुक्तं शौनकेन[3]—'य आङ्गिरसः शौनहोत्रो भूत्वा भार्गवः शौनकोऽभवत्स गृत्समदो द्वितीयं मण्डलमपश्यत्' (ऋ०सर्वानु० २।१) इति,। न हि द्वितीयमण्डलगतानि सर्वाणि सूक्तानि गृत्समद एव दृष्टवान्, किंतु सङ्गृहीतवान्। अन्यथा कतुकूर्मादीनां तत्तत्सूक्तर्षित्वेन तत्रैवानु-

१ ब्राह्मणाच्छंसी ऋत्विग्विशेषः।

२ मुद्रितपुस्तकेषु तु षष्ठपञ्चिकाया विंशतितमे खण्ड एवायं पाठः समुपलभ्यते। [मं० दे० शा०]

३ शौनकशिष्यः कात्यायन एवास्य ग्रन्थस्य कर्तेति तु प्रसिद्धिः। [मं० दे० शा०]

क्रमणिकाग्रन्थेऽभिधानस्यासङ्गतेः । मण्डलर्षय आश्वलायनगृह्य-सूत्रे उक्ताः—' शतर्चिनो माध्यमा गृत्समदो विश्वामित्रो वामदेवोऽत्रिर्भरद्वाजो वसिष्ठः प्रगाथाः पावमान्याः क्षुद्रसूक्ता महासूक्ताः ' ( आश्व० गृ० ३।४।१ ) इति ।

मधुच्छन्दःप्रभृतयोऽगस्त्यन्ता आद्यमण्डले ।
ये सन्ति ऋषयस्ते वै सर्वे प्रोक्ताः शतर्चिनः ॥

शतर्चिपदस्य निर्वचनं कृतं पूर्वाचार्यैः—

ददर्शादौ मधुच्छन्दा द्व्यधिकं यदृचां शतम् ।
तत्साहचर्यादन्येऽपि विज्ञेयास्तु शतर्चिनः ॥
अच्छत्राश्छत्रिणैकेन[1] यथा ते छत्रिणोऽभवन् ॥ इति ॥

द्व्यधिकेऽपि शतोक्तिर्बाहुल्यात् । अन्त्ये मण्डले क्षुद्रसूक्तानां महासूक्तानां च द्रष्टार ऋषयोऽपि लक्षणया क्षुद्रसूक्ता महासूक्ता इति व्यपदिश्यन्ते । महासूक्तलक्षणं बृहद्देवतायामुक्तम्—' दशर्चताया अधिकं महासूक्तं विदुर्बुधाः ' इति । एतेन—एकर्चप्रभृतिदशर्चपर्यन्तं क्षुद्रसूक्तम्—इति क्षुद्रसूक्तलक्षणमपि सूचितं भवति । मध्यमेषु द्वितीयादिनवमान्तेषु मण्डलेषु ये ऋषयस्ते माध्यमा व्यपदिश्यन्ते। तथा च प्रथमस्य मण्डलस्य शतर्चिनो, द्वितीयस्य गृत्समदः, तृतीयस्य विश्वामित्रः, चतुर्थस्य वामदेवः, पञ्चमस्यात्रिः, षष्ठस्य भरद्वाजः, सप्तमस्य वसिष्ठः, अष्टमस्य प्रगाथाः, नवमस्य पावमान्याः, दशमस्य क्षुद्रसूक्ता महासूक्ताश्चेति गृह्यसूत्रार्थः ।

अथैषामृषीणां चातुर्विध्यमुक्तं पूर्वाचार्यैः—

ऋषीणामृषिपुत्राणामृषिकाणां स्वयंभुवाम् ।
तथा[2] नामाभिजानीयाद्यथैषां मन्त्रदृष्टयः ॥
प्रवरैर्ये[3] समाख्याता ऋषयस्त इति श्रुतिः ।
तत्पुत्रपौत्रनप्तार ऋषिपुत्रा इति स्मृताः ॥
राजन्य[4]वैश्या ऋषिकाः स्त्रियस्तास्तिर्यग्योनयः ।

---

१ मैकडानलसंपादितपुस्तके तु न दृश्यत पूर्वार्धमिदम् । [मं० दे० शा०]

२ यथा यतो हेतोरेषामृष्यादीनां मन्त्रदृष्टयो वर्तन्ते तथा ततो हेतोरेषां ऋषिरित्येव सामान्यतो ( नाम ) जानीयात् ।

३ प्रवरैर्मन्त्रदर्शिभिः पुत्रपौत्रादिभिर्ये समाख्याताः प्रसिद्धास्ते ऋषयः कथ्यन्त इति शेषः । नप्ता प्रपौत्रः ।

४ राजन्यवैश्याः । अपि च ताः स्त्रियः गोधाघोषाप्रभृतयो ब्रह्मवादिन्य इति प्रसिद्धाः ऋषिका इत्युच्यन्ते । ऋषिका इति पुंसि स्त्रियां च तन्त्रेण बहु-

भगवन्तं भास्करं तपसा प्रसाद्य वाजिरूपधरात्तस्मादलोकविदितं यजुर्वेदमधिगतवान्। सोऽयं यजुर्वेदः शुक्ल इत्यभिधीयते॥ यतोऽत्र दर्शपौर्णमासप्रभृतिसर्वयज्ञेषूपयुक्तानां यजुर्मन्त्राणां ब्राह्मणसङ्कीर्णानां यथायोग्यक्रमेण विन्यासेन याज्ञिकानां व्यामोहाजननात्॥ प्राचीनयजुर्वेदस्य तु ब्राह्मणसङ्कीर्णत्वात् तत्तद्याज्ञियमन्त्राणामप्यनुक्रमेण पाठाभावाच्च ततो यज्ञकर्मानुष्ठानमार्गस्य दुर्ज्ञेयत्वात् कृष्णत्वमिति॥

शुक्लयजुर्वेदस्य पञ्चदश भेदाः सन्ति। काण्वा माध्यन्दिना जाबाला बुधेयाः शाफेयास्तापनीयाः कपोलाः पौण्ड्रवत्सा आवटिकाः परमावटिकाः पाराशरीया वैनेया वैधेया औधेया गालवाश्चेति। सर्वे एते वाजसनेयिन इति व्यपदिश्यन्ते॥ एतद्वेदस्य मानमुक्तं चरणव्यूहे—

'द्वे सहस्रे शतन्यूने मन्त्रा वाजसनेयके।
तावन्मानेन संख्यातं वालखिल्यं सशुक्रियम्।
ब्राह्मणं तु समाख्यातं प्रोक्तमानाच्चतुर्गुणम्॥ (cp च०२) इति।

वाजसनेयिनां ब्राह्मणं शतपथसंज्ञकम्। तच्चार्वाचीनमिति भट्टोजीदीक्षितमतम्। सिद्धान्तकौमुद्यां 'पुराणप्रोक्तेषु ब्राह्मणकल्पेषु' (अष्टा० ४।३।१०५) इति सूत्रे भाल्लविनः शाट्यायनिन इत्युदाहृत्य, पुराणेति किम्। याज्ञवल्कानि ब्राह्मणानीति प्रत्युदाहृतम्। तत्स्वारस्याद्यद्यपि याज्ञवल्क्यो न पुराणो मुनिरिति प्रतीयते। तथापि 'याज्ञवल्क्यादिभ्यः प्रतिषेधस्तुल्यकालत्वात्' (वा० ४।३।१०५) इति 'तद्विषयता चेति न' (महाभाष्य ४।२।६६) इति वचनमेतत्सूत्रभाष्ये पतञ्जलिनोपन्यस्तम्। तत्स्वारस्येन याज्ञवल्क्यः पुराण एवेति लभ्यते। अन्यथा वचनारम्भो व्यर्थः स्यात्। पुराणपदेनैव तद्व्यावृत्तेः सिद्धत्वात्। याज्ञवल्क्यस्य वैशम्पायनान्तेवासित्वेन शाट्यायनादितुल्यकालभवत्वाच्च। स्पष्टं चेदमत्रैव सूत्रे शब्देन्दुशेखरे इति दिक्॥

अथ सामवेदस्य सहस्रं शाखा आसन्। तत्रानध्यायेष्वधीयाना बहवः शाखाध्यायिन इन्द्रेण शतपर्वणा निहतास्ततः प्रभृति बह्व्यः शाखा उच्छिन्नाः। कतिचे (? चि) देवावशिष्टाः प्रचरन्ति। यथा—राणायनीयाः शाट्यमुग्राः कापोला महाकापोला लाङ्गलिकाः शार्दूलाः कौथुमाश्चेति[1]। तत्र कौथुमानां षड्भेदाः सन्ति। आसु-

1 चरणव्यूहस्य द्वितीया कण्डिकात्र द्रष्टव्या। (मं० दे० शा०)

रायणा वातायना प्राञ्जलयो वैनधृताः प्राचीनयोग्या नैगेयाश्चेति। एतन्मानमुक्तं चरणव्यूहे—

'अष्टौ सामसहस्राणि सामानि च चतुर्दश।
ऊह्यानि सरहस्यानीत्येतत्सामगणः स्मृतः॥' (cf. च० ३) इति

अथर्वणवेदस्य नव भेदाः भवन्ति—पैप्पलादाः शौनकीया दामोदास्तोत्तायना जायला ब्रह्मपलाशाः कुनखी देवदर्शी चारणविद्याश्चेति। एतन्मानमुक्तं चरणव्यूहे—

'द्वादशानि सहस्राणि मन्त्राणां त्रिशतानि च।
गोपथं ब्राह्मणं वेदेऽथर्वणे शतपाठकम्[१]॥ (cf. च. ४) इति।

इदमत्र सम्प्रधार्यम्—मन्त्रब्राह्मणयोर्वेदत्वाविशेषेऽपि अत्र लोके प्रागवतरणं मन्त्रभागस्य ततः कालान्तरेण ब्राह्मणभागस्येति। सर्वत्र ब्राह्मणग्रन्थेषु तत्तद्वेदमन्त्राणां यज्ञकर्मसु यथायथमुपयोगस्य बहुधा प्रदर्शितत्वात्। मन्त्रभागेष्वपि ऋक्संहितायाः प्रथममवतरणं ततो यजुःसंहितादेः। यजुर्वेदे बहूनामृङ्मन्त्राणामनुवाददर्शनात्। ऋङ्मन्त्रानवलम्ब्यैव च सर्वेषां साम्नां गीयमानत्वात्॥ एवं वक्ष्यमाणलक्षणानि कल्पसूत्राणि ब्राह्मणग्रन्थोत्तरकालानि। तेषां ब्राह्मणग्रन्थबोधितयज्ञादिकर्मकाण्डप्रपञ्चभूतत्वादिति बोध्यम्॥

तस्यैतस्य वेदचतुष्टयस्य शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति षडङ्गानि सन्ति। एषां प्रयोजनान्युच्यन्ते—वैदिकधर्मानुष्ठानेन द्विजानां ब्राह्मणादिजनानां सकलपुरुषार्थसिद्धिरिति हि वैदिकः सिद्धान्तः। वेदवाक्यानां च गूढार्थत्वादक्रमपाठितत्वाच्च न केवलेभ्यस्तेभ्यो यथावत्कर्मस्वरूपमवगन्तुं शक्यते। तस्माद्वेदार्थविज्ञानसम्पन्नैः कविभिराचार्यैर्वेदेभ्यो लोकस्य धर्मावबोधार्थमिमान्यङ्गानि प्रवर्तितानि॥ तत्र शिक्षा नाम स्वरवर्णाद्युच्चारणरीत्युपदेशकं शास्त्रम्। सा च शिक्षा 'अथ शिक्षां प्रवक्ष्यामि पाणिनीयं मतं यथे'ति पाणिनीया शिक्षा सर्ववेदसाधारणा। अन्या अपि प्रतिशाखं भिन्नाः बह्वयः[२] शिक्षाः प्रातिशाख्यपदेन[३] व्यवहृताः

---

१ शतप्रपाठकमित्यर्थः।

२ तासु द्वात्रिंशत् (३२) तु संगृहीताः शिक्षासंग्रहनाम्नि पुस्तके वाराणस्यां मुद्रिता उपलभ्यन्त एव। (शि० द०)

३ 'प्रातिशाख्यानां शिक्षापदेन व्यवहारे नास्माकं सम्मतिः। किंतु व्याकरणपदेनैव' इति दाधिमथाः।

देवाऽदेवाप्सरोनद्यो गन्धर्वास्ते स्वयम्भुवः ॥ इति ।

एषामुदाहरणानि प्रदर्श्यन्ते । तत्र तृतीयमण्डलद्रष्टा विश्वामित्रः तस्य पुत्रो मधुच्छन्दाः, पौत्रो जेता च मन्त्रद्रष्टाऽभवत्, तस्माद्विश्वामित्र ऋषिः, मधुच्छन्दःप्रभृतयश्च ऋषिपुत्राः । यथा वा अङ्गिरसः पुत्रो रहूगणः, पौत्रो गोतमो, नप्ता वामदेवः, प्रणप्ता बृहदुक्थ्यः त इमे सर्वे मन्त्रद्रष्टारो बभूवुः तस्मादाङ्गरा ऋषिः । रहूगणादयो हि ऋषिपुत्राः। ऋषिक इत्यत्राल्पार्थे कन्। अल्पऋषिरित्यर्थः । तत्र राजन्य ऋषिको यथा—तृतीयाष्टके 'मम द्विता' ( ऋ० ४।४२।१ ) इति दशर्चस्य सूक्तस्य पुरुकुत्सपुत्रस्त्रसदस्युनामा राजर्षिः । यथा वा तदग्रिमस्य 'क उ श्रवत् ( ऋ० ४।४३।१ ) इति सप्तर्चस्य सूक्तस्य पुरमीढाजमीढौ सुहोत्राभिधस्य राज्ञ पुत्रावृषी । वैश्य ऋषिको यथा अष्टमाष्टकस्य द्वितीयाध्याये 'अग्निरिन्द्रः' (ऋ० १०।६५।१) इति पञ्चर्चस्य सूक्तस्य ' देवान् हुवे'(ऋ०१०। ६६।१) इति पञ्चदशर्चस्य सूक्तस्य च वसुकपुत्रो वसुकर्ण ऋषिः । स च वैश्य इति सम्प्रदायविद आहुः । युक्तं चैतत्—वसु धनं सुवर्णरजतादि क्रीणातीति वसुक इति नामधेयपदस्य तथैव स्वारस्यावगमात् । स्त्रिय ऋषिका यथा चतुर्थाष्टकस्य प्रथमाध्याये 'समिद्धो अग्निः ( ऋ० ५।२८।१ ) इति षळर्चस्य सूक्तस्यात्रिपुत्री विश्ववारानाम्नी ऋषिका । यथा वा अष्टमाष्टके षष्ठाध्याये 'तेऽवदन्' ( ऋ० १०।१०६।१ ) इति सप्तर्चस्य सूक्तस्य ब्रह्मजाया जुहूनाम्नी ऋषिका । स्वयम्भुवो यथा—'इन्द्रस्य दूतीरिषिता चरामि' (ऋ० १०।१०८।२ ) इति, 'नाहं तं वेद' ( ऋ० १०।१०८।४ ) इति चैवमादीनामष्टमाष्टकस्य षष्ठेऽध्याये पठितानां कासांचिदृचां सरमानाम्नी देवशुनी ऋषिका । सा हि तिर्यग्योनिः । उपनयनाध्ययनाद्यभावेऽपि स्वयं प्रतिभातवेदत्वं स्वयंभूत्वमिति तल्लक्षणं वेदितव्यम् । देवाद्या अप्युपनयनाद्यभाववन्तः स्वयंप्रतिभातवेदा एवेति नैतल्लक्षणमतिवर्त्तन्ते । यथा वा अष्टमाष्टकस्य तृतीयाध्याये 'अग्निः सप्तिं वाजम्' (ऋ० १० । ८० । १) इति सप्तर्चस्य सूक्तस्य सौचीकोऽग्निर्देव ऋषिः । एवं यथायथमुदाहार्यम् । स्पष्टश्चायमृषिसूक्तादिलक्षणविचारः शौनकीयसर्वानुक्रमणिकाभाष्ये । चतुर्विधानामप्येषां सामान्यलक्षणं तु ' मन्त्रदृशः ' इत्येव पूर्वाचार्यै-

वचनान्तं प्रयुक्तम् । तिर्यग्योनयः पशुजातयः । देवा अदेवा इत्यादयस्ते स्वयम्भुव इति व्यपदिश्यन्ते ।

रुदाहृतम् । दर्शनं ज्ञानम् । तच्च परमेश्वरप्रसादलब्धं सर्वेषाम-विशेषात् । किञ्च दर्शनं नाम सिद्धस्य वस्तुनो विषयीकरणं न तूत्पादनम् । एवं चर्षयो न वेदस्य कर्त्तारः, किन्तु द्रष्टार इति बोध्यम् ।

स्यादेतत्—'यस्य वाक्यं स ऋषिः । या तेनोच्यते सा देवता । यदक्षरपरिमाणं तच्छन्दः । अर्थेप्सव ऋषयो देवताश्छन्दोभिरुपा-धावन्' (ऋ० सर्वानु० परिभाषा २।४-७) इति सर्वानुक्रमण्यां शौनकोक्तेः, 'अर्थकाम ऋषिर्यस्यां देवतायामार्थपत्यमिच्छन् स्तुतिम् प्रयुङ्क्ते स तद्देवत्यो मन्त्रः'[3] (नि० ७।१) इति नैरुक्ते सप्तमाध्याये यास्कोक्तेश्च मन्त्रकर्त्तार एव ऋषयः किं न स्युः । किञ्च मन्त्रलिङ्गा-दपि ऋषीणां मन्त्रकर्तृत्वं प्रतीयते । तथाहि । 'सोम गीर्भिष्ट्वा वयं वर्द्धयामो वचोविदः' (ऋ० १।९१।११) इति मन्त्रो 'हे सोम वचोविदो वयं त्वा त्वां गीर्भिर्वर्द्धयामः स्तुमः' इत्यर्थकः, तथा बृह-द्देवतोक्तम् 'ऋषिसूक्तानि यावन्ति सूक्तान्येकस्य वै कृतिः' (बृ० दे० १।१४) इति ऋषिसूक्तलक्षणं च वेदवाक्यानि ऋषिकर्तृकाणि इत्यावेदयति इति चेत् । मैवम् । वेदानामपौरुषेयत्वस्य मीमांसा-शास्त्रे सिद्धान्तितत्वात् । तथाहि—प्रमाणान्तरेणार्थमुपलभ्य पुरुष-निर्मितत्वं हि पौरुषेयत्वम् । तच्च वेदस्य नास्ति । न च

'तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे ।
छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत' (ऋ० १०।९०।९)

इति ऋङ्मन्त्रेण वेदस्य पौरुषेयत्वमवगम्यत इति वाच्यम् । उक्तमन्त्रेण वेदस्य यज्ञपुरुषादुत्पन्नत्वमात्रबोधनेऽपि प्रमाणान्तरेणार्थमुपलभ्य रचितत्वाबोधनात् । ईश्वरः सर्व-ज्ञत्वाद्गतकल्पीयं वेदमस्मिन् कल्पे स्मृत्वोपदिशतीत्येता-वतैव निर्वाहे पौरुषेयत्वकल्पनानुपपत्तेश्च । 'धाता यथापूर्वमकल्प-

---

१ स्तुतवन्त इत्यर्थः ।

२ अर्थस्य अभिलाषविषयस्य पतिः स्वामी प्रदाने प्रभुरिति यावत् । अर्थ-पतेर्भावः आर्थपत्यम् ।

३ मुद्रितपुस्तकेषु त्वेतद्वचनं किञ्चित्पाठभेदेनोपलभ्यते । (मं० दे० शा०)

४ अयं मन्त्रः प्रथमाष्टकस्य षष्ठेऽध्याये पठ्यते ।

५ सर्वैर्देवमनुष्यादिभिर्हूयते इज्यते यस्तस्मात्सर्वहुतो यज्ञात् परमेश्वरात् ऋगादयो जज्ञिरे इत्यर्थः ।

यत् ( ऋ० १० । १९० । ३ ) इति श्रुतिमूलकेन 'यः कल्पः, स पूर्वक' इति न्यायेन संसारस्यानादित्वाच्च । काठकादिसमाख्यामपि अध्ययनसम्प्रदायप्रवर्त्तकत्वेनोपपत्तेश्चेत्याहुः । युक्तं चैतत् अत एव

'युगान्तेऽन्तर्हितान्वेदान् सेतिहासान् महर्षयः ।
लेभिरे तपसा पूर्वमनुज्ञाताः स्वयम्भुवा ॥

इति स्मर्यते । तथा तैत्तिरीययजुरारण्यके सह्वैउपनिषदि 'अजान् ह वै पृश्नी'ंस्तपस्यमानान् ब्रह्म स्वयम्भ्वभ्यानर्ष त ऋषयोऽभवंस्तदृषीणामृषित्वम्'(cp.तै०आ०२।६)इति श्रूयते। स्वयम्भु प्रमाणान्तरानुपजीव्य स्वयम्भूतं स्वतःप्रमाणभूतमिति यावत्। ब्रह्म वेदः तपश्चरतः अजान् अयोनिसम्भवान् पृश्नीन् पुरुषान् प्रति अभ्यानर्ष अभिजगाम ऋषी गतौ तुदादिः । परोक्षे लिट् । अतस्ते ऋषयोऽभवन्नित्यादिस्तदर्थः ॥ नैरुक्तग्रन्थे द्वितीयाध्याये 'ऋषिर्दर्शनात्स्तोमान् ददर्शेत्यौपमन्यवः' ( नि० २ । ११ ) इति वदन् यास्कमुनिरपि ऋषिशब्दप्रवृत्तिनिमित्तं वेदसम्बन्धि दर्शनमेव निर्णीतवान् । एवं च मन्त्रं वेदं पश्यतीत्यृषिः । धातूनामनेकार्थकत्वादत्र ऋषेर्धातोर्दर्शने वृत्तिः गत्यर्थकानां ज्ञानार्थकत्वाद्वा । प्रकृते हि दर्शनं प्रत्यक्षीकरणमेव न तु चाक्षुषं ज्ञानमिति भावः । किञ्च

अहे बुध्निय मन्त्रं मे गोपाय । यमृषयस्त्रैविदा विदुः ।[1]
ऋचः सामानि यजूंषि । सा हि श्रीरमृता सताम् ॥ (तै० १ । २ । १ । २६ ) ।

इति कृष्णयजुर्मन्त्रेण ऋषयो विदुरित्युक्तत्वात्तेषां वेदकर्तृत्वाभावो बोधितः। अन्यथा चक्रुरित्येव तत्र श्रुतं स्यात्। यत्तु 'गीर्भिष्ट्वा वय'मिति मन्त्रलिङ्गं कर्तृत्वसाधकतयोपन्यस्तम् । तन्न तथा साधयति,'वचोविद्' इति विशेषणेन पूर्वसिद्धानामेव वेदवचसां वेत्तारो वयमित्यर्थस्य क्रोडीकारात् (?करणात्), 'गीर्भि'रित्यस्य वाणीभिरित्यर्थाच्च ॥ नन्वेवमपि वयमित्यस्मच्छब्दप्रयोगाद् 'वर्द्धय' इत्युत्तमपुरुषप्रयोगाच्चैवंविधमन्त्राणामृषिकर्तृकत्वं दुर्निवारम् । प्रणीतेष्वेव वाक्येषु वयं स्तुमो वयमवोचाम इत्यादिप्रयोगदर्श-

---

१ त्रैविदा ऋषयः ऋचः सामानि यजूंषीत्येवं रूपं यं विदुर्ज्ञातवन्तस्तं मन्त्रं वेदत्रयलक्षणं हे अहे बुध्निय त्वं गोपाय रक्ष। सा वेदत्रयी हि हेतोः सताममृता अक्षया श्रीः सम्पत्तिरित्यर्थः ।

दिति चेत्। सत्यम्। परन्तु नैष दोषो वेदे सम्प्रसजति निजतपोमहिम्ना प्राप्तपरमेश्वरतादात्म्यानामृषीणां मुखतः प्रादुर्भूततथाविधवाक्यानामपि परमेश्वरप्रणीतत्वावधारणात्। तथा चोक्तं शतपथब्राह्मणे चतुर्दशप्रपाठकस्य चतुर्थाध्याये "ब्रह्म[1] वा इदमग्र आसीत्। तदात्मानमेवाऽवेदहं ब्रह्मास्मीति। तस्मात्तत्सर्वमभवत् तद्यो देवानां प्रत्यबुध्यत स एव तदभवत्। तथर्षीणां तथा मनुष्याणाम् तद्धैतत् पश्यन् ऋषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्चाहं कक्षीवाँ ऋषिरस्मि विप्र"इत्यादि। 'अहं मनुरभवम्' (ऋ० ४।२६।१) इति सूक्तमृग्वेदे तृतीयाष्टकस्य षष्ठेऽध्याये पठ्यते। अनेन सूक्तेन वामदेव ऋषिर्विश्वरूपब्रह्मभावं साक्षात्कृतवतः स्वस्यानुभवमनुवदति॥ एवमैतरेयकेऽपि श्रूयते(?)—'य एते खल्वमी मन्त्रदृशः सर्व एते परस्यैव विभूति'रिति॥ 'यस्य वाक्यं स ऋषिः' इति सर्वानुक्रमणीसूत्रस्य तु 'यस्य दृष्टं वाक्य'मित्यर्थ इति न कोऽपि विरोधः॥ एवं च 'गृत्समदो द्वितीयमण्डलमपश्यत्' (ऋ० सर्वानु० २।१) इति सर्वानुक्रमणं सूत्रमपि सङ्गच्छते। अन्यथा स्वग्रन्थेनैव विरुध्येत। किंच बृहद्देवतोक्ते ऋषिसूक्तवचने—'ऋषिसूक्तानि यावन्ति सूक्तान्येकस्य वै कृति'रित्यत्र कृतिरित्यस्य दर्शनक्रियेत्यर्थः सकलश्रुतिस्मृत्यनुरोधादवगन्तव्यः॥

अथ वेदस्य श्रुतिरिति संज्ञापि श्रूयत एवायं सर्वैर्न त्वस्य कश्चिच्छरीरी कर्त्तोपलभ्यत इति तात्पर्यमवधारयति॥ एवं च पारम्पर्यक्रमागतमेव वेदज्ञानं सर्वेषाम्, न तु ऋषयोऽपि तस्य स्वतन्त्राः कर्त्तार इति लभ्यते। अत एव ऋग्वेदे तृतीयाष्टकस्य चतुर्थाध्याये पठ्यते—'महो[2] रुजामि बन्धुता वचोभिस्तन्मा पितुर्गोतमा-

---

१ अग्रे सृष्टेः पूर्वम् इदं सम्प्रति दृश्यमानं विश्वम् ब्रह्म वासीत्। वाशब्द एवार्थे। तद्ब्रह्म आत्मानमेवाहं ब्रह्मास्मीत्येवं साक्षादकरोत्। तस्मात् ततश्च तद्ब्रह्म सर्वं विश्वरूपमभवत्। तत् तस्मात् कारणात् देवानामृषीणां मनुष्याणां वामदेवः पुमान् प्रत्यबुध्यत प्रत्यगात्मनो ब्रह्मभावं साक्षादकरोत् स एव पुमान् तत् विश्वरूपं ब्रह्माभवत्। अत्रार्थे वामदेवस्य महर्षेरनुभवं ऋग्वेदप्रसिद्धं संवादयति—अहं मनुरित्यादिना॥

२ हे अग्ने यदहं महः कमनीयं यथा स्यात्तथा बन्धुता त्वदीयत्वेन बन्धनशीलत्वम्। द्वितीयार्थे व्यत्ययेन प्रथमा। वचोभिः कृत्वा रुजामि सम्पादयामि। तदेतत् मा मां प्रति गोतमात् पितुर्जनकात् सकाशात् अन्वियाय अनुगतम् प्राप्तमित्यर्थः।

दन्वियाय' ( ऋ० ४ । ४ । ११ ) इति ॥ तथा ऐतरेयब्राह्मणे पठ्यते- 'प्रजापतिरकामयत प्रजायेय भूयान्स्यामिति स तपोऽतप्यत स तपस्तप्त्वेमान् लोकानसृजत पृथिवीमन्तरिक्षं दिवम्। तान् लोकानभ्यतपत् तेभ्योऽभितप्तेभ्यस्त्रीणि ज्योतींष्यजायन्ताग्निरेव पृथिव्या अजायत वायुरन्तरिक्षादादित्यो दिवस्तानि ज्योतींष्यभ्यतपत् तेभ्योऽभितप्तेभ्यस्त्रयो वेदा अजायन्त ऋग्वेद एवाग्नेरजायत यजुर्वेदो वायोः सामवेद आदित्यात्। तान् वेदानभ्यतपत् तेभ्योऽभितप्तेभ्यस्त्रीणि शुक्राण्यजायन्त भूरित्येव ऋग्वेदादजायत भुव इति यजुर्वेदात् स्वरिति सामवेदात्, तानि शुक्राण्यभ्यतपत् तेभ्योऽभितप्तेभ्यस्त्रयो वर्णा अजायन्ताकार उकारो मकार इति, तानेकधा समभरत्तदेतदोमिति' ( ऐ० ब्रा० ५ । ३२ ) इति। एतद्ब्राह्मणपर्यालोचनया प्रजापतिरेवाग्रे स्वतपःप्रभावेन सप्रणवव्याहृतिकां त्रयीमपश्यत् ततः परं यथायथं निजतपोबलेन तैस्तैर्ऋषिभिस्ते ते मन्त्रादिभागाः परमेश्वरप्रसादतो लब्ध्वा यथास्थितस्वरवर्णानुरूपं पठित्वा लोकेऽत्र प्रकटीकृता इति प्रतीयते इत्याहुः ॥

नतु यदि सिद्धानामेव मन्त्राणां दर्शनं मधुच्छन्दःप्रभृतीनामृषित्वसम्पादकम्, तर्हीदानींतनेषु श्रोत्रियेष्वपि ऋषित्वमतिप्रसज्येतेति चेत्। मैवम्। इह लोके स्वेतरैरदृष्टपूर्वाणामेव श्रुतिवाक्यानां गुरुदेवताप्रसादेन संजातदर्शनस्यैव स्वस्मिन्नृषित्वसम्पादकत्वादित्यलमनया प्रसङ्गानुप्रसङ्गया ॥

प्रकृतमनुसरामः—

'एकशतमध्वर्युशाखाः' ( महाभा० पस्पशाह्नि० ) इति महाभाष्ये पतञ्जलिराह। 'यजुर्वेदस्य षडशीतिभेदा भवन्ति' ( च० २ ) इति चरणव्यूहः। परन्त्वेषु शाखाभेदेषु कतिचिदुच्छिन्नाः सन्तो नामतोऽपि न ज्ञायन्ते। येषां हि नामानि ग्रन्थेषूपलभ्यन्ते तान् भेदान् वदामः—चरकाः, आह्वरकाः, कठाः, प्राच्यकठाः, कापिष्ठलकठाः, चारायणीयाः, वारतन्तवीयाः, श्वेताः, श्वेततराः, औपमन्यवाः पाताण्डिनेयाः, मैत्रायणीयाश्चेति। मैत्रायणीयानामपि षड्भेदा भवन्ति—मानवा वाराहा दुन्दुभाश्छागलेया हारिद्रवीयाः श्यामायनीयाश्चेति। तथा चरकविशेषाणां तैत्तिरीयकाणां द्वौ भेदौ

१ अभ्यतपत् स्वतपःप्रभावसंस्कृतान् अकरोदित्यर्थः। एवमग्रेऽपि बोध्यम्। प्रजापतितपःप्रभावेन तेभ्यस्तेभ्यस्तानि तानि वस्तून्यजायन्तेति भावः।

भवतः—औखीयाः खाण्डिकीयाश्चेति। खाण्डिकीया अपि पञ्चधा भिन्नाः—आपस्तम्बी बौधायनी सत्याषाढी हिरण्यकेशी शाट्यायनी चेति[1]। वारतन्तवीया औखीयाः खाण्डिकीयास्तैत्तिरीया इत्यत्र 'तित्तिरिवरतन्तुखण्डिकोखाच्छण्' (अष्टा० ४। ३। १०२) इति पाणिनीयसूत्रेण छण्प्रत्ययः, आपस्तम्बीत्यादिपञ्चसु 'कलापिवैशम्पायनान्तेवासिभ्यश्च' (अष्टा० ४। ३। १०४) इति सूत्रेण णिनिः। एषां सर्वेषां स्वाध्यायमानं चरणव्यूहे प्रोक्तम्—

'अष्टादश सहस्राणि मन्त्रब्राह्मणयोः सह।
यजूंषि यत्र पठ्यन्ते स यजुर्वेद उच्यते॥ (cp. च० २) इति।

सर्व एवैते भेदाः कृष्णयजुःशब्देन व्यवह्रियन्ते। वक्ष्यमाणाः काण्वमाध्यन्दिनादयस्तु शुक्लयजुःशब्देन। तत्कारणं सम्प्रदायविद एवमाहुः—वैशम्पायनो नाम यजुर्वेदाचार्यो येनाध्यापिता बहवः शिष्या वेदवेदाङ्गपारगाः संवृत्ताः। स कदाचित्केनाचिन्निमित्तेन ब्रह्महत्यापातकवान् संवृत्तः। ततो द्वादशवार्षिकं ब्रह्महत्यापापापहं व्रतं चरितुकाममाचार्यं प्रति शिष्याः प्रोचुः—'भगवन् द्वादशवार्षिकस्यैतद्व्रतस्य षष्ट्युत्तराणि त्रीणि शतानि प्राजापत्यानि भवन्ति तानि सर्वे वयं भवत्पापक्षयार्थं चराम' इति। अनुमतं च तत्तथास्त्वित्याचार्येण। यदाह व्यासः—

वैशम्पायनशिष्यास्ते चरकाध्वर्यवोऽभवन्।
यच्चेरुर्ब्रह्महत्यांहःक्षपणं स्वगुरोर्व्रतम्॥ इति॥

एवं व्रतं चरत्सु तेषु याज्ञवल्क्यनामा शिष्यो गुरुमभ्येत्य प्रोवाच, भो भगवन् किमेतेषां क्षुद्राणां व्रतचर्यया भविष्यति, नूनमहमेवैकः सुदुश्चरमपि भवद्व्रतं चरिष्ये' इति॥ तच्छ्रुत्वा कुपितो गुरुरुवाच—'अलं त्वया ब्राह्मणावमानिनाऽभिमानिना, यदधीतं मत्तस्तदाशु त्यजे'ति। सोपि 'किमहं निगीर्णमन्नमिवाधीतं वमामी'त्युपहासवादं वदन् गुरुणा 'तथैवास्त्वि'ति प्रत्युक्तो यावच्छर्दितवांस्तावद्धाज्ञयं वेदज्योतिर्मूर्त्तं खदिराङ्गारकल्पं पुरस्ताद् भुवि विप्रकीर्णमपश्यत्, स्वयं च न किञ्चिदधीतं सस्मार। ततो याज्ञवल्क्येन प्रच्छर्दितं वेदराशिं गुर्वनुज्ञया शिष्या जगृहुः। परं छर्दितस्यादनं विप्ररूपेणानुचितमपि मनसि निधाय तित्तिरयो भूत्वा गृहीतवन्तस्ते तदाप्रभृति तैत्तिरीया अभूवन्। अथ याज्ञवल्क्यो

---

१ अत्र चरणव्यूहस्य द्वितीया कण्डिका द्रष्टव्या। (मं० दे० शा०)

भगवन्तं भास्करं तपसा प्रसाद्य वाजिरूपधरात्तस्मादलोकविदितं यजुर्वेदमधिगतवान्। सोऽयं यजुर्वेदः शुक्ल इत्यभिधीयते॥ यतोऽत्र दर्शपौर्णमासप्रभृतिसर्वयज्ञेषूपयुक्तानां यजुर्मन्त्राणां ब्राह्मणसङ्कीर्णानां यथायोग्यक्रमेण विन्यासेन याज्ञिकानां व्यामोहाजननात्॥ प्राचीनयजुर्वेदस्य तु ब्राह्मणसङ्कीर्णत्वात् तत्तद्यज्ञियमन्त्राणामप्यनुक्रमेण पाठाभावाच्च ततो यज्ञकर्मानुष्ठानमार्गस्य दुर्ज्ञेयत्वात् कृष्णत्वमिति॥

शुक्लयजुर्वेदस्य पञ्चदश भेदाः सन्ति। काण्वा माध्यन्दिना जाबाला बुधेयाः शाफेयास्तापनीयाः कपोलाः पौण्ड्रवत्सा आवटिकाः परमावटिकाः पाराशरीया वैनेया वैधेया औधेया गालवाश्चेति। सर्व एते वाजसनेयिन इति व्यपदिश्यन्ते॥ एतद्वेदस्य मानमुक्तं चरणव्यूहे—

'द्वे सहस्रे शतन्यूने मन्त्रा वाजसनेयके।
तावन्मानेन संख्यातं वालखिल्यं सशुक्रियम्।
ब्राह्मणं तु समाख्यातं प्रोक्तमानाच्चतुर्गुणम्॥ (cp च०२) इति।

वाजसनेयिनां ब्राह्मणं शतपथसंज्ञकम्। तच्चार्वाचीनमिति भट्टोजीदीक्षितमतम्। सिद्धान्तकौमुद्यां 'पुराणप्रोक्तेषु ब्राह्मणकल्पेषु' (अष्टा० ४।३।१०५) इति सूत्रे भाल्लविनः शाट्यायनिन इत्युदाहृत्य, पुराणेति किम्। याज्ञवल्कानि ब्राह्मणानीति प्रत्युदाहृतम्। तत्स्वारस्याद्यद्यपि याज्ञवल्क्यो न पुराणो मुनिरिति प्रतीयते। तथापि 'याज्ञवल्क्यादिभ्यः प्रतिषेधस्तुल्यकालत्वात्' (वा० ४।३।१०५) इति 'तद्विषयता चेति न' (महाभाष्य ४।२।६६) इति वचनमेतत्सूत्रभाष्ये पतञ्जलिनोपन्यस्तम्। तत्स्वारस्येन याज्ञवल्क्यः पुराण एवेति लभ्यते। अन्यथा वचनारम्भो व्यर्थः स्यात्। पुराणपदेनैव तद्व्यावृत्तेः सिद्धत्वात्। याज्ञवल्क्यस्य वैशम्पायनान्तेवासित्वेन शाट्यायनादितुल्यकालभवत्वाच्च। स्पष्टं चेदमत्रैव सूत्रे शब्देन्दुशेखरे इति दिक्॥

अथ सामवेदस्य सहस्रं शाखा आसन्। तत्रानध्यायेष्वधीयाना बहवः शाखाध्यायिन इन्द्रेण शतपर्वणा निहतास्ततः प्रभृति बह्व्यः शाखा उच्छिन्नाः। कतिचे (? चि) देवावशिष्टाः प्रचरन्ति। यथा—राणायनीयाः शाट्यमुग्राः कापोला महाकापोला लाङ्गलिकाः शार्दूलाः कौथुमाश्चेति[१]। तत्र कौथुमानां षड्भेदाः सन्ति। आसु-

[१] चरणव्यूहस्य द्वितीया कण्डिकात्र द्रष्टव्या। (मं० दे० शा०)

रायणा वातायना प्राञ्जलयो वैनधृताः प्राचीनयोग्या नैगेयाश्चेति। एतन्मानमुक्तं चरणव्यूहे—

'अष्टौ सामसहस्राणि सामानि च चतुर्दश।
ऊह्यानि सरहस्यानीत्येतत्सामगणः स्मृतः॥' (cf. च० ३) इति

अथर्वणवेदस्य नव भेदाः भवन्ति—पैप्पलादाः शौनकीया दामोदास्तोत्तायना जायला ब्रह्मपलाशाः कुनखी देवदर्शी चारणविद्याश्चेति। एतन्मानमुक्तं चरणव्यूहे—

'द्वादशानि सहस्राणि मन्त्राणां त्रिशतानि च।
गोपथं ब्राह्मणं वेदेऽथर्वणे शतपाठकम्[1]॥ (cf. च. ४) इति।

इदमत्र सम्प्रधार्यम्—मन्त्रब्राह्मणयोर्वेदत्वाविशेषेऽपि अत्र लोके प्रागवतरणं मन्त्रभागस्य ततः कालान्तरेण ब्राह्मणभागस्येति। सर्वत्र ब्राह्मणग्रन्थेषु तत्तद्वेदमन्त्राणां यज्ञकर्मसु यथायथमुपयोगस्य बहुधा प्रदर्शितत्वात्। मन्त्रभागेष्वपि ऋक्संहितायाः प्रथममवतरणं ततो यजुःसंहितादेः। यजुर्वेदे बहूनामृङ्मन्त्राणामनुवाददर्शनात्। ऋङ्मन्त्रानवलम्ब्यैव च सर्वेषां साम्नां गीयमानत्वात्॥ एवं वक्ष्यमाणलक्षणानि कल्पसूत्राणि ब्राह्मणग्रन्थोत्तरकालानि। तेषां ब्राह्मणग्रन्थबोधितयज्ञादिकर्मकाण्डप्रपञ्चभूतत्वादिति बोध्यम्॥

तस्यैतस्य वेदचतुष्टयस्य शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति षडङ्गानि सन्ति। एषां प्रयोजनान्युच्यन्ते—वैदिकधर्मानुष्ठानेन द्विजानां ब्राह्मणादिजनानां सकलपुरुषार्थसिद्धिरिति हि वैदिकः सिद्धान्तः। वेदवाक्यानां च गूढार्थत्वादक्रमपाठितत्वाच्च न केवलेभ्यस्तेभ्यो यथावत्कर्मस्वरूपमवगन्तुं शक्यते। तस्माद्वेदार्थविज्ञानसम्पन्नैः कविभिराचार्यैर्वेदेभ्यो लोकस्य धर्मावबोधार्थमिमान्यङ्गानि प्रवर्तितानि॥ तत्र शिक्षा नाम स्वरवर्णाद्युच्चारणरीत्युपदेशकं शास्त्रम्। सा च शिक्षा 'अथ शिक्षां प्रवक्ष्यामि पाणिनीयं मतं यथे'ति पाणिनीया शिक्षा सर्ववेदसाधारणा। अन्या अपि प्रतिशाखं भिन्नाः बह्व्यः[2] शिक्षाः प्रातिशाख्यपदेन[3] व्यवहृताः

---

१ शतप्रपाठकमित्यर्थः।

२ तासु द्वात्रिंशत् (३२) तु संगृहीताः शिक्षासंग्रहनाम्नि पुस्तके वाराणस्यां मुद्रिता उपलभ्यन्त एव। (शि० द०)

३ 'प्रातिशाख्यानां शिक्षापदेन व्यवहारे नास्माकं सम्मतिः। किंतु व्याकरणपदेनैव' इति दाधिमथाः।

सन्ति। यथा शौनकप्रोक्तं पार्षदाख्यं प्रातिशाख्यमृग्वेदस्य। एवमन्यदप्युदाहर्त्तव्यम्। कल्पो नाम वेदविहितानां कर्मणामानुपूर्व्येण सप्रपञ्चकल्पनात्मकं शास्त्रम्। यथा आश्वलायनप्रणीतम् 'अथैतस्य समाम्नायस्य विताने योगापत्तिं वक्ष्याम' इत्यादि षोडशाध्यायीरूपं श्रौतस्मार्तकर्मप्रकाशकमृग्वेदशाखायाः कल्पसूत्रम्। व्याकरणं नाम शब्दार्थव्युत्पत्तिकरं शास्त्रम् 'वृद्धिरादैच्' इत्याद्यष्टाध्यायीरूपं पाणिनिना[1] प्रोक्तम्। इदमेव हि वेदाङ्गत्वेन शिष्टैराद्रियते। लौकिकवैदिकशब्दानां यथात्र साधुत्वमन्वाख्यायते, तथान्यत्र चन्द्रादिप्रोक्तव्याकरणेषु शब्दसाधुत्वनिर्णयस्य सम्पूर्त्यभावात्। निरुक्तं नाम वैदिकपदपदार्थनिरूपणार्थकं शास्त्रम्—'समाम्नायः समाम्नातः स व्याख्यातव्य' इत्यादि त्रयोदशाध्यायीरूपं यास्क[2]मुनिना कृतम्। छन्दो नाम गायत्र्यादीनां छन्दसां लक्षकं शास्त्रम्। 'मयरसतजभनलगसम्मित'मित्यादिरूपं पिङ्गलेन मुनिना प्रणीतम्। ज्योतिषं नाम यज्ञकर्मोपयोगिनः कालस्य ज्ञापकं शास्त्रम् 'पञ्चसंवत्सरमयं युगाध्यक्षं प्रजापति'मित्यादिरूपं गर्गाचार्यप्रणीतम्॥

अथ चत्वार्युपाङ्गानि वेदानां सम्प्रचक्षते।
धर्मशास्त्रं पुराणं च मीमांसा न्यायविस्तरः॥ इति।

तत्र धर्मशास्त्रं नाम आचाराद्युपदेशका मन्वादिप्रणीताः स्मृतिग्रन्थाः। स्मृतिकाराश्च याज्ञवल्क्येनानुकीर्त्तिताः—

मन्वत्रिविष्णुहारीतयाज्ञवल्क्योशनोऽङ्गिराः।
यमापस्तम्बसंवर्त्ताः कात्यायनबृहस्पती।
पराशरव्यासशङ्खलिखिता दक्षगौतमौ।
शातातपो वसिष्ठश्च धर्मशास्त्रप्रवर्त्तकाः॥ (या० स्मृ० १। ४-५) इति॥

क्रतुः सुमन्तुर्बौधायनो व्याघ्रपादित्यादयोऽन्येऽपि स्मृतिकारा अभूवंस्तेषां ग्रन्था उपस्मृति[3]शब्देन व्यपदिश्यन्ते॥ पुराणं नाम

---

१ पाणिनेः सत्ता नन्दनरपतिराज्ये १५०० कलिगताब्दे (१५०१ B.C.) आसीत्। इति दाधिमथाः।

२ यास्कनिरुक्तयोर्नाम महाभारते मोक्षपर्वणि ३४२ अध्याये ६९–७१ श्लोकेषु समुपलभ्यते गणपतिकृष्णाजीमुद्रालयमुद्रिते महाभारतपुस्तके ३६६ पृष्ठे। इति दाधिमथाः।

३ 'उपलक्षणत्वेन स्मृतिशब्देन' इत्येव पाठो योग्यः। याज्ञवल्क्यस्मृतौ नियामकसंख्यापदानुपादानात्। पराशरस्मृतौ काश्यपगार्गीयप्राचेतस-

सृष्टिस्थितिप्रलयानां वेदप्रसिद्धानां मनुहरिश्चन्द्रप्रभृतीनां च वर्णनाय व्यासमुनिविरचितो ग्रन्थः। तच्च पुराणमष्टादशविधम्।

ब्राह्मं पाद्मं वैष्णवं च शैवं लैङ्गं च गारुडम्।
नारदीयं भागवतमाग्नेयं स्कान्दमेव च॥
भविष्यं ब्रह्मवैवर्त्तं मार्कण्डेयं च वामनम्।
मात्स्यं कौर्मं च वाराहं तथा ब्रह्माण्डसंज्ञितम्॥
अष्टादश पुराणानि व्यासोक्तानि विदुर्बुधाः॥ इति॥

मीमांसा नाम वेदवाक्यार्थविचारार्थकं शास्त्रम्। तच्च पूर्वमुत्तरं चेति द्विविधम्। तत्र पूर्वमीमांसा 'अथातो धर्मजिज्ञासे'त्यादि-द्वादशाध्यायीरूपा धर्ममीमांसा भगवता जैमिनिना कृता। उत्तरा तु ब्रह्ममीमांसा 'अथातो ब्रह्मजिज्ञासे'त्यादि चतुरध्यायीरूपा भगवता व्यासेन कृतेत्याहुः। न्यायविस्तरो नाम प्रमाणैरर्थपरीक्षणोपदेशकं शास्त्रम्। गौतमेन कणादेन च मुनिना कृतम्। तदेवं वेदार्थविद्भि-राचार्यैर्जनानां सुहृद्भावमुररीकृत्य वेदार्थज्ञापनायाङ्गानि चोपाङ्गानि च प्रवर्त्तितानि। तदनुसारेणैवार्वाचीनैः सर्वैर्वेदार्थो यथाकथञ्चित् विज्ञायते। नत्वन्यथा ज्ञातुं शक्येत। तथा चोक्तं पूर्वाचार्यैः—'न प्रत्यक्षमनृषेरस्ति मन्त्रः' (बृ० दे० ८। १२९) इति। सोऽयं साङ्गो-

---

धर्माणामपि मानवादिधर्मसमानतयैकपङ्क्तावुपादानाच्च। इति दाधिमथाः। अतएव वीरमित्रोदयेशङ्खलिखितौ—"स्मृतिर्धर्मशास्त्राणि तत्प्रणेतारोमनु-विष्णु-यम—दक्षाङ्गिरो-ऽत्रिबृहस्पत्युशन-आपस्तम्ब-वसिष्ठ-कात्यायन-परा-शर-व्यास—शङ्ख—लिखित—संवर्त—गौतम-शातातप-हारीत-याज्ञवल्क्य-यम-प्राचेतसादयः॥" आदिपदेन कल्पतरौबुध-देवल-सोम-जमदग्नि-वि-श्वामित्र-प्रजापति-नारद-पैठीनसि-पितामह-बौधायन-छागलेय-जाबाल-च्य-वन-मरीचि-कश्यपा उक्ताः॥ पैठीनसिः—

"तेषां मन्वङ्गिरोव्यासगौतमात्र्युशनोयमाः। वसिष्ठदक्षसंवर्तशातातप-पराशराः॥ विष्णवापस्तम्बहारीताः शंखः कात्यायनो भृगुः। प्रचेता नारदो योगी बौधायनपितामहौ॥ सुमन्तुकश्यपौ बभ्रुः पैठीनो व्याघ्र एव च। सत्यव्रतो भरद्वाजो गार्ग्यः कार्ष्णाजिनिस्तथा॥ जाबालिर्जमदग्निश्च लौगाक्षिर्ब्रह्मसंभवः (?)। इति धर्मप्रणेतारः षट्त्रिंशदृषयस्तथा॥" इति समुपलभ्यते॥

अत्र षट्त्रिंशत्संख्योपादानस्याप्युपलक्षणतया षट्त्रिंशन्मत-चतुर्विंशति-मतादीनामपि प्रमाणत्वेनोपन्यासो हेमाद्र्यादिमहानिबन्धेषु कृतो दृश्यते॥ इति दाधिमथाः।

पाङ्गो वेदः प्रवृत्तनिवृत्तलक्षणधर्म्मस्य नीतिव्यवहारादिज्ञापकविद्यानां च भूमिरित्याह याज्ञवल्क्यः—

पुराणन्यायमीमांसाधर्म्मशास्त्राङ्गमिश्रिताः ।
वेदाः स्थानानि विद्यानां धर्म्मस्य च चतुर्दश ॥ (या० स्मृ० १।३)

इति । षडङ्गानि चत्वार्युपाङ्गानि चत्वारो वेदाश्चेत्येते चतुर्दश विद्यानां धर्म्मस्य च स्थानानि क्षेत्रभूमिरित्यर्थः ॥

धर्म्मनिर्णये प्रमाणान्याह मनुर्द्वितीयेऽध्याये—

वेदोऽखिलो धर्म्ममूलं स्मृतिशीले च तद्विदाम् ।
आचारश्चैव साधूनामात्मनस्तुष्टिरेव च ॥ (मनु०२।६) इति । वेद

ऋग्यजुःसामाथर्वणलक्षणः सर्वोऽपि विध्यर्थवादमन्त्रात्मको धर्म्ममूलं धर्म्मे प्रमाणभूत इत्यर्थः । स्मृत्यादीनामपि वेदमूलत्वेनैव प्रामाण्यप्रदर्शनार्थमाह तद्विदामिति । वेदविदां मन्वादीनां स्मृतिः शीलं च धर्म्मे प्रमाणम् । स्मृतयः प्रदर्शिताः । शीलं ब्रह्मण्यतादिरूपम् । तदाह हारीतः—ब्रह्मण्यता देवपितृभक्तता सौम्यताऽपरोपतापिताऽनसूयता मृदुता अपारुष्यं मैत्रता प्रियवादित्वं कृतज्ञता शरण्यता कारुण्यं प्रशान्तिश्चेति त्रयोदशविधं शीलमिति[1]। साधूनां धार्म्मिकाणामाचारः कम्बलवल्कलादिधारणरूपः । आत्मनस्तुष्टिर्मनसः प्रसन्नता । यथा 'गर्भाष्टमेऽष्टमे वाब्दे ब्राह्मणस्योपनायन' मित्यादिवैकल्पिकानुष्ठाने कर्तुः सन्तोषोऽपि धर्म्मनिर्णये प्रमाणमिति तदर्थः ॥

अथैषां प्रमाणानां परस्परविरोधे श्रुत्यर्थस्य प्राबल्यम्, स्वीकार्यता चेति वदन्ति । ननु स्मृत्यादयो यदि वेदविरुद्धार्थमपि प्रतिपादयेयुस्तर्हि तेषां शाक्यस्मृतितुल्यत्वाद्वैदिकधर्म्मानुशासने ग्राह्यतैव मास्त्विति चेत् । मैवम् । वेदगतानां धर्म्मादिविचाराणां प्रवचनार्थं प्रवृत्तानां मन्वादिस्मृतीनां शाक्यस्मृतिसादृश्यस्य सर्वथाप्यसम्भावनीयत्वात् । शाक्यस्मृतेस्तु वैदिकधर्म्मोच्छेदायैव प्रवृत्तत्वाच्च । यत्तु क्वचिन्मन्वादिस्मृतिषु वैदिकार्थविरुद्धमुपलभ्यते, तदपि न प्रधानभूतं वैदिकधर्म्मं प्रतिहन्ति, किंत्वङ्गभूतां काञ्चित् क्रियामेव । यथा अग्निष्टोमयागे सदोमण्डपे काचिदौदुम्बरी शाखा निखन्यते । तस्याश्च सर्वतो वेष्टनम् 'औदुम्बरी सर्वा वेष्टयितव्या' इति स्मृतिराचष्टे । श्रुतिस्तु 'औदुम्बरीं स्पृष्ट्वोद्गायेत्' इति तस्याः

---

१ मनुस्मृतेः कुल्लूकभट्टीयटीकायां (२।६) समुद्धृतमेतद्वचनम् ।[मं०दे०शा०]

शाखायाः स्पर्शं कृत्वोद्गात्रा सामानि गेयानि इति । एवं च सर्व-वेष्टने स्पर्शस्य बाधः स्पर्शे वा सर्ववेष्टनस्येत्येवं रीत्या श्रुतिविरुद्ध-मपि सर्ववेष्टनं प्रतिपादयन्ती स्मृतिर्न ज्योतिष्टोमयागं न वा साम-गानाक्रियां प्रतिक्षिपति किंत्वङ्गभूतं स्पर्शमात्रम्। ततश्चैवंविधविषये स्मार्त्तं मतं केवलमुपेक्षणीयं भवति। नह्येतावता तदप्रमाणमेव सर्व-थेति मन्तव्यम्। यतो वैदिकधर्म्मचारिभिर्वेदार्थविद्भिश्च स्मृतिकारै-र्यत्स्वग्रन्थेष्वलेखि तत्सर्वं मूलभूतं वेदवचनं पर्यालोच्यैव । परन्तु सम्प्रति बह्वीनां वेदशाखानामुच्छिन्नत्वेन तादृशस्मृत्यनुकूलमूल-भूतवेदवचनस्यानुपलम्भः। प्रत्यक्षानुमितयोः प्रत्यक्षस्य बलीयस्त्वा-त्प्रत्यक्षोपलब्धश्रुतिसिद्धस्य औदुम्बरीस्पर्शादेरेवानुष्ठानमादरणीय-मित्याहुः । एवं च प्रत्यक्षश्रुत्यविरोधि यत्स्मार्त्तं कर्म्म तद्वैदिकवदा-दरणीयमेवेति सिध्यति। यदाह याज्ञवल्क्यः—

श्रुतिस्मृतिविरोधे तु श्रुतिरेव गरीयसी।
अविरोधे तथा कार्यं स्मार्त्तं वैदिकवत् सदा[१] ॥ इति ।

किं बहुना, साधनभूतैः स्मृतिग्रन्थैरेव वैदिको धर्म्मोऽवगन्तुं शक्यत इत्युक्तम्। आश्वलायनादिप्रणीतानां कल्पसूत्राणां स्मृति-ष्वेवान्तर्भावः। यद्यपि ब्राह्मणग्रन्थेभ्यो धर्मानुष्ठानशैली बुध्यते, तथापि न स्मृतिग्रन्थेभ्य इवासंदिग्धा बुध्यते । सूक्ष्मचित्रपटस्य चन्द्रालोकेन दीपप्रकाशेन वा समवलोकने यावान् विशेषस्तावान् विशेषो ब्राह्मणग्रन्थतः कल्पसूत्रादिस्मार्त्तग्रन्थतो वा धर्म्मतत्त्वाव-बोधे वर्तते। किंच न केवलं स्मार्त्तग्रन्थमात्रपर्यालोचनेन धर्म्मतत्त्व-जिज्ञासूनामिष्टसिद्धिः सम्पद्यते। किन्तु परम्परागतयाज्ञिकसम्प्रदा-यानुरूपा अग्निहोत्रादिक्रिया आर्याणां गृहे यथावदनुष्ठीयन्ते तासां निरीक्षणमपि तत्रोपयुज्यत एव। एवं च स्मृतिवत् सदाचारोऽपि धर्मे प्रमाणम्। अत्रेदमवधेयम्—

श्रुतयः सर्वतो मुख्यं प्रमाणं धर्म्मनिर्णये ।
तासां मध्येऽपि मुख्यत्वमृग्वेदस्येति च स्थितम् ॥ इति।

तथा चैतरेयब्राह्मणस्य प्रथमाध्यायस्य चतुर्थखण्डे श्रूयते— "एतद्वै यज्ञस्य समृद्धं यद्रूपसमृद्धं यत्कर्म्म क्रियामाणमृगभिवदति" इति । यद्यज्ञे क्रियमाणं कर्म्म ऋगभिवदति तदेतद्यज्ञस्य समृद्धं

१ मन्वर्थमुक्तावल्या( २ । १२ )मेष श्लोको जावालीयत्वेन समुद्धृतः। याज्ञवल्क्यस्मृतौ तु नोपलभ्यते। [ मं० दे० शा० ]

सम्पन्नं स्वरूपम्। अन्यथा त्वसम्पन्नमिवेति भावः। कृष्णयजुर्वेदेऽपि श्रूयते "यदेतत् साम्ना यजुषा च क्रियते तच्छिथिलम्, यदृचा क्रियते तद् दृढम्" इति। एतेन ऋग्वेदस्य सर्वतोऽभ्यर्हितत्वमवगम्यते॥

अथात्र वेदप्रतिपाद्यस्य धर्म्मस्य मूलतत्त्वं सत्यमस्ति। तथाहि शतपथब्राह्मणस्य चतुर्दशे काण्डे चतुर्थप्रपाठके पठ्यते-'स नैव व्यभवत् तच्छ्रेयोरूपमत्यसृजत धर्म्मम्। तदेतत् क्षत्रस्य क्षत्रं यद्धर्मस्तस्मात्परं नास्ति। अथो अबलीयान् बलीयांसमाशंसते धर्मेण यथा राज्ञैवं यो वै स धर्मः सत्यम्'( बृ० उ० १।४।१४ ) इत्यादि। ऐतरेयब्राह्मणेऽपि प्रथमाध्यायस्य षष्ठे खण्डे पठ्यते—'ऋतं वाव दीक्षा सत्यं दीक्षा तस्माद्दीक्षितेन सत्यमेव वदितव्यम्' इति। यद्यपि मनुष्येषु सर्वदा सत्यमेव वदितुं को नाम शक्नुयात्, भ्रमप्रमादादिदोषेण कदाचिदप्यसत्यभाषणं प्रसज्येत। तथापि यो वै स्वयमनुभूतमेव भाषितुमभ्यस्येत्तस्य प्रायशो नानृतभाषणं स्यात्। मनुष्यशरीरे हि सत्यरूपं चक्षुर्देवैर्निहितम्। अत एव कंचिदर्थं भाषमाणं प्रत्याह लोकः—'अयि भो यदात्थ (?) भवान् दृष्टवानसि तत्'। ततो 'दृष्टवानस्मी' ति यदा स ब्रूते, तदा श्रद्दधते जना नान्यथेति। स्पष्टश्चायमर्थोऽपि प्रोक्तब्राह्मणे एवानुपदं प्रदर्शितः। एवं च 'यज्ञा नानाविधा दानं व्रतानि नियमा यमाः। योगो ज्ञानं चैवमाद्यं रूपं सत्यस्य वै बहु॥' तथा च ऋग्वेदस्य तृतीयाष्टके षष्ठाध्याये श्रूयते—'ऋतस्य दृढा धरुणानि सन्ति पुरूणि चन्द्रा वपुषे वपूंषि' ( ऋ० ४।२३।९ ) इति। ऋतस्य सत्यरूपस्य धर्म्मस्य वपूंषि शरीराणि पुरूणि बहूनि सन्ति। तानि धरुणानि पततां जनानां धारकाणि दृढा दृढानि। चन्द्रा आह्लादकानि च सन्तीति तदर्थः। तस्माद्यो मनुष्यः सत्यात् प्रमाद्यति सोऽधर्म्मेणाभिभूतो महति सङ्कटे पतति।

---

१ प्रजापतिः सर्वाः प्रजाः सृष्ट्वा कथमासां प्रजानां सुप्रतिष्ठा स्यादिति विचारयन् सन् श्रेयोरूपं धर्ममसृजत। स च सर्वतो बलिष्ठः समभवत्। यतः सर्वशासकस्य क्षत्रियस्याप्ययं शासिता। प्रबलो वा दुर्बलो वा सर्वोऽपि धर्मानुशासनं प्रमाणयति। सत्यं वदन् लोके धर्मं वदतीत्युच्यते। सत्यं परिपालयन् दुर्बलोऽपि न प्रबलैः पराभूयते। तस्मात्सत्यमूलकत्वादेव धर्मस्य बलिष्ठत्वमिति श्रुतितात्पर्यम्॥

२ ऐतरेयब्राह्मणे।

ततस्तस्य सङ्कटान्मुक्तये सत्यावलम्बं विना नान्यः कश्चिदुपायोऽस्ति। यो हि सत्यं परिपालयन् वर्त्तेत स नूनमुत्तमां पदवीमारोहेत्। तथा च श्रूयते—'सत्यं परं पर१ँ सत्य१ँ सत्येन न स्वर्गाल्लोकाच्च्यवन्ते कदाचन। सता१ँ हि सत्यं तस्मात् सत्ये रमन्ते' (तै० आ० १०। ६२) इति। तथा ऋग्वेदेऽप्यष्टमाष्टकस्य तृतीयेऽध्याये श्रूयते—

सत्येनोत्तभिता भूमिः सूर्येणोत्तभिता द्यौः।
ऋतेनादित्यास्तिष्ठन्ति दिवि सोमो अधिश्रितः॥ (ऋ० १०। ८५। १) इति।

उत्तभिता अभ्युद्धृता, द्यौः सुरलोकः, आदित्या देवाः, ऋतेन सत्येन दिवि तिष्ठन्ति। किञ्च सोमश्चन्द्रोऽपि ऋतेन दिवि अधिश्रितोऽधिष्ठित इति तदर्थः। एवं च सत्यमेव तत्र तत्र धर्म्मरूपेण फलप्रदत्वेन च सङ्कीर्त्यते। तस्मात् सत्यं धर्म्मस्य मूलतत्त्वं स्थितमित्याहुः॥

सोऽयं धर्म्मो द्विधार्याणां सम्मतो वेदशास्त्रतः।
प्रवृत्तश्च निवृत्तश्चेत्येवं भेदविवक्षया॥

तयोः स्वरूपं द्वादशाध्याये मनुः सस्मार—

इहामुत्र च वा काम्यं प्रवृत्तं कर्म्म कीर्त्यते।
निष्कामं ज्ञानपूर्वं तु निवृत्तमुपदिश्यते॥ (मनु० १२। ८९) इति॥

प्रवृत्तिलक्षणो धर्म्मो द्विधा श्रौतस्मार्त्तभेदात्। तत्र श्रुतिभ्य आगतः श्रौतः, स्मार्त्तस्तु स्मृतिभ्यः। अग्न्याधानाग्निहोत्रादयो हि ऋग्वेदस्य सामवेदस्य च मन्त्रभागे स्थलविशेषे प्रसङ्गवशादुपवर्णिताः श्रूयन्ते। यजुर्वेदे तु दर्शपौर्णमासेष्ट्यादिरूपा यज्ञक्रिया स्फुटमुपनिबद्धा। वेदत्रयस्य ब्राह्मणभागेऽपि सर्वेषां यज्ञानां सेतिकर्तव्यताकानां निरूपणमस्तीति अग्निहोत्रादयो धर्म्माः श्रुतिप्रतिपादिताः सन्तः श्रौतसंज्ञामालभन्त। गृह्याग्निसाध्यानि पाकयज्ञादिसंस्कारकर्म्माणि तु वेदत्रयस्य मन्त्रभागेन ब्राह्मणभागेन वा न विस्पष्टमभिधीयन्ते। किंत्वाश्वलायनादिगृह्यसूत्रप्रभृतिभिः स्मृतिग्रन्थैः। तस्मात्तानि स्मार्त्तसंज्ञामालभन्त। ननु मनुयाज्ञवल्क्यादिप्रोक्तधर्म्मसंहितानां स्मृतिपदेन व्यवहारः। तत्र तु न गृह्यसूत्रोक्तकर्म्मणां यथाव-

१ तैत्तिरीययजुरारण्यकान्तर्गतनारायणोपनिषदि एकषष्टितमेऽनुवाके निःश्रेयसस्य द्वादश साधनान्युक्तानि। तत्र मूलभूतप्रथमसाधनबोधकोऽयं मन्त्रः।

स्थितं स्वरूपमुपदिश्यते। सूत्रग्रन्थस्य त्वङ्गसंज्ञा, न स्मृतिसंज्ञा, तत्कथमेषां स्मार्त्तसंज्ञेति चेत्। उच्यते-पूर्वमीमांसायां स्मृत्यधिकरणे न्यायवित्समयस्य स्मृतित्वकथनादङ्गेष्वपि स्मृतित्वमविशिष्टमेव। तथा च मिताक्षरायां विज्ञानेश्वरेण पाणिनीयव्याकरणसूत्रेऽपि स्मृतित्वव्यवहारः कृतः। यथा व्यवहाराध्यायारम्भे "व्यवहारान् नृपः पश्येद्विद्वद्भिर्ब्राह्मणैः सह" (या० स्मृ० २। १) इति वचनव्याख्यानावसरे "ब्राह्मणैः सहेति तृतीयानिर्देशात् तेषामप्राधान्यं 'सहयुक्तेऽप्रधाने' (पा० २। ३। १९) इति स्मरणादि"ति। ननु स्मार्त्तेषु कर्म्मस्वपि तत्तद्वेदमन्त्रा एव विनियुज्यन्ते। संवदन्ति च ते तानि तानि गृह्यसूत्राद्युक्तकर्म्माणि। किञ्चाश्वलायनगृह्ये प्रथमाध्यायस्य त्रयोदशे खण्डे "उपनिषदि गर्भलम्भनं पुंसवनमनवलोभनं च" इति स्मर्यते। तत्र वृत्तिकृता नारायणभट्टेनोक्तम्। न केवलमेत एव संस्कारा वेदे उक्ताः किन्तु गर्भाधानाद्यात्मज्ञानान्ताः सर्वेपि संस्कारास्तत्र तत्रोक्ताः सन्तीति। अत्र यद्यपि वृत्तिकृता तत्तत्संस्कारबोधिकाः श्रुतयो विशिष्य न प्रदर्शिताः तथापि गवेषणायामारब्धायां तथोपलभ्यन्त एव। तथा हि—शतपथब्राह्मणस्य चतुर्दशे प्रपाठके नवमाध्याये—"अथाभिप्रातरेव स्थालीपाकावृताज्यं चेष्टयित्वा स्थालीपाकस्योपघातं जुहोत्यग्नये स्वाहा" (बृ० उ० ६। ४। १९) इत्यादिना गर्भाधानम्। "अथ य इच्छेत्पुत्रो मे पण्डितो विजिगीथः" (बृ० उ० ६। ४। १८) इत्यादि पुंसवनम्। "जातेऽग्निमुपसमाधाय" (बृ० उ० ६। ४। २४) इत्यादिना जातकर्म्म चोक्तम्। तथा शतपथब्राह्मणस्यैकादशे प्रपाठके पञ्चमाध्याये "पञ्चैव महायज्ञास्तान्येव महासत्राणि भूतयज्ञो मनुष्ययज्ञः पितृयज्ञो देवयज्ञो ब्रह्मयज्ञ इति" इति श्रूयते। तथा कृष्णयजुःसंहितायाः प्रथमकाण्डे सप्तमप्रपाठके "पाकयज्ञं वा अन्वाहिताग्नेः पशव उपतिष्ठन्ते" इदि पठ्यते। आहिताग्नेर्यजमानस्य पाकयज्ञमनु अनुष्ठानानन्तरं पशव उपतिष्ठन्ते उपस्थिता भवन्ति इति तदर्थः। तथा जाबालोपनिषदि—"ब्रह्मचर्यं समाप्य गृही भवेद्, गृहाद्वनी भूत्वा प्रव्रजेत्" (जा० उ० ४) इति पठ्यते। एवं च प्रदर्शितश्रुतिवाक्येभ्योऽपि स्मृत्युक्तानां कर्म्मणां भवत्युपलब्धिः, तत्कुतो नैषां श्रौतपदेन व्यवहार इति चेत्। उच्यते—मन्त्रब्राह्मणात्मकवेदभागस्याग्निहोत्रादिवैतानिकक्रियाप्रतिपादनाय यथा प्रवृत्तिस्तथा पाकयज्ञादिक्रियाप्रतिपादनाय प्रवृत्तेरभावान्न तेषां श्रौतसंज्ञा संवृत्तेति। स्मृतिग्रन्थो-

त्पत्तेः पूर्वमपि पाकयज्ञादिसंस्कारकर्म्माण्यार्यजनैः क्रियमाणान्यभूवन्निति तु समनन्तरोक्तश्रुतिवाक्येभ्योऽनुमातुं शक्यत एव। परं तदानीन्तनानां तेषां कर्म्मणां निर्णीतं स्वरूपं तु न शक्यतेऽवगन्तुम्। अविकलकर्म्मस्वरूपावबोधकानां वाक्यानां प्रचरन्तीषु श्रुतिष्वनुपलम्भात्। अग्निहोत्रादीनां वैतानिककर्म्मणां तु स्वरूपं प्रायो ब्राह्मणग्रन्थतोऽवबुध्यते। वेदकालानन्तरं नानाविधान् पारम्पर्यक्रमागतयाज्ञिकसम्प्रदायान् पर्यालोच्य यदा वेदार्थकुशलैराचार्यैः शाखाभेदेन सम्प्रदायभेदं व्यवस्थाप्य वैतानिकानां गृह्याणां च कर्म्मणां सुगमा पद्धतिः सूत्रग्रन्थैराबद्धा, सोऽयं सूत्रकालः साङ्गगृह्यकर्म्मणां ज्ञापको व्यवस्थापकश्चाभवत्। एवं च यानि साङ्गानि श्रुतिषूपदिश्यन्ते तान्येवाग्निहोत्रादीनि श्रौतानि। यानि तु साङ्गानि स्मृतिषूपदिश्यन्ते तानि कर्म्माणि स्मार्त्तानीत्युच्यन्ते इति तत्त्वम्॥

यत्त्वत्र केचिद्वदन्ति—'ऋग्वेदकाले आर्याणां धर्म्मः केवलं देवतास्तुतिलक्षण एवासीन्न क्रियाबहुलो यज्ञप्रधानः। ततो बहुना कालेन ऋग्वेदसाध्ये धर्म्मे संदिहानैर्ऋचां गूढार्थत्वमाकलय्य त(ता?)त्कालिकैर्ऋषिभिः प्राधान्येन यज्ञक्रियाबोधको यजुर्वेदः प्रणिन्ये, तं वेदमनुसृत्यार्यजनाः कर्म्मबहुलं होमप्रधानं धर्म्ममाचेरुः। ततश्च हेतोरिमे ऋग्वेदकालीनेभ्यो जनेभ्योऽपकृष्टाः सन्देहमूढा अभूवन्। एवमुत्तरोत्तरं सन्देहमन्दता ववृधे आर्यप्रजायाः' इति। तदेतदापाततो रमणीयम्। यजुर्वेदेन सामवेदेन वा प्रतिपाद्यस्य कर्म्मणो विनियोगमाचक्षाणानां बहूनां मन्त्राणामृग्वेदे श्रूयमाणत्वात्। तथा हि। ऋग्वेदे प्रथमाष्टकस्यारम्भे एव।

अग्ने यं यज्ञमध्वरं विश्वतः परिभूरसि।
स इद्देवेषु गच्छति॥ (ऋ० १।१।४)
इति पठ्यते॥ तथा—
समिधाऽग्निं दुवस्यत घृतैर्बोधयतातिथिम्।

---

१ हे अग्ने त्वं यं यज्ञमध्वरं विश्वतः सर्वतः परिभूरसि व्याप्नोषि। स यज्ञो देवेषु गच्छति। तान् प्रति प्राप्नोतीत्यर्थः।

२ हे ऋत्विजो यूयम् अग्निं समिधा यज्ञियकाष्ठेन दुवस्यत। परिचरत। अतिथिम् अतिथिसदृशमग्निं घृतैर्बोधयत प्रदीपयत। ततश्च अस्मिन्नग्नौ हव्या चरुपुरोडाशादिहवनीयद्रव्याणि जुहोत जुहुत। †नेति पादपूरणे।

† 'न' इत्यस्य पादपूरणार्थकपदान्तरत्वकल्पनं 'तप्तनप्तनथनाश्च' इति (७।१।४५) पाणिनीयसूत्रविहितस्य तनपो विस्मरणमूलकमेवेति 'जुहोतन'

अ(आ?)स्मिन् हव्या जुहोतन ॥ ( ऋ० ८ । ४४ । १ )

इति षष्ठाष्टके तृतीयेऽध्याये पठ्यते। तथाष्टमाष्टकस्य षष्ठेऽध्याये पठ्यते।

[1]सद्यो जातो व्यमिमीत यज्ञमग्निर्देवानामभवत् पुरोगाः।

अस्य होतुः प्रदिश्यृतस्य वाचि स्वाहाकृतं हविरदन्तु देवाः ( ऋ० १० । ११० । ११ ) इति।

एवमाद्यैर्बहुभिर्ऋङ्मन्त्रैरग्नौ हविर्द्रव्याहुतिसाध्यो यज्ञो धर्म्मत्वेन वर्णितः श्रूयते। किंच "यज्ञेन यज्ञमयजन्त देवास्तानि धर्म्माणि प्रथमान्यासन्" ( ऋ० १ । १६४ । ५० ) इत्यादिऋगादिश्रुतिमन्त्रेषु स्फुटमेव धर्म्मत्वेन सङ्कीर्त्तनं यज्ञस्य वर्तते। तस्माद्ब्राह्मणग्रन्थतो वा कल्पसूत्रादिवेदाङ्गग्रन्थेभ्यो वा यद्वेदतात्पर्यमध्यवसीयते, तदेव यथार्थम्। यत्त्वर्वाचीनैरस्मद्विधैर्यथाकथंचित् परिकल्पितं तन्न प्रामाणिकानामादरपात्रं स्यादिति कृतबुद्धयो विदाङ्कुर्वन्तु ॥

इति भट्टयज्ञेश्वरोन्नीते आर्यविद्यासुधाकरे

प्रथमः प्रकाशः

---

इत्येकमेव क्रियापदं बोध्यमिति दाधिमथाः।

१ सद्योजातोऽरणिनिर्मन्थनेन समुद्भूतोऽग्निर्यज्ञं व्यमिमीत निर्म्मितवान्। अथ च देवानां पुरोगाः अग्रेसरोऽभवत्। अस्य ऋतस्य सत्यस्वरूपस्य होतुर्देवानामाह्वयितुरग्नेर्वाचि प्रदिशि मुखप्रदेशे स्वाहाकृतं स्वाहाशब्दमुच्चार्य हुतं हविर्हवनीयद्रव्यं देवा अदन्तु भक्षयन्तु इति तात्पर्यार्थः।

## ॥ प्रकाशो द्वितीयः ॥

येन सम्प्रस्थिता आर्याः समासेदुस्त्रिविष्टपम् ॥
श्रौतयज्ञाध्वनस्तस्य क्रियते दिक्प्रदर्शनम् ॥१॥

तत्र तावत् कृष्णयजुःसंहितायाः प्रथमकाण्डे षष्ठप्रपाठके नवमानुवाके "प्रजापतिर्यज्ञानसृजत। अग्निहोत्रं चाग्निष्टोमं च पौर्णमासीं चोक्थं चामावास्यां चातिरात्रं च" इत्यादिना यज्ञानुकीर्त्तनं श्रूयते। तेषां च बहवः प्रभेदा अपि तत्र तत्र यजुर्वेदश्रुतिषु समुपदिष्टाः सन्ति। तेषु कतिचिदिह नामतो निर्दिश्यन्ते। अग्न्याधेयमग्निहोत्रं दर्शपौर्णमासौ आग्रयणी चातुर्मास्यानि निरूढपशुबन्धः सौत्रामणी चेति सप्त हविर्यज्ञसंस्थाः। अग्निष्टोमोऽत्यग्निष्टोम उक्थःषोडशी वाजपेयोऽतिरात्र आप्तोर्यामेति सप्त सोमयज्ञसंस्थाः। राजसूयाश्वमेधौ क्षत्रियविषयावेवेति।

तत्र केचित् प्रकृतिरूपाः, केचिद्विकृतिरूपाः, केचिदुभयरूपाः, केचिदनुभयरूपा इत्येवं चातुर्विध्यं यज्ञानाम्। सर्वेऽपि श्रौतयज्ञा अस्मिन् भेदचतुष्टयेऽन्तर्भवन्ति। उत्पत्तिवाक्ये एव सर्वाङ्गसहितो य उपदिश्यते स यज्ञः प्रकृतिरूपः। ताश्च प्रकृतयस्तिस्रः— अग्निहोत्रमिष्टिः सोमश्चेति। एषां स्वरूपाणि वक्ष्यामः। यस्योत्पत्तिवाक्ये प्रधानभूतः कर्मविशेष उपदिश्यते इतरदङ्गजातं प्रकृतिस्थमेवातिदिश्यते स यज्ञो विकृतिरूपः। यथा मासाग्निहोत्रादयोऽग्निहोत्रस्य, कृष्णयजुर्वेदीयद्वितीयकाण्डोक्ताः काम्येष्टयो दर्शपूर्णमासेष्ट्योर्विश्वजिदादिश्च सोमयागस्य विकृतिः। यस्मिन् यज्ञे यज्ञान्तरीयाङ्गान्यतिदिश्यन्ते स्वकीयान्यसाधारणानि चाङ्गानि अन्यत्रापि यज्ञविशेषे उपयुज्यन्ते स उभयात्मकः। यथा ज्योतिष्टोमाङ्गभूतोऽग्नीषोमीयपशुयागः। यस्मिन् यज्ञे यज्ञान्तरीयाण्यङ्गानि नातिदिश्यन्ते स्वकीयान्यप्यङ्गानि यज्ञान्तरेषु नातिदिश्यन्ते स यज्ञोऽनुभयात्मकः। यथा—अग्न्याधेयमग्निचयनं चेति बोध्यम्।

सर्वेषां यज्ञानां संस्कृताग्निसाध्यत्वात् प्रथमं वेदोक्तविधिनोत्पादितस्याग्नेर्गार्हपत्यादिरूपेण यदाधानं प्रतिष्ठापनं तदग्न्याधानमुच्यते। इदं चाग्न्याधानं ब्राह्मणो वसन्ते क्षत्रियो निदाघे वैश्यः

शरदि हेमन्ते वा रथकारस्तु वर्षासु विदध्यादिति शतपथब्राह्मणस्यैकादशे काण्डे आपस्तम्बबौधायनादिसूत्रग्रन्थे च स्पष्टः। एवं माघादिमासा रोहिण्यादिनक्षत्राण्यपि तत्रैवोक्तानि। अग्नीनाधास्यमानो द्विजः कृच्छ्रचान्द्रायणादिव्रताचरणेन कूष्माण्डीहवनादिना च निष्पापो भूत्वा दैवकर्मविषयकश्रद्धासम्पन्नो योऽभिजायते, स श्रौतयज्ञानुष्ठानेऽधिक्रियते। श्रद्धा हि सकलकर्मकाण्डस्य मूलम्। तां विना कर्मणां सम्प्रवृत्त्यभावात्। यथा निर्मूलः शिथिलमूलो वा द्रुमो न प्रतिष्ठामवाप्नोति तथैव श्रद्धां विना कर्माणि। तदुक्तं कृष्णयजुःसंहितायाः प्रथमकाण्डस्य षष्ठप्रपाठके—"यो वै श्रद्धामनारभ्य यजते नास्येष्टाय श्रद्दधते" इति। श्रद्धाविधुरस्य यजमानस्य यज्ञमभिगन्तुं देवा न विश्वसन्तीति तदर्थः।

अथ श्रद्धापूते मनसि कर्त्तव्यत्वेन निश्चितस्य कर्मणो ब्रह्मसभायामुच्चैर्वाचा यः संवादः स सङ्कल्प इत्युच्यते। यथा सर्ववाञ्छितकामोऽहमग्नीनाधास्ये इत्यग्न्याधानस्य सङ्कल्पः। एवं यथायथं कर्मविशेषे सङ्कल्पवाक्यान्यूह्यानि। सङ्कल्पवाक्येन प्रतिज्ञातस्य कर्मणः साङ्गमनुष्ठानमेकाकिना यजमानेन कर्त्तुमशक्यम्। अत एवर्त्विजां वरणम्। आर्त्विज्यं हि कुलशीलविद्यादिसद्गुणमण्डिता ब्राह्मणा एवार्हन्ति। नान्ये द्विजातयः। विप्रेतरेषां याजनादावाधिकारस्याविधानात्। तत्राग्न्याधेयेऽध्वर्युर्होतोद्गाता ब्रह्मा चेति चत्वार ऋत्विजः। अग्निहोत्रे त्वेक एवाध्वर्युः। दर्शपौर्णमासादीष्टिषु अध्वर्युर्होता आग्नीध्रो ब्रह्मा चेति चत्वारः। चातुर्मास्येषु प्रतिप्रस्थाता पञ्चमोऽधिकः। पशुबन्धे मैत्रावरुणः षष्ठोऽधिकः। सोमयागे तु ब्रह्मादयः षोडशर्त्विजो व्रियन्ते। ते च ब्रह्मोद्गाता होताऽध्वर्युर्ब्राह्मणाच्छंसी प्रस्तोता मैत्रावरुणः प्रतिप्रस्थाता पोता प्रतिहर्त्ताऽच्छावाको नेष्टाऽऽग्नीध्रः सुब्रह्मण्यो ग्रावस्तुदुन्नेता चेति। आपस्तम्बसूत्रे तु सदस्यः सप्तदशोऽधिकः कौषीतकिश्रुतिप्रामाण्येन गृहीत इति स्थितम्। एषां सर्वेषां मुख्याश्चत्वार एव। अन्ये तु एषामेव चतुर्णां सहायपुरुषाः। यतः केषुचिद्यज्ञेषु कर्मबाहुल्यादध्वर्युप्रभृतिना एकैकेन स्वीययावत्कर्मानुष्ठानं दुष्करम्, अतः सहकारिणोऽपेक्ष्यन्ते। तत्राध्वर्योः सहायपुरुषाः प्रतिप्रस्थाता नेष्टोन्नेता चेति त्रयः। होतुर्मैत्रावरुणोऽच्छावाको ग्रावस्तुदिति त्रयः। उद्गातुः प्रस्तोता प्रतिहर्त्ता सुब्रह्मण्यश्चेति त्रयः। ब्रह्मणो

ब्राह्मणाच्छंसी आग्नीध्रः पोता चेति त्रयः। तत्राग्नावाहुतिप्रक्षेपादिकमध्वर्योः कर्म्म। यज्ञियदेवानां स्तुतिपूर्वकमाह्वानं होतुः कर्म्म। देवताप्रीतिकरं सामगानमुद्गातुः कर्म्म। सर्वस्मिन् यज्ञकर्म्मणि सावधानमन्वीक्षणं कर्म्मविशेषेऽनुमतिप्रदानजपादिकं च ब्रह्मणः कर्म्म विहितम्। तदेतदृचाप्युक्तमष्टमाष्टके द्वितीयाध्याये।

ऋचां त्वः[1] पोषमास्ते पुपुष्वान् गायत्रं त्वो गायति शक्वरीषु।
ब्रह्मा त्वो वदति जातविद्यां यज्ञस्य मात्रां विमिमीत उ त्वः॥
(ऋ० १०।७१।११) इति।

सेयमृक् निरुक्तग्रन्थे यास्कमुनिना व्याख्याता "ऋत्विक्कर्म्मणां विनियोगमाचष्टे" (नि० १।८) इत्यादिना। ननु श्रौतयज्ञानां त्रयीसाध्यत्वाद्यज्ञकर्म्मानुष्ठानं मिलितैस्त्रिभिर्वेदैर्भवति। तत्र ऋग्वेदेन हौत्रं, यजुर्वेदेनाध्वर्यवं, सामवेदेन चौद्गात्रं कर्म्म क्रियते। परं ब्रह्मत्वं केन वेदेन कार्यमिति चेदत्रोत्तरितमैतरेयब्राह्मणे पञ्चमपञ्चिकायाम् "यदृचैव हौत्रं क्रियते यजुषा आध्वर्यवं साम्नोद्गीथं व्यारब्धा त्रयी विद्या भवत्यथ केन ब्रह्मत्वं क्रियते इति त्रय्या विद्ययेति ब्रूयात्" इति। त्रय्या विद्यया वेदत्रयेण यजमानशाखया वेत्याहुः।

अथाग्नीनाधास्यमानः पुमान् प्रथमं यज्ञपात्राणि सम्पाद्य संशोधितायां भूमावग्न्यगारम्, तत्र च गार्हपत्याहवनीयदक्षिणाग्नीनां कुण्डानि वेदिं च विधाय सम्भृतनिखिलसम्भारो भूत्वा यजमानः स्वस्वशाखोक्तविधिना अग्न्याधानं करोति। तत्राग्निशरणे पश्चिमतो गार्हपत्यस्याग्नेर्वर्तुलाकारम्, ततः पुरस्तादाहवनीयस्य चतुरस्रम्, दक्षिणतोऽन्वाहार्यपचनस्य वृत्तार्द्धाकारं कुण्डम्, गार्हपत्याहवनीययोर्मध्ये च यो भूप्रदेशस्तत्र वेदिः क्रियते। तस्याश्च पुरोभागो य आहवनीयकुण्डमुपश्लिष्टः सोऽस इति व्यपदिश्यते। यस्तु पाश्चात्यो भागो गार्हपत्यकुण्डात् किञ्चिद्विश्लिष्टः स श्रोणीति

---

१ त्व इत्यन्यार्थकं सर्वनाम। त्वः अन्यो होता ऋत्विग्विशेषः पुपुष्वान् पुष्टिकर्त्ता ऋचां पोषमास्ते। तत्र तत्राक्रमपठितानामृङ्मन्त्राणाम् इयद्भिर्मन्त्रैरिदं शस्त्रं सम्पद्यत इत्येवंरूपां पुष्टिं सम्पादयति। अन्य उद्गातृनामक ऋत्विक् शक्वरीषु तन्नामकऋङ्मन्त्रेषु गायत्रं साम गायति। अन्यो ब्रह्मा ऋत्विक् जातविद्यां जाते प्रारब्धे कर्म्मणि विद्यां सन्देहनिवर्त्तिकां बुद्धिं वदति। अन्योऽध्वर्युनामक ऋत्विक् यज्ञस्य मात्रां स्वरूपं विमिमीते निर्मातीत्यर्थः।

व्यपदिश्यते । असंश्रोण्योश्च दक्षिणोत्तरपार्श्वयोः पश्चिमोपक्रमं प्राक्संस्थं सूत्रद्वयं तथा वर्त्तयन्ति यथा वेदिमध्यं कृशं सम्पद्यते। कुण्डानां वेद्याश्च द्वे द्वे मेखले भवतः । कुण्डादीनां निर्माणप्रकारः प्रमाणविचारः स्वस्वशाखीयसूत्रानुसारिग्रन्थेभ्योऽवगन्तव्यः । अग्निहोत्रवेद्या इतिहासः शतपथब्राह्मणस्य प्रथमकाण्डे द्वितीयाध्याये श्रूयते सोऽत्रार्थतः संगृह्यते। देवाश्चासुराश्चोभये प्राजापत्याः परस्परं पस्पर्द्धिरे । तत्रौद्धत्येनोत्सिक्ता असुरा अस्माकमियं सर्वापि वसुन्धरा इति वदन्तः सन्त आनडुहेन चर्म्मणा परितो भुवं मायं मायं स्वस्वभागान् विभक्तुमुपचक्रमिरे । अत्रावसरे कल्पितवामनशरीरं विष्णुं पुरस्कृत्य समागता देवा असुरान् प्रत्यूचुः। भो असुरा न केवलं यूयमेवास्या वसुन्धराया विभागं लब्धुमर्हथ, किन्तु वयमपि भवन्त इव प्राजापत्या एवेति अस्माकमप्यंशं विभजतेति । तदाकर्ण्य संजातमत्सरा अप्यसुरा देवान् प्रतारयितुं किञ्चिदुदीरयामासुः। यथा। यावति प्रदेशे भवतामयं विष्णुः शयीत तावन्तं भुवोऽशं भवद्भ्यो विभजामह इति। देवैस्तु यज्ञपर्याप्तैव भूरस्माकमाकाङ्क्षितेति न वयमधिकामभ्यर्थयामह इति सम्भाष्य विष्णुं प्राक्शिरसं शाययित्वा पूर्वादिदिक्षु गायत्र्यादिच्छन्दोभिरभिमन्त्रिता भूः सन्तोषेण जगृहे । अथ तस्या भूमेः पूर्वतोऽग्निं प्रतिष्ठाप्य यज्ञमनुतिष्ठन्तोऽनलसास्ते देवा सकलामपि भुवं कालेनाविन्दन्त । यस्मादियं देवैरवेदि तस्माद्वेदिरिति व्यपदिश्यत इति ।

यज्ञपात्राणि कतिचित्कृष्णयजुःसंहितायाः प्रथमप्रपाठके नवमानुवाके श्रूयन्ते—"यो वै दश यज्ञायुधानि वेद मुखतोऽस्य यज्ञः प्रकल्पते । स्फ्यश्च कपालानि चाग्निहोत्रहवणी च शूर्पं च कृष्णाजिनं च शम्या चोलूखलं च मुसलं च दृषच्चोपलानि चैतानि वै दश यज्ञायुधानि" इति । यो वै यजमानो मुखतः, प्रारम्भे एव दश यज्ञायुधानि यज्ञोपकरणानि वेद जानाति अस्य यजमानस्य यज्ञः प्रकल्पते निष्पद्यत इत्यर्थः । तत्र हस्तमितः खड्गाकृतिः खादिरः स्फ्य इत्युच्यते । भग्नमृन्मयभाण्डस्य वर्त्तुलखण्डानि कपालानि। एकहस्तमिता सदण्डा पुष्करमुखी अग्निहोत्रहवणी। सा च वैकङ्कती अपेक्ष्यते । गदाकृतिर्हस्तमिता शम्या। शूर्पादीनि लोकप्रसिद्धानि। स्पष्टं चैवंरीत्या व्याख्यातमेतदनुवाकभाष्ये । इतराण्यपि स्रुवोपभृदादीनि यज्ञपात्राणि

यथाकार्यं यज्ञेषूपयुज्यन्ते। तेषां सर्वेषां सलक्षणं निरूपणं रेणुकाकारिकासु गोपालकारिकासु च स्थितं तत एव जिज्ञासुभिरवगन्तव्यम्।

अग्निहोत्रं नाम प्रत्यहं क्षीराज्यादिद्रव्येण सायंप्रातरग्नौ होमः। तत्र सायमग्निर्देवता, प्रातस्तु सूर्य इज्यते। यदेव क्षीरादिहविर्द्रव्यमग्नौ हूयते तत्तस्यैव यजमानस्य महते उपकाराय सम्भवति। यथा स्वकीयक्षेत्रे उप्तं बीजं बहुधारमुपकरोत्येवमग्नौ हुतं यजमानमुपकरोति। अग्निर्हि सर्वेषां योनिः। न हि किमपि वस्तु विनोष्माणं समुद्भवति। तस्मात् सायं होमो गर्भाधानम्, प्रातर्होमस्तु फलोपजननमिति कृष्णयजुर्वेदस्य प्रथमकाण्डे पञ्चमप्रपाठके नवमानुवाके समाम्नातम्—"अग्निहोत्रं जुहोति यदेव किञ्च यजमानस्य स्वं तत्तस्यैव" इत्यादिना।

अथ व्रतस्थ आहिताग्निः प्रतिमासं दर्शपौर्णमासेष्टिभ्यां यजते। तत्र दर्शेष्ट्यामग्नीषोमावाज्यभागेन, अग्निम् अष्टाकपालपुरोडाशेन, विष्णुं ध्रुवापात्रस्थाज्येन, इन्द्राग्नी एककपालपुरोडाशेन, देवान् आज्येन, स्विष्टकृतमग्निं हविःशेषेण यजन्ति। इदं चास्य यज्ञस्य प्रधानं कर्म। एतस्य पूर्वाङ्गं पञ्चभिः प्रयाजसंज्ञकघृताहुतिभिर्ऋतुदेवानां यजनम्। तच्च प्रधानहोमात्प्रागनुतिष्ठन्ति। स्विष्टकृद्धोमानन्तरं यजमानपञ्चमा ऋत्विजो हविःशेषमिडापात्रस्थं भक्षयित्वा तिसृभिरनुयाजसंज्ञकघृताहुतिभिर्ऋतुदेवान्, चतसृभिरष्टाभिर्वा पत्नीसंयाजसंज्ञकघृताहुतिभिश्च देवानां पत्नीर्यजन्ति। इदमनुयाजादिकं कर्म यज्ञस्योत्तराङ्गम्।

तथा पौर्णमासेष्ट्यामपि ऐन्द्राग्नस्यैकादशकपालपुरोडाशस्य स्थाने अग्नीषोमदेवताको वैमृधेन्द्रदेवताकश्च एकादशकपालः पुरोडाशः क्रियते। अन्यत् सर्वं दर्शेष्टिवत्। यदि यजमानः सोमयाजी भवेत्तदा ऐन्द्राग्नस्थाने केवलेन्द्रदेवताको वैमृधेन्द्रदेवताकश्च एककपालः पुरोडाशः क्रियते। नत्विन्द्राग्निदेवताकः। किञ्च ऐन्द्रं दधि ऐन्द्रं पयश्चेति विशेषः। "परमेष्ठिनो वा एष यज्ञोऽग्र आसीत् तेन स परमां काष्ठामगच्छत्। य एवं विद्वान् दर्शपौर्णमासौ यजते" इति कृष्णयजुःसंहितायाः प्रथमकाण्डस्य षष्ठप्रपाठके नवमानुवाके पठ्यते। अनया श्रुत्या दर्शपौर्णमासयोरग्रयज्ञत्वबोधनात् तत्पूर्वभाविनोरग्न्याधेयाग्निहोत्रयोर्यज्ञत्वाभावः सूच्यते। यत्तु—तमनन्तरोदाहृतया "प्रजापतिर्यज्ञानसृजत। अग्निहोत्रं चाग्निष्टोमं

च" इत्यादिरूपया श्रुत्या अग्निहोत्रमपि यज्ञशब्देन व्यवहृतम्। तत्र यज्ञपदप्रयोगो भाक्त इति प्रतिभाति । आश्रावयेत्यादिमन्त्रपञ्चकस्य यत्र कर्म्मणि विनियोगः स कर्म्मविशेषो यज्ञशब्दस्य मुख्यो विषय इति श्रौततात्पर्य्यस्यावगम्यमानत्वात् । तथा च कृष्णयजुर्वेदे प्रथमकाण्डस्य षष्ठप्रपाठके श्रूयते—"यो वै सप्तदशं प्रजापतिं यज्ञमन्वायत्तं वेद प्रति यज्ञेन तिष्ठति" इति । आश्रावयेति चतुरक्षरः, अस्तु श्रौषट् इति चतुरक्षरः, यज इति द्व्यक्षरः, ये यजामहे इति पञ्चाक्षरः, वौषट् इति च द्व्यक्षरो मन्त्रः। अस्य मन्त्रपञ्चकस्य संकलनया सप्तदशाक्षराणि सन्तीत्यत इदं मन्त्रपञ्चकं सप्तदशाक्षरं प्रजापतिसंज्ञकं यज्ञमन्वायत्तं सकलयज्ञं प्रत्यनुवर्त्तमानं यो वेद स पुरुषो यज्ञेन प्रतिष्ठितो भवति, न यज्ञात् प्रच्युतो भवतीति तदर्थः । यथा चैतन्मन्त्रपञ्चकं यज्ञक्रियासु विनियुज्यते तथात्र संक्षेपत उदाह्रियते। वेद्यामासादितानि ध्रुवाज्यचरुपुरोडाशादीनि हवनीयद्रव्याणि अध्वर्युः स्रुवगृहीतेनाज्येनाभिघार्य ध्रुवाज्यात् त्रिवारं स्रुवगृहीतेनाज्येन स्रुचं पूरयित्वा दक्षिणहस्तेन धारयन् वामहस्तमुरसि कृत्वा आहवनीयाभिमुखः सविनयं तिष्ठन् सन् होतारं प्रैष्यति "अग्नये अनुब्रूहि" इति । अग्निमाह्वयेति प्रैषवाक्यार्थः । ततो होता "अग्निर्वृत्राणि जङ्घनत्" इत्यादिपुरोवाक्यासंज्ञकयर्चा अग्निं स्तुत्वा आह्वयते। ततोऽध्वर्युराग्नीध्रं प्रैष्यति—"आश्रावय" इति। इमान्युपकल्पितानि हवनीयद्रव्याणि देवेभ्य आश्रावयेति प्रैषवाक्यार्थः। तत आग्नीध्रः स्फ्यहस्तस्तिष्ठन् पठति—"अस्तु श्रौषट्" इति। अस्तु इत्यनेनाध्वर्युकृतप्रैषाङ्गीकारः, श्रौषडित्यस्य भोः देवा यूयं शृणुध्वमिति तदर्थः । पुनरध्वर्युर्होतारं प्रैष्यति "यज" इति। याज्यामन्त्रं पठेति तदर्थः । ततो होता "ये यजामहे अग्निं जुषाणोऽग्निराज्यस्य वेतु वौषट्" इति पठति । ये वयमग्निं यजामहे तानस्मान् प्रति जुषाणः प्रसन्नोऽग्निराज्यस्य वेतु भक्षयतु। वौषडित्यस्य इदं हविर्दीयत इत्यर्थः। एतन्मन्त्रान्ते अध्वर्युराहुतिमग्नौ प्रक्षिपति। ततो यजमानोऽग्नय इदमिति यथायथं त्यागवाक्यमुच्चारयति इति । तथा स्मृत्यादावपीदं मन्त्रपञ्चकं संस्तुतं दृश्यते। यथा—

चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च ।
हूयते च पुनर्द्वाभ्यां स मे विष्णुः प्रसीदतु ॥ इति ।

किंच तैत्तिरीययजुरारण्यकस्थनारायणोपनिषदि एकषष्टितमानुवाके प्राजापत्यः सौपर्णेयः प्रजापतिमुपसृत्य निःश्रेयससाधनं पप्रच्छ—भोः प्रजापते पूज्या महर्षयः श्रेयःसाधनं किमाहुरिति । एवं पृष्टः प्रजापतिः सत्यादीनि द्वादश साधनानि समुपादिदेश । तत्राष्टममग्न्याधेयम्, दशमं तु साधनं यज्ञरूपं प्रसंख्यातम्, "अग्नयो वै त्रयी विद्या देवयानः पन्था गार्हपत्य ऋक् पृथिवी रथंतरमन्वाहार्यपचनो यजुरन्तरिक्षं वामदेव्यमाहवनीयः साम सुवर्गो लोको बृहत्तस्मादग्नीन् परमं वदन्त्यग्निहोत्रꣳ सायं प्रातर्गृहाणां निष्कृतिः स्विष्टꣳ सुहुतं यज्ञक्रतूनां प्रायणꣳ सुवर्गस्य लोकस्य ज्योतिस्तस्मादग्निहोत्रं परमं वदन्ति यज्ञ इति । यज्ञेन हि देवा दिवं गताः, यज्ञेनासुरानपानुदन्त, यज्ञेन द्विषन्तो मित्रा भवन्ति, यज्ञे सर्वं प्रतिष्ठितम्, तस्माद्यज्ञं परमं वदन्ति" इति । अत्र अग्न्याधानाग्निहोत्रयोर्यज्ञभिन्नत्वं स्फुटमेवाभिहितम् । तस्मात्तत्र यज्ञशब्दो गौण इति भाति ।

अथाग्रयणं निरूप्यते । तच्च त्रिविधम् । श्यामाकाग्रयणं व्रीह्याग्रयणं यवाग्रयणं चेति भेदात् । एषां कालो बोधायनेनोक्तो यथा "वर्षासु श्यामाकाग्रयणं, शरदि व्रीह्याग्रयणं, वसन्ते यवाग्रयणम्" इत्यादि । तत्र श्यामाकाग्रयणे श्यामाकचरुद्रव्याहुत्या सोममिष्ट्वा वस्त्ररूपां दक्षिणामृत्विजे दद्यात् ।

---

१ पूर्वानुवाके सामान्यत उपदिष्टस्य साधनसमूहस्य उपव्याख्यानरूपोऽयमनुवाकः । गार्हपत्यो दक्षिणाग्निराहवनीयश्चेति त्रयोऽग्नय एव, त्रयी विद्या वेदत्रयरूपाः । किञ्च तेषां मध्ये यो गार्हपत्यः स ऋग्वेदात्मको भूलोकात्मको रथन्तरसामात्मकश्चेति प्रशस्यते । तथा अन्वाहार्यपचनो दक्षिणाग्निः यजुर्वेदान्तरिक्षलोकवामदेव्यसामात्मकः । आहवनीयाग्निस्तु सामवेदस्वर्गलोकबृहत्सामात्मक इति प्रशस्यते । सायं प्रातश्चानुष्ठीयमानमग्निहोत्रं गृहाणां निष्कृतिः अन्नसाधनद्रव्यं यल्लोकेऽन्यस्वामिके गृहे निजसन्निधीयमानं भाटकमिति कथ्यते । अग्निर्हि गृहपतिरतस्तं गार्हपत्यमिति वदन्ति । ननु यजमानो गृहपतिः । तस्मादग्निहोत्राकरणे क्रुद्धोऽग्निः कदाचिद् गृहान् दहेदिति भावः । किञ्च अग्निहोत्रं स्विष्टं शोभनयजनरूपम् । सुहुतं नाम शोभनहोमरूपम् । देवतोद्देशेन द्रव्यदानं यजनम् । हविर्द्रव्यस्याग्नौ प्रक्षेपो होमः । यज्ञा दर्शपूर्णमासादयः । क्रतवोऽग्निष्टोमादयः । क्रतुशब्दो यूपवत्सु रूढः । तेषां यज्ञक्रतूनां प्रायणमारम्भकमग्निहोत्रमित्यर्थः । स्पष्टमन्यत् ।

व्रीह्याग्रयणे नूतनव्रीहिमयेन द्वादशकपालपुरोडाशेन इन्द्राग्नी, व्रीहितण्डुलचरुणा विश्वान् देवान्, एककपालपुरोडाशेन च द्यावापृथिव्याविष्ट्वा यजमानगोष्ठे प्रथमजातं वृषवत्सं दक्षिणां दद्यात्। यवाग्रयणं तु व्रीह्याग्रयणवत्। व्रीहिस्थाने यवा इत्याहुः। यद्यपि कृष्णयजुःसंहितायाः प्रथमकाण्डेऽष्टमप्रपाठकस्य प्रथमानुवाके आग्रयणेष्टिप्रकरणे द्यावापृथिवीदेवताक एककपालः पुरोडाशो नोक्तः, तथापि शतपथब्राह्मणस्य द्वितीयकाण्डे बौधायने कल्पसूत्रे च स पठ्यते। तदनुसारं याज्ञिकसम्प्रदायमनुसृत्यात्र स निरूपितः। अस्या आग्रयणेष्ट्या उत्पत्तेरितिहासः कृष्णयजुर्वेदे श्रूयते सोऽत्रार्थतः संगृह्यते। पुरा किल नवोत्पन्नाभिर्व्रीह्याद्योषधिभिर्देवाननिष्ट्वा ताभिरोषधिभिः स्वीयां देहयात्रामेव ये जना वर्त्तयांचक्रुस्ते पराबभूवुः। ततः प्रभृति देवान् प्रीणयितुं यजमानस्य चापराभूत्यै इयमिष्टिः समनुष्ठीयत इति।

अथ चातुर्मास्यानि निरूप्यन्ते। तत्र वैश्वदेववरुणप्रघाससाकमेधशुनासीर्यनामकानि चत्वारि पर्वाणि सन्ति। चतुर्षु चतुर्षु मासेषु अनुष्ठेयत्वाच्चातुर्मास्यानि पर्वभूतायां पौर्णमास्यां प्रारभ्यमाणत्वाच्च पर्वाणीत्युच्यन्ते। यदाह आपस्तम्बः—"चातुर्मास्यान्यारभन्ते, तैः संवत्सरं यजन्ते। प्राचीनप्रवणे वैश्वदेवेन यजेत फाल्गुन्यां पौर्णमास्यां चैत्र्यां वा वैश्वदेवेन यजते। ततश्चतुर्षु मासेषु आषाढ्यां श्रावण्यां वा उदवसाय वरुणप्रघासैर्यजते। ततश्चतुर्षु मासेषु पूर्वस्मिन् पर्वण्युपक्रम्य द्व्यहं साकमेधैर्यजते। अथातश्चतुर्षु मासेषु शुनासीरीयहविर्भिर्यक्ष्यमाणो भवति" इति। संवत्सरं यजन्ते इत्यत्र। "कालाध्वनोरत्यन्तसंयोगे" (अष्टा० २।३।५) इति द्वितीया। संवत्सरं यजनक्रियया व्याप्नुवन्तीति तदर्थः। ननु संवत्सरस्य कतिपयेष्वेव दिवसेषु यागस्य क्रियमाणत्वात् कथं संवत्सरव्याप्तियोगेन भवतीति चेत्। उच्यते। कल्पसूत्राद्युक्तयावत्संवत्सरावयवसम्बन्धरूपाया व्याप्तेरेवैतत्सूत्रानुशिष्टद्वितीयार्थत्वान्नानुपपत्तिरिति। अत एव 'मासमधीते' इति भाष्योक्तमेतत्सूत्रोदाहरणं सङ्गच्छते। अन्यथा तत्राप्यनध्यायेष्वध्ययनाभावादत्यन्तसंयोगो नोपपद्येतेति बोध्यम्। प्राचीनप्रवणे इत्यस्य निम्नः पुरोभागो यस्य तादृशे भूप्रदेशे इत्यर्थः। उदवसायेत्यस्यारभ्येत्यर्थः। स्पष्टमन्यत्। तत्र तावद्वैश्वदेवे पर्वणि अष्टाकपालपुरोडाशेनाग्निम्, चरुणा सोमम्, द्वादशकपालपुरोडाशेन सवितारम्, चरुणा सरस्वतीं पूषणं च, सप्तकपाल-

पुरोडाशेन मरुतः, आमिक्षया विश्वान् देवान्, एककपालपुरोडाशेन द्यावापृथिव्यौ च यजन्ति । इदं च तैत्तिरीयकृष्णयजुःसंहितायाः प्रथमकाण्डेऽष्टमप्रपाठके द्वितीयानुवाके स्पष्टम् । नन्वत्र यागेऽग्न्यादयो देवता इज्यन्ते कर्म्मणस्तु वैश्वदेवमित्यभिधानम् । कथमेतदिति चेत् । उच्यते । पुरा कल्पे एतं यज्ञं विश्वेदेवा अकार्षुस्ततोऽस्य कर्मणो वैश्वदेवमित्यभिधानं समभवत् । तथा च श्रूयते- 'यद्विश्वेदेवाः समयजन्त तद्वैश्वदेवस्य वैश्वदेवत्वम्' इति । अस्य यागस्योत्पत्तेरितिहासस्तैत्तिरीयकृष्णयजुर्वेदे ब्राह्मणग्रन्थे श्रूयते- 'वैश्वदेवेन वै प्रजापतिः प्रजा असृजत' इत्यादिना । स एवात्र पद्यैरुपनिबध्यते—

वैश्वदेवेन यागेन प्रजेशोऽसृज्यत प्रजाः ।
ताश्च वन्ध्या निरीक्ष्याग्निश्चिन्तयामास मानसे ॥
अहो बत कथं वन्ध्या इमा आसां प्रसूतये ।
प्रयतिष्येऽहमित्येवं ततः सोऽग्निः प्रजापतिम् ॥
गत्वा प्रजानां वन्ध्यत्वं कथयामास तं प्रति ।
तेन प्रजापतिश्चाग्निरुभौ शोकमवाप्नुतः ॥
पुत्रवानपि लोकेऽत्र पौत्रमिच्छन् पितामहः ।
पिता च तनयं वाञ्छन् खेदं तुल्यं स्म विन्दतः ॥
अथ प्रजानां सन्तत्यै प्रजेशोऽग्निं समादिशत् ।
सोऽग्निर्मैथुनधर्म्मेण प्रजासु प्राविशत् ततः ॥
रेत उत्पादयाञ्चक्रे सोमस्तद्गर्भ आदधत् ।
ततः कालेन सविता प्रसावयति ताः प्रजाः ॥
स्व(?=स)रस्वती तु कालेन वाचं बालेष्ववासृजत् ।
पूषा चापोषयद्बालानेवं ववृधिरे प्रजाः ॥
ततः प्रभृति वह्न्यादीन् पञ्च देवानिमाः प्रजाः ।
ईजुस्तदभ्यसूयन्तो मरुतोऽघ्नन् शिशुप्रजाः ॥
ततः प्रजापतिस्तेषां मरुतां तोषहेतवे ।
पुरोडाशं निरवपत् यः कपालेषु सप्तसु ।
संस्कृतस्तेन मरुतः प्रजास्वासन्नहिंसकाः ॥
सप्तव्यक्तियुताः सन्ति मरुतां सप्त यद्गणाः ।
अतः सप्तकपालत्वं पुरोडाशस्य कल्पितम् ॥
यदा मरुद्भिर्निहताः प्रजास्तर्हि प्रजापतिः ।
नष्टाः प्रजाः पूर्वसृष्टाः स्रक्ष्ये हन्ताऽधुना कथम् ।

इति व्याकुलचित्तः सन् चिरं चिन्तातुरोऽभवत् ॥
तस्य प्रजापतेरोजःशक्तिर्या पिण्डिताऽभवत् ।
तां प्रजापतिरुद्धृत्याकरोदण्डं प्रजोद्भवम् ।
वैश्वदेवं हविस्तेनामिक्षारूपमकल्पयत् ॥
अथ द्यावापृथिव्यौ ता दधाते सर्वतः प्रजाः ।
ते अप्येककपालेन पुरोडाशेन सोऽयजत् ॥ इति ।

अथ वरुणप्रघासाख्यं द्वितीयं पर्व निरूप्यते । अत्र पर्वणि इन्द्राग्नी एककपालपुरोडाशेन, मरुत आमिक्षया, वरुणं चामिक्षया, कनामकप्रजापतिमेककपालपुरोडाशेन, किञ्च वैश्वदेवपर्वोक्तमग्न्यादिदेवतापञ्चकं तत्रोक्तेनैव हविषपञ्चकेन यजन्ति । स्पष्टं चेदं तैत्तिरीययजुःसंहितायाः प्रथमकाण्डेऽष्टमप्रपाठके तृतीयानुवाके । अत्र सायनाचार्येण वरुणप्रघासशब्दस्य निरुक्तिः प्रदर्शिता । वरुणस्य प्रघासो वरुणसम्बन्धियवानां भक्षणं वरुणप्रघासः । तत्कर्त्र्यः प्रजा अपि वरुणप्रघासः । प्रजापराधशान्तये साधनभूतो यागोऽपि वरुणप्रघास इति । अस्यां निरुक्तौ प्रमाणभूतं तैत्तिरीयब्राह्मणम् 'देवासुराः संयत्ता आसन्' इत्यादि भाष्यकारेणोदाहृतं तदत्र श्लोकतः संगृह्यते—

प्रजेशेन पुरा सृष्टा वैश्वदेवेन पर्वणा ।
प्रजास्ता वरुणक्षेत्रे जजक्षुर्भूरिशो यवान् ॥
कुपितो वरुणो राजा ताः पाशेन बबन्ध ह ।
ततो जलोदरेणासन् पीडितास्ताः प्रजा भृशम् ॥
अथ प्रजापतिस्तासां मुक्त्यै वरुणपाशतः ।
वरुणं तोषयाञ्चक्रे कृत्वेमं यज्ञमादरात् ॥ इति ।

अथ साकमेधाख्यं तृतीयं पर्व दिनद्वयेनानुतिष्ठन्ति । तत्र तावदनीकवन्तमग्निमष्टाकपालपुरोडाशेन साकं सूर्योदयेन, सान्तपनं मरुद्गणं चरुणा साकं मध्याह्नेन, ततो यजमानगृहे यावत्यो गावस्तासां क्षीरेषु श्रुतेन चरुणा गृहमेधिनं मरुद्गणं साकं सायंकालेनेष्ट्वा चरुश्रपणकाले सम्भूतेन पयःफेनेन स्रुवे गृहीतपूर्वेण च इन्द्रं यजन्ति । किञ्च वैश्वदेवपर्वोक्ता अग्न्यादयः पञ्च देवा अपि तत्रोक्तैः पञ्चभिर्हविर्भिरिज्यन्ते । इदं प्रथमदिनकृत्यम् । अथ परेऽहनि सूर्योदये क्रीडिनं मरुद्गणं सप्तकपालेन पुरोडाशेन, अग्निमष्टाकपालेन, सोमं चरुणा, सवितारं द्वादशकपालेन, सरस्वतीं पूषणं च चरुणा, इन्द्राग्नी एकादशकपालेन, इन्द्रं चरुणा, विश्वकर्माणमेककपालेन

पुरोडाशेन यजन्ति । ततः परं साकमेधपर्वणोऽङ्गभूतं महापितृयज्ञं त्र्यम्बकपुरोडाशं च कुर्वन्ति । साकमेधयागोत्पत्तेरितिहासः कृष्णयजुर्वेदे शतपथब्राह्मणे च श्रूयते । स एवात्र पद्यैः संगृह्यते—

पुरा कदाचित् संयत्ता आसन् देवासुरा भृशम् ।
तदा देवानुवाचाग्निः सन्ति सेनास्तनौ मम ।
ता युष्मभ्यं प्रदास्येऽहं यदि मां तर्पयिष्यथ ॥
तच्छ्रुत्वाऽष्टकपालेन पुरोडाशेन तं सुराः ।
तृप्तं विधाय तद्दत्ताः सेनास्ता जगृहुर्मुदा ॥
ततश्च प्राभवन् देवा असुरास्तु पराभवन् ।
ततो द्यावापृथिव्यौ ते समाश्रित्यासुरा भृशम् ।
मध्याह्नकाले युध्यन्तो निर्जघ्नुर्बहुशः सुरान् ॥
अथ देवैः सान्तपनस्तोषितो मरुतां गणः ।
उपर्यधः सर्वतः स रोदस्यौ समतापयत् ॥
ततः सन्तप्ततनवोऽसुरा देवैः पराहताः ।
अथ सायाह्नसमये युद्धादुपरताः सुराः ॥
आगत्य शिबिरे स्वीये गृहमेधकृते चरोः ।
अपणं ते प्रकुर्वन्तो विचारं चक्रिरे तदा ॥
अहो ध्रुवं श्वो जेतास्मः परन्त्वद्य वयं मुदा ।
सर्वे भोक्ष्यामहे सार्द्धं श्वः किं स्यात्तन्न विद्महे ॥
किंचाद्य रात्रौ सम्भूय करिष्यामः कथाः शुभाः ।
एवं संभाषमाणास्ते हविर्निर्वपणे तदा ।
न चक्रुर्देवतोद्देशं विस्मृत्याकुलिताः सुराः ॥
तेनायोग्यं समभवत् शृतं तदहुतं[1] हविः ।
नाश्नन् हुतभुजो देवा मरुद्भ्यो ददुरादरात् ॥
अथापरेद्युर्भूयोपि युध्यमानाः सुराश्चिरम् ॥
मरुद्भिः सहिता जिग्युः सर्वानप्यसुरान् रणे ॥
पराभवेन शत्रूणां प्रहृष्टो मरुतां गणः ।
नृत्यक्रीडां समारेभे मुमुदुश्चाखिलाः सुराः ॥
जयोत्साहनिमित्तं तु देवैः कृत्वा महाहविः ।
सन्तर्पिताः पूजिताश्च मरुदादय आदरात् ॥
किंचासुरैर्हता युद्धे देवास्ते पितरोऽभवन् ।

---

१ समन्त्रनिर्वापपूर्वकं यत्पच्यते तद्धुतमित्युच्यते ।

तांश्च पूजयितुं देवैः पितृयज्ञो महान् कृतः ॥
अथ क्षतशरीराणां निर्जराणां शरीरतः ।
उद्धृत्य शस्त्रशल्यानि तेषामारोग्यहेतवे ।
त्र्यम्बकाय पुरोडाशं भक्त्या देवगणा ददुः ॥
एवं विदित्वा तान् देवान् यो नरो यजतेऽध्वरे ॥
स जयं समवाप्नोति विजित्य प्रबलान् रिपून् ।
आयुरारोग्यमतुलं लभते चाक्षयं सुखम् ॥ इति

अथ शुनासीर्यसंज्ञं चतुर्थं पर्व निरूप्यते। तत्र इन्द्राग्नी द्वादशकपालपुरोडाशेन, शुनासीरमिन्द्रं द्वादशकपालपुरोडाशेन, वायुं पयसा, सूर्यमेककपालपुरोडाशेन यजन्ते । अत्र यागे द्वादशगवं हलं दक्षिणात्वेन ददति । स्पष्टं चेदं तैत्तिरीयकृष्णयजुःसंहितायाः प्रथमकाण्डेऽष्टमप्रपाठके सप्तमानुवाके । शुनो वायुः, सीर आदित्य स्ताभ्यां सहित इन्द्रः शुनासीरस्तद्देवताकं कर्म्म शुनासीर्यमिति व्युत्पत्तिरपि तत्रैव भाष्ये सायनाचार्येण प्रदर्शिता ।

अथातः सोमयागः संक्षेपतो निरूप्यते। अयं च यागः सोमरसेन साध्यत्वात्सोमाभिधानः समभवत् । स चायं त्रिविधः—एकाहोऽहीनः सत्रं चेति भेदात् । एकेनाह्ना साध्यसुत्याकर्म्मक एकाहः। द्वित्रैरहोभिरित्येवं द्वादशपर्यन्तेनाहर्गणेन साध्यसुत्याकोऽहीनः । पक्षं मासं संवत्सरं वेत्येवं सहस्रवर्षपर्यन्तं योऽनुष्ठीयते स सोमयागः सत्रमित्यभिधीयते। सर्वेषां सोमयागानां प्रकृतिरग्निष्टोमः । वेदे तस्य साङ्गस्योपदेशात् । 'वसन्तेऽग्निष्टोमः' ( का० श्रौ० ७।१।५) इति कात्यायनसूत्रात्, 'वसन्ते ज्योतिष्टोमेन यजेत' ( आप० श्रौ० १०।२।२) इत्यापस्तम्बसूत्राच्च वसन्तर्त्तुरस्यानुष्ठाने विहितः कालः। अग्नेः स्तोमः स्तवनमग्निष्टोमः। ज्योतिषः स्तोमो ज्योतिष्टोमः। उभयत्रापि 'अग्नेः स्तुत्स्तोमसोमाः। ज्योतिरायुषः स्तोमः' ( अष्टा० ८।३।८—८२) इत्यनुशासनात् स्तोमशब्दावयवसस्य षः। ननु लोकत्रयवर्त्तिन्योऽनेका देवता अत्र यागेऽर्हणीयत्वेनोपदिष्टास्तत्कथमग्निष्टोमपदेनास्य व्यवहार इति चेत्। उच्यते। भूलोकवर्त्तिनो यजमानस्य प्रत्यासन्नः प्रत्यक्षश्चाग्निर्देव इति छत्रिन्यायेनास्मिन् यागेऽग्निष्टोमपदं प्रयुज्यत इति । अस्य यागस्य निष्पत्त्यै विद्वांसो याज्ञिका यथा निर्दिशेयुस्तथा यज्ञयोग्यां प्राचीनवंशशालादिपर्याप्तां प्रागुदक्प्रवणामुन्नतप्रदेशवर्त्तिनीं श्लक्ष्णां भूमिं धार्मिकाः परिगृह्णन्ति ।

पुण्यं समुन्नतं क्षेत्रं देवानां प्रीतिकारकम् ।
तस्मात्तथाविधे पुण्यक्षेत्रे यज्ञक्रियाः शुभाः ॥

शतपथब्राह्मणस्य तृतीयकाण्ड यज्ञयोग्यां लक्षणवतीं भुवमुपक्रम्योक्तम्—'तदु होवाच याज्ञवल्क्यो वार्ष्णर्याय देवयजनं जोषयितुमैम । तत्सात्ययज्ञोऽब्रवीत् सर्वा वा इयं पृथिवी[1] देवयजनं यत्र वा अस्यै क्व च यजुषैव परिगृह्य याजयेत्' ( श० ब्रा० ३।१।१) इत्यादि । अयमस्यार्थः । याज्ञवल्क्यः प्रोवाच कदाचिद्वयं वार्ष्णर्यस्य कृते यागयोग्यां भुवमन्विष्यन्तः प्रस्थितास्तदा पथि सङ्गतः सात्ययज्ञोऽस्मानवोचत् सर्वापीयं भूर्देवयजनं यत्र क्वापि प्रदेशे मन्त्रत एनां परिगृह्य यज्ञं तन्वीत । 'ऋत्विजो वा[2] देवयजनम्' (श० ब्रा० ३।१।१) इत्यपि तत्र ब्राह्मणे पठितम् । तस्य च यत्र साङ्गवेदाध्यायिनो विद्वांसो विप्रा उपलभ्यन्ते स भूप्रदेशो यज्ञिय एवेत्यर्थः ।

अथ निश्चितायां भुवि पश्चिमभागे द्वादशभिर्दशभिर्वा अरत्निभिः प्रमितं चतुरस्रं मण्डपं प्राचीनवंशाख्यं चतुर्द्वारं सर्वत समाच्छादितं निर्मान्ति । अयं मण्डपः प्राचीनवंशशब्देन व्यपदिश्यते । प्राचीनः प्रागग्रो वंशो मध्यबलो यस्य स तथेति संज्ञातात्पर्यम् । ततः सम्भृतसम्भारो यजमानः कृतक्षौरविधिर्विहितमङ्गलस्नानः क्षौमे वाससी परिधाय निजज्ञातिबान्धवैर्महतोत्साहभरेणाभिनन्दित उपस्थितो भवति । तत एनमृत्विजस्तीर्थोदकप्लुतैः पवित्रैर्दर्भपिञ्जुलैर्मार्जयित्वाऽमुं यजमानं वामकरे धृत्वा पवित्रान् वेदमन्त्रान् पठन्तो विप्राः पूर्वद्वारेण प्राचीनवंशमण्डपे प्रवेशयित्वा दीक्षयन्ति। तत्र दीक्षणीयेष्टिं प्रकुर्वन्तोऽग्नावैष्णवमेकादशकपालं पुरोडाशं निर्वपन्ति । एवमादि सर्वमस्या इष्टेर्विहितं कर्म्म समाप्याध्वर्युरुभयान् देवमनुष्यानाश्रावयति—अदीक्षिष्टायं ब्राह्मण इति । यदि क्षत्रियो वा वैश्यो वा यजमानस्तदापि अदीक्षिष्टायं ब्राह्मण इत्येवाध्वर्युर्ब्रूयात् इति श्रुतिकल्पसूत्रादावुक्तम् । तेन यावद्दीक्षाग्रहणं सर्वोऽपि द्विजातिर्ब्राह्मणः सम्पद्यते इति विज्ञायते । अथ दीक्षितो यजमानः प्रायणेष्टिं करोति । तत्रादितिं चरुणा पथ्यानामकदेवतामग्निं सोमं सवितारं चेति चतस्रोऽङ्गदेवता आज्याहुतिभिर्यजन्ते ।

---

१ 'देवी' इत्यधिकः पाठः प्रायेण मुद्रितब्राह्मणपुस्तकेषु ।
( मं० दे० शा० )

२ 'हैव' इति पाठान्तरं मुद्रितब्राह्मणपुस्तकेषूपलभ्यते ।
( मं० दे० शा० )

अनयेष्ट्या यज्ञः प्रारब्धो भवतीत्याहुः। ततः प्रतिप्रस्थाता वक्ष्यमाणोपरवप्रदेशे समास्तीर्णानडुहे चर्म्मणि सोमवल्लीभारमावपति। तत्र च सोमविक्रयी सोमांशून् विविच्य शोधयन्नास्ते। ततः सहर्त्विग्भिर्यजमानस्तत्रागत्य अरुणया पिङ्गाक्ष्या एकहायन्या गवा सोमं क्रीणाति। तत्राध्वर्युः सोमविक्रयी च मिथः सम्भाषणं कुर्वाते। तद्यथा। अध्वर्युराह'अयि भो विक्रेतव्यस्ते सोमो राजे'ति। सोमविक्रयी ब्रूते 'अस्ति विक्रेतव्य' इति। अध्वर्युः 'गोः कलया मूल्येन क्रीणीमः'। सोमविक्रयी-'इतोपि भूयः सोमो राजार्हती' । अध्वर्युः-'सत्यम्, गोरपि विशिष्टो महिमा। पश्य। पयः क्षीरसारं दध्यामिक्षा नवनीतमुदश्वित् घृतमित्येवमादीनि संसारोपयोगिवस्तुजातानि गोभ्यः समुद्भवन्ती'ति। सोमविक्रयी- अस्त्येतत्, तथापि गोः षोडशांशादधिकं सोमो राजार्हति'। अध्वर्युः-'द्वितीये पर्याये गोः पादेन, तृतीयेऽर्द्धेन, चतुर्थे पादोनया गवा क्रीणीम' इति सम्भाषते। ततो विक्रेतरि 'इतोऽपि भूयः सोमो राजार्हती' ति वदति सति 'सकलया गवा सोमं राजानं क्रीणीमः' इत्यध्वर्युः सम्भाषते। ततः सोमविक्रयी ब्रूते—'विक्रीतो मया सोमः परन्तु वस्त्रादिकं पारितोषिकमप्यहं किंचिल्लब्धुमिच्छामी' ति। ततस्तं परितोष्य क्रीतं सोमं राजानं शकटे समारोप्य पूर्वद्वारेण प्राग्वंशशालायामानीय आहवनीयस्य दक्षिणतो दारुमयपीठरूपायां निहितपूर्वायामासन्द्यां समास्तीर्णमृगचर्म्मपरिष्कृतायां तं निदधाति। अत्रान्तरे आतिथ्येष्टिं कुर्वन्ति। यथा हि लोके गृहागतस्यातिथेर्गृहपतिरातिथ्यं विधत्ते। तथैवेयमिष्टिः सोमस्य राज्ञ आतिथ्यायेति भावयन्ति। ततस्तेन सोमद्रव्येण करिष्यमाणं यागं विघ्नतामसुराणां प्रागेव पराभवे सम्पद्यमाने निर्विघ्नं यज्ञानुष्ठानं सेत्स्यतीति कामयमानो यजमानस्त्रिभिर्दिनैस्तिस्र उपसदाख्या इष्टीरनुतिष्ठति। तासु च प्रातःसायमग्निं सोमं विष्णुं च प्रत्यहमाज्याहुतिभिर्यजन्ति। तैत्तिरीयकृष्णयजुःसंहितायां षष्ठे काण्डे द्वितीयप्रपाठकस्य तृतीयानुवाके उपसदिष्टिमूलभूता काचिदाख्यायिका श्रूयते। सात्र पद्यैः संगृह्यते।

पुरा वह्निसमुद्भूतसेनाभिरसुरा रणे।
देवैः पराजिताश्चक्रुस्त्रिषु लोकेषु ते पुरः॥
प्राकारेणास हैमेन स्वर्गस्था वेष्टिता पुरी।

रौप्येण चान्तरिक्षस्था लौहेन क्षितिगा तथा ॥
एवं पुरत्रयं कामसंचारि स्वात्मरक्षकम् ।
अधिष्ठायासुरा देवैर्युयुधुः पूर्ववैरिणः ॥
तत्र युद्धेऽग्निसेनाभिरपि सर्वेऽमृतांधसः ।
नाशक्नुवन् पुरस्तिस्रो भेत्तुं जेतुमपि द्विषः ॥
ततो युद्धं समुत्सृज्य देवास्ते विजिगीषवः ।
उपसेदुर्निरुन्धन्तस्त्रिपुरं भूरि वासरान् ॥
बहुकालातिपातः स्यादेवमित्यमरास्तदा ।
विचार्य स्वस्वशक्त्यंशैः संहृतैः प्रखरं शरम् ॥
निर्ममुस्तस्य काण्डं तु संजज्ञे दहनांशतः ।
भल्लं सोमांशतो विष्णुशक्त्यंशादग्रमुल्वणम् ॥
शरमेवंविधं देवा विधायोचुः परस्परम् ।
यत्र लक्ष्ये क्षिप्यतेऽसाविषुस्तत्क्षपयेत् ध्रुवम् ॥
परं क एनमस्माकं मध्यात् क्षेप्स्यति शत्रुषु ।
कर्म्म रौद्रमिदं कर्त्तुं क्षमयत्येकः पिनाकधृक् ॥
निशम्यैवं दिविषदां वाचं प्रोवाच शङ्करः ।
पतिः प्रजानां भूयासं कृत्वैतत्कर्म्म भोः सुराः ॥
तदोमिति प्रतिश्रुत्य देवैः प्रोत्साहितो मृडः ।
शरं धनुषि सन्धाय लक्षीकृत्य पुरत्रयम् ।
स रिपुं प्रादहत्तेन बाणेन त्रिपुरान्तकृत् ॥ इति ।

उपसदां मध्यमदिवसे सौमिकीं वेदिं विरचयन्ति । सा च ाग्वंशशालायाः पुरस्तात्प्रक्रमत्रयमितां भूमिं त्यक्त्वा षट्त्रिंश-प्रक्रमा प्रागायता किंच पश्चाद्भागे पञ्चदशप्रक्रमाविस्तृता पुरोभागे [ द्वादशप्रक्रमविस्तृता सर्वतः संवेष्टिता वितानैरुपरि संछादिता ा क्रियते । अस्याः पुरोभागोंऽसः, पश्चाद्भागस्तु श्रोणीति व्य-ादिश्यते । अग्निहोत्रवेद्या इव महावेद्या अस्याः कृशमध्यतां न वेदधाति । अस्यामेव वेद्यामंसप्रदेशस्योत्तरभागे पूर्वपश्चिमयोर्दश-दायतामग्निहोत्रवेदिसमानाकारामुत्तरवेदिं विदधाति । महावेद्या ध्यभागे श्रोणीमारभ्य अंसपर्यन्तमेकां लेखां सुव्यक्तां लिखन्ति । ां च वेदिपृष्ठभवत्वात् पृष्ठ्यामिति व्यवहरन्ति । महावेद्या उत्तरां-ास्य पश्चात् प्रक्रमत्रयदूरे चात्वालनामकं गर्त्तं, ततो द्वादशप्रक्रम-ात्रदूरे च उत्करनामकं गर्त्तं खनन्ति । अथाध्वर्युप्रतिप्रस्थातारौ विर्द्धाननामके द्वे शकटे उत्करगर्त्ते प्रक्षाल्य पश्चिमद्वारेण

महावेद्यामानीय श्रोण्याः समीप एव पृष्ठ्याया दक्षिणोत्तरपार्श्वयोः प्रत्यासन्ने स्थापयतः। तत एतच्छकटद्वयं मध्ये कृत्वा दक्षिणोत्तरतस्त्र्यरत्निमात्रं, पूर्वपश्चिमतस्तु नवारत्निमात्रमित्येवं दीर्घचतुरस्राकारं चतुःस्तम्भं पूर्वपश्चिमद्वाराभ्यां युत वीरणकटेनासमन्तात् परिस्तृतमुपरिसमाच्छादितमेवंविधं हविर्धानमण्डपं घटयन्ति। तत्र मण्डपे समप्रमाणानि चत्वारि कोष्ठकानि भावयित्वाऽऽग्नेयकोष्ठकस्य मध्ये प्रादेशद्वयमितं समचतुरस्रं प्रकल्प्य, तस्य चतुर्षु कोणप्रान्तेषु प्रादेशमात्रविस्तारा एकहस्तनिम्नाश्चत्वारो गर्त्ताः खायन्ते। तेषामुपरि वारणानि औदुम्बराणि वा फलकानि भूसंलग्नानि स्थपुटयन्ति। तदुपर्यास्तीर्णानडुहचर्म्मखण्डानिहितशिलापट्टेषु सोममभिषुण्वन्ति। सोमाभिषवे क्रियमाणे अन्तरवकाशवशाद्यत इमे प्रदेशा उपरुवन्ति गभीरं नदन्ति तस्मादुपरवशब्देन व्यवह्रियन्ते। अथ हविर्धानमण्डपस्य पुरस्तात् पृष्ठ्याया दक्षिणतोऽष्टादशारत्निमानेन प्रागायतं नवारत्निमानविस्तारं दीर्घचतुरस्राकारं हविर्धानमण्डपवत् स्तम्भादिपरिष्कृतं सदोमण्डपं निबध्नन्ति। अस्य च मध्यभागे यजमानप्रमाणामेकामौदुम्बरीं स्थूणां निखनन्ति। अथाग्नीध्रशालां कल्पयन्ति। सा च सदोहविर्धानयोरुत्तरतः क्रियते। प्रायस्तावन्मानेन प्राक्प्रतीचीनदैर्घ्यवती यस्या अर्द्धं वेद्या अन्तःप्रदेशे प्रविष्टं अपरार्द्धं च बहिर्निःसृतं भवेदित्येवमवागुदीचीनविस्तारवती दक्षिणेन पूर्वेण च द्वारेण युता विरच्यते। सदोमण्डपे आग्नीध्रशालायां च हस्तप्रमाणा मृच्छर्कराचिता वेदिकाः क्रियन्ते। ताश्च धिष्ण्यपदेन व्यपदिश्यन्ते। तत्राग्नीध्रशालायां दक्षिणतो मार्जालीयमुत्तरतश्चाग्नीध्रीयमिति द्वे धिष्ण्ये भवतः। सदोमण्डपे तु होतुर्मैत्रावरुणस्य प्रशास्तुर्ब्राह्मणाच्छंसिनः पोतुर्नेष्टुरच्छावाकस्य चेति सप्त धिष्ण्यानि क्रियन्ते। महावेद्याः पुरतो यूपस्तम्भ आहवनीयस्य समीपभूभागे समुच्छ्रीयते। तत्परिमाणं तैत्तिरीययजुःसंहितायाः षष्ठे काण्डे तृतीयप्रपाठके तृतीयानुवाके श्रूयते 'पञ्चारत्निः पञ्चदशपर्यन्तः सोमे दश-सप्त-चतुर्दशवर्जम्' इति। तथा चापस्तम्बसूत्रे उक्तम्—'त्र्यरत्निश्चतुररत्निर्वा पालाशो निरूढपशुबन्धस्यातोऽन्यः सौम्यस्याध्वरस्येति वाजसनेयकम्' (आप० श्रौ०।७।२।१७) इति। निरूढपशुबन्धो हि पशुमुख्यद्रव्यको हविर्यागविशेषः। तस्य यूपस्त्र्यरत्निप्रमाणकश्चतुररत्निप्रमाणो वा भवति। सौम्ययूपस्तु पञ्चाद्यरत्निप्रमाणकः। स च पालाशः कर्त्तव्यः

पशुबन्धे सोमे वेति स्वमतम् । अतः पालाशादन्यः खादिरः सोमयागस्य इति वाजसनेयिनां मतमिति सूत्रार्थः। तथा च कात्यायनः प्रोवाच । 'खादिराभावे सोम इतरान्' (का० श्रौ० ६ । १ । १०) इति । इतरान् पालाशादीन् । स चायं यूपस्तम्भोऽष्टास्रिर्मूर्ध्नि किरीटनिभेन चषालसंज्ञककाष्ठमयावयवेनालंकृतो विरच्यते । एवमयं महावेद्याः सन्निवेशोऽत्र संक्षिप्य वर्णितः। विस्तरस्तु आपस्तम्बकात्यायनादिसूत्रभाष्यादेरवगन्तव्यः ।

महावेदिनिर्माणोत्तरं वैसर्जनहोमं कृत्वाऽग्नीषोमीयपशुयागमारभन्ते। अयं यागः सोमयागस्याङ्गभूतः। अत्र यागे प्राग्वंशशालायां स्थितमग्निमुत्तरवेद्यां सोमद्रव्यं तु हविर्धानमण्डपे समानीय स्थापयन्ति । ततः शुद्धाभिरद्भिः प्रक्षालितगात्रं यूपस्याग्रे पश्चिमाभिमुखमुपस्थापितमग्नीषोमीयं पशुं सकुशपिञ्जुलया प्लक्षशाखया 'इषे त्वोपवीरस्युपो देवान्' इतिमन्त्रेणोपाकुर्वन्ति । उपाकरणं नाम दैवकर्मोपयोगित्वसम्पादकः पशोः संस्कारविशेषः । एतदादिसंज्ञपनपर्यन्तः क्रियाकलाप आलभनशब्देनाभिधीयते। तैत्तिरीयकृष्णयजुर्वेदे षष्ठकाण्डे प्रथमप्रपाठकस्य नवमानुवाके सहेतुकं पश्वालभनं श्रूयते—'आ सोमं वहन्त्यग्निना प्रतिष्ठते। तौ सम्भवन्तौ यजमानमभिसम्भवतः। यदग्नीषोमीयं पशुमालभते। आत्मनिष्क्रय एव सः' इति। यदा ऋत्विग्भिः प्राग्वंशशालायामग्निसमीपे सोम आनीतः, तदा अग्नीषोमौ यजमानमभिलक्ष्य संगतावजनिषाताम् । तदा प्रभृति दीक्षितो यजमानो निजदेहं यज्ञार्थे समर्पितममन्यत। ततो यदग्नीषोमदेवताकं पशुमालभते तदेतदात्मनो निष्क्रयमेव यजमानः करोतीति श्रुत्यर्थः। यद्यप्यत्र सामान्येन पशुरुक्तो न तु विशेषजात्या, तथापि यत्र पशुसामान्योक्तिस्तत्र तत्र छागः पशुर्ग्राह्यो भवति। अत एव 'अजं पशुमुपाकरोतीति', 'अग्नीषोमाभ्यां छागस्य वपायै मेदसोऽनुब्रूहि' इत्येवमादीनि श्रुतिवाक्यानि सङ्गच्छन्ते। स चायं पशुर्जातदन्तोऽविकलाङ्गो निरामयः परिपुष्टश्चेद्यज्ञार्हो नेतरः। यदा पशुर्वधस्थानं प्रति नीयते तदा कृष्णयजुर्वेदीयप्रथमकाण्डगततृतीयप्रपाठकस्थम् 'उरो अन्तरिक्षम्' इत्यादिमन्त्रं पठन्ति। तत्तात्पर्यं तु हे विस्तीर्ण इन्द्रियसमूह अस्य पशोरिन्द्रियाभिमानिनीभिर्देवताभिः प्राणादिवायुभिर्जीवात्मना च सह यूयं हवींषि अस्मभ्यं ददतु। ततोऽस्य पशोर्भाविना देवशरीरेण संयुङ्क्ष्वमिति। यज्ञियपशोः संज्ञपनं केनापि ऋत्विजा कार्यम्। अमुकेन

कार्यमितिविशेषस्य श्रुतावनुपलम्भादित्येके। अपरे तु ऋत्विग्भ्योऽन्येनैव केनापि कार्यमित्याहुः। संज्ञप्तस्य पशोरङ्गनिःसारणं तु कश्चिदृत्विगेव कुर्यान्नान्य इति सर्वसम्मतम्। अङ्गानि तु हृदयं जिह्वा वक्षो यकृत् वृक्की वामहस्तो द्वे पार्श्वे दक्षिणा श्रोणी गुदनालमध्यं वपा वसा चेत्येवमादीनि सन्ति। तत्र हृदयमाम्रफलाकारम्। यकृत् महाराष्ट्रभाषायां काळिज इति प्रसिद्धम्। उभयोः कुक्ष्योरामलकफलाकारावयवौ वृक्की। वामहस्तः स्कंधस्याधस्तनो मांसलो भागः। वपा जीर्णवस्त्रखण्डसदृशं हृदयवेष्टनम्। मांसपचनभाण्डे यस्तैलमिव रसः प्रादुर्भवति सा वसा। स्पष्टमन्यत्। एषामङ्गानां शामित्राग्नौ पक्वानां यथाविधि होमं कुर्वन्ति। सोऽयमग्नीषोमीयपशुयागः।

अथ ऋत्विगादयो द्विजाश्चात्वालोत्करयोरुत्तरतो नातिदूरे प्रवहन्तीं महानदीं गत्वा आतपच्छाययोः सन्धौ प्रवहन्तीरपः सोमाभिषवायोपयोक्ष्यमाणाः समाहृत्य यज्ञशालायां स्थापयन्ति। आसामपां वसतीवरीति नामधेयं श्रुतिप्रसिद्धम्। यस्मिन्नहनि वसतीवरीसम्पादनं तस्यां रात्रौ यजमानो ब्राह्मणेभ्यः सकाशाद् विविधानि देवचरित्राणि शृण्वन्नग्निमुपवसति। ततः कारणादिदमुपवसथदिनमुच्यते।

अथ विभातायां रात्रौ प्रबुद्धैः सुस्नातैरध्वर्युप्रमुखैर्विप्रैः सुत्यादिनकृत्यं प्रारभ्यते। तद्यथा-हविर्द्धानशकटादुपरवदेशे सोममाहरन्ति। ततः समवाप्तप्रबोधा मनुष्यपक्ष्यादयो यदा निजशय्याया मुपविष्टाः सन्तश्चक्षुषी उन्मील्य मिथ उपांशु व्याहरन्ति ततोऽपि प्रागुषःकालेऽध्वर्युणा दत्तप्रेषो होता गम्भीरस्वरेण प्रातरनुवाकं पठन्नग्निमुषसमश्विनौ च स्तौति। आग्नीध्रः सवनीयपुरोडाशादि साधयितुं प्रवर्त्तते। उन्नेता सोमपात्राणि मृत्स्नाविरचिते खराभिधप्रदेशे यथोपदेशमासादयति। द्विविधानि सोमपात्राणि, ग्रहाः स्थाली चेति भेदात्। तत्र–दारुमयानि पात्राणि ग्रहाः, मृन्मयानि भाण्डानि स्थाल्यः। खरस्येशान्यामुपांशुग्रहोऽन्तर्यामग्रहश्चासाद्यते। द्वावपीमौ प्रादेशमात्रोत्सेधौ संकुचितमध्यावुलूखलाकारौ भवतः। अनयोः पात्रयोरधस्तादैन्द्रवायवो मैत्रावरुण आश्विनश्चेति त्रयो ग्रहा आसाद्यन्ते। त्रयोऽप्येते प्रादेशमात्रा उलूखलाकारा एव, परं तेषामैन्द्रवायवग्रहस्य कटिप्रदेशे समुत्कीर्णा मेखला, मैत्रावरुणस्य कण्ठप्रदेशे अजागलस्तनसदृशमवयवद्वयम्। आश्वि-

मस्य तु अश्वशफाकारं बुध्नमिति विशेषः । खरस्य मध्ये आग्रयणस्थाली, तस्या दक्षिणत उक्थग्रहसहिता उक्थस्थाली, उत्तरतश्चादित्यग्रहसहिता आदित्यस्थाली । आदित्यस्थाल्याः पूर्वतो द्वावृतुग्रहावुभयतोमुखौ । मुखं च हस्तिशुण्डाग्राकृति । आग्रयणस्थाल्याः पश्चिमतः पुष्करमुखी[1] सदण्डा पारिप्लवा स्थाप्यते । इदं पात्रं द्रोणकलशात् सोमरसोद्धरणायोपयोक्ष्यते । हविर्धानशकटस्याग्रे सोमरसशोधनाय सदृशे द्वे और्णवस्त्रे स्थाप्येते । तयोरेकं प्रादेशमात्रं द्वितीयं त्वरत्निमात्रम् । उभे अपि जीवन्मेषलोमनिर्मिते अपेक्ष्येते । प्रादेशमात्रस्य पारिप्लवायाम्, अरत्निमात्रस्य तु द्रोणकलशे उपयोगो भविष्यति । दक्षिणहविर्धानशकटस्याधस्तान्मृन्मयं माणिकं द्रोणकलशाभिधं स्थापयन्ति । उत्तरहविर्धानशकटस्योपरि उपभृत्संज्ञकम्, आधवनीयसंज्ञकं चेति महाकलशद्वयं स्थापयन्ति । उत्तरशकटस्याधस्ताद्दारुमयानि दश चमसपात्राणि, मृन्मयास्त्रयः पञ्च वा घटाः, स्थाप्यन्ते । सर्वमिदमुन्नेता करोति । ततश्चाध्वर्युणा नियुक्ताश्चमसाध्वर्यवो यजमानपत्नी च समनन्तरोक्तैर्घटैर्जलमाहरन्ति । तत्र पुरुषाहृतस्य जलस्य एकधनमिति संज्ञा, पत्न्याहृतस्य तु पान्नेजनमिति संज्ञा श्रुतौ प्रसिद्धा । वसतीवरीसंज्ञकानां पूर्वोक्तानामपां सम्प्रयुक्तानां च द्विविधानामपां तृतीयांशमाधवनीयकलशेऽध्वर्युर्निनयति । शिष्टमुदकं सुरक्षितं स्थापयति । ततो यजमानः प्रतिप्रस्थाता नेष्टोन्नेताऽध्वर्युश्चाभिषवणफलकसमीपे उपविश्य हस्तेषूपलान् धारयन्तो वाचं नियच्छन्ति । अध्वर्युः पञ्च सोममुष्टीनभिषवणफलके निर्वपति । प्रतिप्रस्थाता निरुप्तात् सोमपुञ्जात् षडंशून्[2] गृहीत्वा त्रिष्वङ्गुलिसन्धिषु द्वौ द्वौ निदधाति । ततः सोमाभिषवः[3] प्रारभ्यते । स चैकस्मिन्नहनि त्रिवारं क्रियते । तत्र प्रथमस्य पर्यायस्य प्रातःसवनमिति, द्वितीयस्य मध्यन्दिनसवनमिति, तृतीयस्य तु सायंसवनमिति शब्देन व्यवहारः । प्रातःसवने प्रथमत उपांशुग्रहपर्याप्तं सोमं पृथगभिषुत्य जले समालोड्य च पूर्वोक्तांशुषट्कात् द्वावंशू उपांशुग्रहपात्रोपरि निधाय प्रतिप्रस्थाता स्वहस्ताञ्जलिगालितेन सोमरसेन तत्पात्रं पूरयित्वा अध्वर्युहस्ते ददाति । अध्वर्युश्च सूर्योद्देशेन तत्पात्रस्थसोमरसस्याहुतिमाहवनी-

१ पुष्करं करिशुण्डाग्रम् ।

२ अंशुपदेन सोमवल्लीप्रतनुकाण्डमुच्यते ।

३ अभिषवः पेषणम् ।

याग्नौ प्रक्षिपति । एवमेव द्वितीयतृतीयसवनयोरपि । अस्मिन्नेव पात्रे हस्तेनैव सोमरसस्य ग्रहणमंशुभ्यां च पवित्रीकरणमिति श्रुतिषु प्रसिद्धम् । तथा च कृष्णयजुर्वेदस्य ६ काण्डे ४ प्रपाठके ५ अनुवाके पठ्यते 'कस्मात् सत्यात् त्रयः पशूनां हस्तादानाः । यत् त्रिरुपांशु हस्तेन गृह्णाति तस्मात् त्रयः पशूनां हस्तादानाः पुरुषो हस्ती मर्कट' इति । अस्यां श्रुतौ पुरुषस्यापि पशुत्वोक्त्या पुरा कल्पे पुरुषमेधप्रवृत्तिरासीदिति गम्यते । तथा च श्रूयते 'ब्रह्मणे ब्राह्मणमालभेत' इति । स्पष्टं चेदमत्रैवानुवाकभाष्ये । तथा ऋग्वेदेऽपि श्रूयमाणेन शुनःशेपाख्यानेन पुरुषमेधप्रवृत्त्यवगमः । अथ महाभिषवं वर्त्तयन्ति । स यथा । प्रतिप्रस्थातृप्रभृतयो भूयसीं सोमवल्लीं पिंषन्ति, अध्वर्युस्तत्र जलमासिञ्चति । उन्नेता सम्यक् पिष्टानां सोमानां कल्कानाधवनीयकलशे नीत्वा प्रक्षिपति । किंच मर्दितसोमकल्कपिण्डान् जले समालोड्य निष्पीड्य च नीरसान् नाशिरपुञ्जान् पुनरभिषवणफलके समानीय निदधाति । उद्गातृसहायपुरुषास्तेषु नाशिरपुञ्जेषु द्रोणकलशं संस्थाप्य तस्योपरि दशापवित्रं प्रसार्य तिष्ठन्ति । यजमानस्तद्वस्त्रं निम्नं कृत्वा तदुपरि होतृचमसं धारयन् तिष्ठति । तत उन्नेता पारिप्लवानामकेनोदञ्चनपात्रेणाधवनीयकलशात् सोमरसमुद्धृत्य यजमानहस्तगतहोतृचमसे पुनः पुनः प्रक्षिपति । एवं यजमानहस्तस्थहोतृचमसात् द्रोणकलशे निपतन्त्या सोमरसधारया अन्तर्यामादीनि कतिपयानि सोमपात्राणि पूरयितव्यानि । तेषु पूर्यमाणेषु द्रोणकलशोऽर्द्धपूरितः सम्पद्यते । ततस्तथैव धारासम्पातेनाकण्ठं द्रोणकलशः पूरयितव्यः । एवमेवोत्तरहविर्धानशकटस्थः पूतभृत्संज्ञकः कलशोऽपि पूरयितव्यः । कानिचिद् ग्रहपात्राणि द्रोणकलशस्थेन, कानिचिच्चूपभृत्कलशस्थेन सोमरसेन पूर्यन्ते । चमसपात्राणि तु सर्वाण्युपभृत्कलशस्थेनैवेति बोध्यम् । ततश्च संजाते सूर्योदये द्वितीयो ग्रहोऽन्तर्यामसंज्ञकः सूर्योद्देशेन गृह्यते । सर्वेषां सोमग्रहाणां निरूपणं कृष्णयजुःसंहितायाः प्रथमकाण्डे ४ प्रपाठके कृतमस्ति । तथा सौमिकदेवतानां स्तावका मन्त्रा अपि तत्र पठिताः सन्ति । तेऽत्र विस्तरभयान्न लिख्यन्ते । तृतीय ऐन्द्रवायवग्रह इन्द्रवायुभ्यां समर्प्यते । चतुर्थो मैत्रावरुणग्रहो मित्रावरुणाभ्याम्, पञ्चम आश्विनोऽश्विभ्यां प्रदीयते । षष्ठः शुक्रग्रहः, सप्तमो मन्थिग्रहश्चेन्द्राय समर्प्यते । तत आग्रयणस्थाल्यां पूरितेन सोमरसेन विश्वेदेवास्तर्प्यन्ते । तत उक्थग्रहे-

णोक्थस्थाल्या च महेन्द्राय सोमरसः प्रदीयते । ध्रुवस्थाल्या ध्रुवग्रहेण च वैश्वानरायाग्नये । ततश्चतुर्दशभिर्ग्रहैर्मासदेवा इज्यन्ते । तत्र चैत्रादीनां द्वादशमासानां द्वादश, त्रयोदशस्य मलमासस्य तु अधिकक्षयभेदेन द्विरूपत्वात् द्वावित्येवं चतुर्दश । ऐन्द्राग्नग्रहेणेन्द्राग्नी इज्येते । एतावन्तः प्रातःसवने सोमग्रहाः श्रुतिप्रसिद्धाः । अथ मध्यन्दिनसवने त्रयो मरुत्वतीया, एकश्च माहेन्द्र इति चत्वारो ग्रहा गृह्यन्ते इति विशेषः । तत्र मरुत्वतीयानां मरुद्भिः सहित इन्द्रो देवता । मरुतः सन्त्यस्य सहाया इति मरुत्वानिन्द्रः स देवता एषां ते मरुत्वतीया इत्यर्थः । तृतीयसवनेप्यादित्यः सावित्रो वैश्वदेवः पात्नीवतो हारियोजनः षोडशी चेति षड् ग्रहा गृह्यन्ते इति विशेषः । तत्र पात्नीवतस्य ग्रहस्य त्वष्टृसहिता अग्निपत्नी अग्नायी देवता । हारियोजनसंज्ञकः सोमग्रहो द्रोणकलशेन गृह्यते, हूयते चेन्द्रोद्देशेन । तथा षोडशिग्रहस्यापीन्द्र एव देवता । यतः शस्त्रेष्विन्द्रदेवताकं शस्त्रं षोडशं तद्वानिन्द्रः षोडशीत्यभिधीयत इत्यादि प्रकृतग्रहानुवाकभाष्ये स्पष्टम् । यज्ञावशिष्टसोमरसपानं प्रतिसवनमृत्विजः कुर्वन्ति । यजमानस्तु सायंसवने सोमं पिबति ।

अथात्र यागे यजमानः सदोमण्डपमधिष्ठाय ऋत्विग्भ्यो दक्षिणां प्रयच्छति । अग्निष्टोमे द्वादशशतं गावः सुवर्णं वासांसि अश्वा अश्वतरा गर्दभा मेषा अजा ओदनं यवास्तिला माषाश्च दक्षिणात्वेन दातव्या इति श्रुत्यामुक्तम् । तत्र ब्रह्मणे उद्गात्रे होत्रेऽध्वर्यवे च द्वादश द्वादश गावः, किंचिन्मानमास्थाय सुवर्णादयश्च प्रदीयन्ते । ब्राह्मणाच्छंसिने प्रस्तोत्रे मैत्रावरुणाय प्रतिप्रस्थात्रे च नव नव गावः, पूर्वगृहीतमानात् पादोनाश्च सुवर्णादयः पदार्थाः प्रदीयन्ते । पोत्रे प्रतिहर्त्रेऽच्छावाकाय नेष्ट्रे च षट् षट् गावोऽर्द्धमानेन च सुवर्णादयः प्रदीयन्ते । आग्नीध्राय सुब्रह्मण्याय ग्रावस्तुते उन्नेत्रे च तिस्रस्तिस्रो गावः, पादमानेन च सुवर्णादयः प्रदीयन्ते । ततश्चमसाध्वर्युसदस्यादयो ये विप्रा यज्ञकर्म्मणि विनियुक्तास्तेभ्योऽपि यथाऽधिकारं दक्षिणा दीयते । ततश्चावसरप्राप्तान् ब्राह्मणानितरांश्चाऽन्धपङ्गुप्रभृतीन् दीनान् स्वशक्त्यनुसारेणान्नवस्त्रहिरण्यादिभिः सूनृतया च वाण्या परितोष्य सर्वजनेष्वानन्दितेषु स्वयं यजमानोऽपि तदानीं सञ्जातपरमानन्दः कृतार्थोऽस्मीति मन्यते, सोऽयमुदारस्य सत्कर्म्मणः प्रभावः । ननु याज्ञे कर्म्मणि वृतेभ्य ऋत्विग्भ्यो यद्दक्षिणाप्रदानं सोऽयं दानधर्म्म आहोस्विद् भृतिदानम् ।

अत्र प्रकरणे 'ऋत्विग्भ्यो दक्षिणां ददाति' इति श्रुतिवाक्ये दाधातोः प्रयोगाद्दानधर्म्मो भवितुमर्हतीति न वाच्यम्। दाधातुप्रयोगमात्रेण दानधर्मस्य बोधयितुमशक्यत्वात्। अन्यथा रजकाय वस्त्रं ददाति, खण्डिकोपाध्यायः शिष्याय चपेटां ददातीत्यादिवाक्यादपि तद्बोधापत्तेः। नापि भृतिदानमिति साम्प्रतम्। ऋत्विजां विप्राणां किंकरसाम्यापत्तेरिति चेत्। अत्रोच्यते। प्रारब्धयज्ञकर्म्मनिर्वाहकेभ्यो यदृत्विग्भ्यो गवादि धनं दीयते तन्नहि अनुपकुर्वद्भ्यो याचकेभ्य इव दीयते। किन्तु यज्ञकर्म्मणि निजवैदुष्येण क्रियाकौशलादिना च यत् तैरुपकृतं तन्निष्कृतये दीयते। ततश्च तद्भृतिदानमेव, न तु सात्त्विकं दानम्।

दातव्यमिति यद्दानं दीयतेऽनुपकारिणे।
देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम्॥
(भ० गी० १७। २०)

इत्यादिवचनोक्तदानलक्षणानाक्रान्तत्वात्। तथा च श्रूयते— 'दीक्षितमदीक्षिता दक्षिणापरिक्रीता ऋत्विजो याजयेयुः' इति। नियतकालं भृत्या स्वीकरणं हि परिक्रयणमुच्यते। स्पष्टं चेदं पूर्वमीमांसायां दशमाध्यायस्य द्वितीयपादे शास्त्रदीपिकादौ।

अथातः सपत्नीको यजमान ऋत्विग्भिरितरैश्च सुहृद्बान्धवैः सपत्नीकैः परिवृतो यज्ञाङ्गभूतावभृथस्नानाय महानदीं जलाशयं वा गच्छति। तत्समये प्रस्तोता मार्गे परिक्रामन् सामानि गायति। यजमानप्रभृतयः पुरुषा यजमानपत्न्यादयः स्त्रियश्च निधनवाक्यं[1] गायन्ति। एवं महोत्साहेन जलाशयमासाद्य तत्रावभृथाङ्गतया विहितं हवनादिकं विधाय जलाशयं प्रविश्य यजमानपुरःसराः सर्वे स्नान्ति व्यात्युक्ष्या[2] विहरन्ति च। इदमवभृथस्नानं सर्वत्र महाक्रतुषु विधीयते। तत्राश्वमेधावभृथस्नानावसरे समागतो महापातकी स्वकीयं पातकं विख्याप्य यदि ऋत्विग्यजमानादिभिरभ्यनुज्ञातः स्वयमपि स्नायात् तर्हि ब्रह्महत्यादिपातकान्मुक्तः सन् पूतो भवेत्। तथा चैकादशाध्याये प्रोवाच मनुः—

---

१ विविधेषु गानपर्यायेषु यत् प्रतिपर्यायं समानमेव गीयते तन्निधनवाक्यम्। यथा महाराष्ट्रभाषायां पल्लवपदशब्देन प्रसिद्धम्।

२ व्यात्युक्षी जलकेलिः।

'शिष्ट्वा वा भूमिदेवानां नरदेवसमागमे ।
स्वमेनोऽवभृथे स्नात्वा हयमेधे विशुध्यते ॥'

(मनु० ११।८२) इति ।

अत्र हयमेधग्रहणमग्निष्टुन्मध्यानां पञ्चदशरात्रादिक्रत्वन्तराणामग्निष्टुत्समाप्तिकानां वा सर्वमेधानामुपलक्षणम् । 'अश्वमेधावभृथेऽन्यस्मिन्वा यज्ञेऽप्याग्निष्टुदन्तश्च' इति गौतमस्मरणात्[2] । एवंविधक्रियाकलापैरस्याग्निष्टोमयागस्यानुष्ठानं भवति । अयमग्निष्टोमाख्यः सोमयागः सोमद्रव्यसाध्येषु सर्वयागेषु अग्रगण्य इति कृष्णयजुर्वेदस्य प्रथमकाण्डेऽष्टमप्रपाठके श्रूयते-'अग्निष्टोममग्र आहरन्ति । अग्निमुखं वा अग्निष्टोमः । यज्ञमुखमेवाक्रम्य सर्वमाक्रमते' इति । सर्वम् अभिषेकयुक्तं राजसूयमाक्रमते प्रारभते इति तद्भाष्यम् । अत्र यागे सर्वेषां द्विजातीनां समानोऽधिकारः समानं च याज्ञिकतन्त्रम् । परं क्षत्रियकर्तृकेऽग्निष्टोमे आग्नेय ऐन्द्रः सौर्यश्चेति त्रयोऽतिग्रहा अधिका गृह्यन्ते इति विशेषः । तदुक्तं कृष्णयजुर्वेदे 'अप्याग्निष्टोमे राजन्यस्य गृह्णीयात् । व्यावृत्कामो हि राजन्यो यजते' इति । अपिशब्द एवार्थे । राजन्यस्यैवाऽग्निष्टोमेऽतिग्रहान् गृह्णीयात् व्यावृत्काम उत्कर्षकाम इति हि तदर्थः सायनाचार्येण दर्शितः ।

संक्षेपेण यथाबुद्धिरग्निष्टोमोऽत्र वर्णितः ।
प्रीयतां तेन यज्ञेशो देवस्तदनु सज्जनाः ॥
अतः परं राजसूययज्ञः संक्षिप्य वर्ण्यते ।
अत्राधिक्रियते नैव वैश्यो वा ब्राह्मणोऽपि वा ॥
किन्तु यः क्षत्रियकुले जातः सन् स्वकुलागते ।
राज्येऽभिषिक्तः समरे कृतशत्रुपराभवः ॥
असकृत्प्राप्तविजयः श्रिया मण्डितविग्रहः ।
धीरोदात्तो महासत्त्वो धनसेनासमृद्धिमान् ॥
साम्राज्यसाधकैः कृत्यैरनुरक्तप्रजो नृपः ।
राजसूयेऽश्वमेधे वा श्रुत्याऽधिक्रियते पुमान् ॥

---

१ भूमिदेवानामृत्विग्विप्राणां नरदेवेन राज्ञा यजमानेन सह समवाये स्वकीयमेनः शिष्ट्वा प्रख्याप्य परकीयाश्वमेधावभृथाख्यकर्माङ्गभूतस्नानसमये स्वयमपि स्नात्वा विशुध्यते इत्यर्थः ।

२ माइसोर मुद्रिते गौतमधर्मसूत्रे ( २२ । ८-९ ) तु 'अश्वमेधावभृथे वा । अन्ययज्ञेऽप्यग्निष्टुदन्तश्चेत् ।' इति पाठः । ( मं० दे० शा० ) ।

राजसूययज्ञे श्रुत्युक्तहवनबलिदानादिभिर्देवानां यजनं द्यूतक्रीडा दिग्विजयः शुनःशेपाख्यानश्रवणं पञ्चसोमयागाश्चेत्येवंविधः क्रियाकलापोऽनुष्ठेयत्वेन विहितो गवां लक्षं च दक्षिणा। तथा चोक्तमापस्तम्बेन—'राजा स्वर्गकामो राजसूयेन यजेत । गवां शतसहस्रं दक्षिणा अग्निष्टोमः पञ्चापवर्गः। पञ्चसहस्राणि पवित्रे ददाति। त्रिंशतमभिषेचनीये । त्रिंशतं दशपये । दश केशवपनीये । विंशतिं व्युष्टिद्विरात्रे । पञ्च क्षत्रस्य धृतौ' इत्यादि । तत्र पवित्रनामकेन सोमयागेन राजसूययागः प्रारब्धो भवति । इतरे तु चत्वारो यथास्थानमनुष्ठीयन्ते। राजसूयांगभूतस्य पवित्रनामकसोमयागस्याऽनन्तरं चातुर्मास्ययागान् पूर्वोक्तविधिनाऽनुष्ठाय देविकासंज्ञिका इष्टीः कृत्वा रत्निहोमोऽनुष्ठीयते । अयं रत्निहोमाख्यः कर्म्मविशेषः प्रथमप्रकाशे प्रसङ्गतो निरूपितः । ततोऽभिषेचनीयाख्यः सोमयागोऽनुष्ठीयते । तत्र समुद्रनदीसरोह्रदादितीर्थेभ्यः समाहृताभिः शुद्धाभिरद्भिः पलाशोदुम्बराश्वत्थन्यग्रोधकाष्ठमयानि चत्वारि पात्राणि पूरयित्वा विध्युक्तमन्त्रैरभिमन्त्र्य चातुर्वर्ण्याध्यासितायां सभायां चतुर्दिक्षु स्थापयन्ति । खादिरमौदुम्बरं वा मञ्चकं व्याघ्रचर्मपरिवृतं सौवर्णफलकालङ्कृतं सभामध्यभागे स्थापयित्वा तदुपरि सहस्रच्छिद्रं सौवर्णमभिषेकपात्रं निबध्नन्ति। ततो यजमानमाग्नीध्रमण्डपाद्बहिरानीय ब्रह्मा कांश्चिन्मन्त्रान् जापयति । ते च मन्त्राः कृष्णयजुःसंहितायाः १ काण्डे ८ प्रपाठके १२ अनुवाके 'आविन्नो अग्निर्गृहपतिराविन्न इन्द्रो वृद्धश्रवा' इत्यादयः पठ्यन्ते। तदर्थस्तु—यज्ञेनैवाग्निर्गृहपतिरिन्द्रो वृद्धश्रवाः समृद्धकीर्तिः पूषा सर्वशिल्पविज्ञानवान् मित्रावरुणौ सत्यसंधौ द्यावापृथिव्यौ धृतव्रते अदितिः सर्वदेवरूपिणी चाभवत् । एवमेव यज्ञेनायं यजमानोऽमुकस्य राज्ञः पुत्रोऽमुकस्य पौत्रोऽस्यां प्रजायामस्मिन् राष्ट्रे उत्तमकुलत्वं महाधिपत्यं महाजनराज्यं च प्राप्नोतीति । एतेन मन्त्रपाठेन यज्ञफलदातुः परमेश्वरस्य प्रसादफलमिदमिति भवद्भ्यः सूचयामि नत्वहं गर्वोक्तिं भणामीति विदन्तु भवन्त इति तात्पर्यं बोधयति राजा। ततो ब्रह्मा क्षत्रियप्रभृतिसर्वजनानाश्रावयति 'भो भारताः अयः वः सर्वेषां राजा सोमोऽस्माकं ब्राह्मणानां राजा' इति। ततो दिग्विजयाय प्रतिष्ठासोर्यजमानस्य सर्वत्र संरक्षणं विजयश्च भवत्वित्याशासाना ऋत्विजोऽग्न्यादिदेवान् हवनादिकर्म्मणा प्रीणयित्वा तेषां प्रसादफलख्यापकानाशीर्वादमन्त्रान् जपन्ति । ततः पूर्वोक्ते

स्नानपीठे सपत्नीकं यजमानमुपवेश्याध्वर्युप्रभृतयो ब्राह्मणाः क्षत्रियादयश्च वर्णाः पूर्वोक्तानि जलपात्राणि यथायथं गृहीत्वा तद्गताभिर्मन्त्रपूताभिरद्भिः सहस्रच्छिद्रमभिषेकपात्रं पूरयित्वा वैदिकमन्त्रैरभिषिञ्चन्ति । ततो यथाविभवं वस्त्राभरणादिभूषितो यजमानो यमरातिं पराजेतुमाकाङ्क्षति तस्यारातेर्दिशमभिषेणयति[1] । समरमूर्द्धनि तं जित्वा जयश्रिया समाश्लिष्टो यज्ञेशप्रसादेन समुत्तीर्णविघ्नार्णवो यजमानो महाराजो महतोत्सवेन चतुरङ्गसेनापरिवृतो निजराजधानीमायाति । ततः सभायां चतुर्दिक्षु पङ्क्त्याकारेण स्थापितेषु मञ्चकेषु मध्ये एकमुन्नतं तपनीयपीठं यजमानोऽध्यास्ते तस्य चाऽधस्ताद् ब्राह्मणादयः सर्वे वर्णा यथोचितं तमुपासते । तत्तत्पराक्रमार्जितयशःप्रशस्तिभिश्चैनं राजानमुपवर्णयन्ति । अत्रावसरे द्यूतक्रीडा विहिता । तस्यां च पणस्थाने ओदनो नियुज्यते । तथा च कृष्णयजुःसंहितायाः प्रथमकाण्डे ८ प्रपाठके १२ अनुवाके श्रूयते—'ओदनमुद्ब्रुवते । परमेष्ठी वा एषः, यदोदनः । परमामेवैनं श्रियं गमयति' इति । ओदनं उद्ब्रुवते पणत्वेन प्रतिजानन्ति । यत् यतः एष ओदनः परमेष्ठी प्रजास्रष्टा । अन्नाद्रेत इत्यादिप्रकारेणेत्याशयः । एनं प्रतिज्ञातारम् परमां श्रियं गमयति प्रापयतीत्यर्थः । अयमत्राभिसन्धिः । जये पराजये वा जितो वा हारितो वा ओदनो भवेदित्युभयथापि समुचितोऽयमोदनपण इति । अयं राजसूययज्ञः सौत्रामणीनामकयागानुष्ठानेन समाप्तो भवतीति श्रुतिकल्पसूत्रादौ स्पष्टम् ।

सौत्रामणीयागस्य प्रायः सोमयागस्येवानुष्ठानं क्रियते । विशेषस्तु अश्विनौ सरस्वती सुत्रामा इन्द्रश्चेति तिस्रः प्रधानदेवतास्तदुद्देशेन च चमसपात्रेषु त्रयः सोमग्रहा मृन्मयपात्रेषु च त्रयः सुराग्रहा गृह्यन्ते । पयोग्रहाणामाहुतय आहवनीयाग्नौ सुराग्रहाणां तु दक्षिणाग्नौ प्रक्षिप्यन्ते । किंच पितृयजनादीन्यपि सौत्रामण्यङ्गतया विहितानि कतिचित् कर्म्माणि सन्तीति दिक् ।

अथाश्वमेधयागोऽत्र सङ्क्षेपेण निरूप्यते ।
भगवान् यज्ञपुरुषस्तेन तुष्यतु मेऽनिशम् ॥

अस्मिन् यज्ञे मुख्यः पशुरश्वस्तथा छागादयोपीतरे नानाजातीया बहवः पशवः श्रुत्युक्ताः सन्ति । अश्वमेधमण्डपद्वारि एक-

[1] सेनया सह वर्त्तमानोऽभियातीत्यर्थः ।

विंशतियूपाः समुच्छ्रियन्ते। इदं च तैत्तिरीयकृष्णयजुःसंहितायाः १ काण्डे ४ प्रपाठके ४५ अनुवाकस्य भाष्ये पठ्यमानया—'एकयूपो वैकादशिनी वा अन्येषां यज्ञानां यूपा भवन्ति। एकविंशिन्यश्वमेध्यस्य सुवर्गस्य लोकस्याऽभिजित्यै' इतिश्रुत्या स्पष्टम्। तेषां सर्वेषां मध्यवर्त्तिनि यूपस्तम्भे मेध्याश्वोऽनुबध्यते इतरे तु पशव इतरेषु यूपस्तम्भेषु यथोपदेशमनुबध्यन्ते। तत्रादौ यूपनिबद्धं मेध्याश्वं कतिपयैर्वेदोक्तसंस्कारैर्यज्ञयोग्यं भावयित्वा यथेष्टसंचरणाय मुञ्चन्ति। तस्य च रक्षणाय कवचिनो निषङ्गिणश्चापबाणधरा युवानो राजकुमारा महाराजेन यजमानेनाज्ञाप्यन्ते। यथा इममश्वं वडवातो दावानलतोऽद्रुयश्च यूयं सावधानाः परित्रायध्वम्, परराष्ट्रे वा सञ्चरन्तमेनं कश्चिद् भूपतिरस्मान् प्रति स्पर्द्धमानो यदि निरुध्य बध्नीयात् तदा तमपि पराजित्य मोचयध्वमेनम्। किं बहुना यद्यदस्य प्रतीपमापतिष्यति तत्र तत्र भवन्तः प्रतिविदधतु। मेध्याश्वपरिरक्षणं हि राजन्यानामुत्कर्षावहमतः साधयन्तु भवन्तः, शिवाः पन्थानो वः सन्त्विति। ततस्ते राजकुमारा यथोपदेशं सर्वासु दिक्षु सञ्चारयित्वा (?) तं मेध्याश्वं पुनर्देवयजनप्रदेशे समानयन्ति। अत्र कृत्ये संवत्सरोऽयनं वाऽतियाति। ननु तत्तज्जनपदेषु यागप्रतिकूलैरीर्ष्याकलुषितैर्भूपतिभिः सह पुनः पुनरापतितेन सङ्गरप्रसङ्गेन बहुकालातिपातः स्यात् तत् कथं कृतसर्वदिक्संचारस्य मेध्याश्वस्य स्वल्पकालेन परावर्त्तनं सम्भवेदिति चेत्। उच्यते। नास्मिन् यज्ञे साधारणः क्षत्रियोऽधिक्रियते, किन्तु निजप्रतापानलनिर्दग्धपरिपन्थिपादपवनो महैश्वर्यभाक् क्षत्रियचूडामणिरेवेत्युक्तं राजसूयारम्भे। स हि महाराज इमं यज्ञं प्रारिप्सुः प्रथमं तावत् सर्वत्र प्रख्यातान् भूपालवर्यान् करिष्यमाणं निजमश्वमेधानुष्ठानं लेख्येनावेदयति। ततश्च महोदारचरितस्य यक्ष्यमाणस्यास्य राज्ञो भूयांसो भूपतिप्रवराः सहाया एव भवन्ति। स्वल्पा एव नृपाः केचित् प्रतीपमाचरन्तः स्वल्पेनैवोक्तकालेन पराजेतुं शक्यन्ते इति न काऽप्यनुपपत्तिः। अथ मेध्याश्वादीनां पशूनामालभनादिभिः क्रियाकलापैरिमं यागं निर्वर्त्तयन्ति।

एवं वैतानिकविधेर्दिङ्मात्रमिह दर्शितम्।
जनास्तेनाऽधिगच्छन्तु पारं श्रौतमहाध्वनः॥

इति भट्टयज्ञेश्वरोन्नीते आर्यविद्यासुधाकरे द्वितीयः प्रकाशः॥



## ॥ प्रकाशस्तृतीयः ॥

अथ संक्षेपतो वच्मि प्रसङ्गात् स्मार्त्तकर्म्मणाम् ।
स्वरूपाणि यथाशास्त्रं विदुषां तोषहेतवे ॥

स्मार्त्तकर्म्मणां पञ्चविंशतिसंस्काररूपत्वमाहाङ्गिराः—

पञ्चविंशतिसंस्कारैः संस्कृता ये द्विजातयः ।
ते पवित्राश्च योग्याश्च श्राद्धादिषु सुयन्त्रिताः ॥ इति ।

आदिशब्दाद्याजनाध्यापनादौ । ते च

गर्भाधानं पुंसवनं सीमन्तो बलिरेव च ।
जातकृत्यं नामकर्म निष्क्रमोऽन्नाशनं तथा ॥
चौलकर्मोपनयनं तद्व्रतानां चतुष्टयम् ।
स्नानोद्वाहौ चाग्रयणमष्टका च यथायथम् ॥
श्रावण्यामाश्वयुज्यां च मार्गशीर्ष्यां च पार्वणम् ।
उत्सर्गश्चाप्युपाकर्म महायज्ञाश्च नित्यशः ॥
संस्कारा नियता ह्येते ब्राह्मणस्य विशेषतः । इति ।

एषां पञ्चविंशतिसंस्काराणां नैमित्तिक-वार्षिक-मासिक-नित्य-भेदेन चातुर्विध्यमाहाश्वलायनः—

नैमित्तिकाः षोडशोक्ताः समुद्वाहावसानकाः ।
सप्तैवाग्रयणाद्याश्च संस्कारा वार्षिका मताः ॥
मासिकं पार्वणं प्रोक्तमशक्तानां तु वार्षिकम् ।
महायज्ञास्तु नित्याः स्युः संध्यावच्चाग्निहोत्रवत् ॥ इति ।

एते च गर्भाधानादिसंस्कारा गृह्यपदेनापि व्यपदिश्यन्ते । यदाहाश्वलायनाचार्यः—'उक्तानि वैतानिकानि गृह्याणि वक्ष्यामः' (आश्व० गृ० १ । १ । १) इति । वितानोऽग्नीनां विस्तारस्तत्र भवानि वैतानिकानि बह्वग्निसाध्यान्यग्न्याधेयाग्निहोत्रादीनि कर्म्माणि उक्तानि । अतः परं गृह्याणि गृहाय गृहस्थाश्रमधर्म्माय हितो गृह्य आवसथ्योऽग्निस्तस्मिन् यानि कर्म्माणि तानि गृह्याणि वक्ष्याम इति तदर्थः । अत्र गर्भाधानाद्या उपनयनान्ताः संस्काराः

---

१ निमित्तवशादनुष्ठेयं नैमित्तिकम् । २ वर्षे वर्षेऽनुष्ठेयं वार्षिकम् । ३ मासे मासेऽनुष्ठेयं मासिकम् । ४ प्रत्यहमनुष्ठेयं कर्म नित्यम् ।

सर्वेषां द्विजातीनामवश्यमनुष्ठेयाः। द्विजत्वसम्पादकत्वात्। एतैर-संस्कृतानां तु असंव्यवहार्यतैवापद्यते। यदाह मनुः—

अत ऊर्ध्वं त्रयोऽप्येते यथाकालमसंस्कृताः।
सावित्रीपतिता व्रात्या भवन्त्यार्यविगर्हिताः॥
(मनु० । २ । ३९ ) इति।

समावर्त्तनादिसंस्काराणां तु यथाकाममनुष्ठानम्। तथा चोवाच मनुः—

यदि त्वात्यन्तिकं वासं रोचयेत गुरोः कुले।
युक्तः परिचरेदेनमाशरीरविमोक्षणात्॥ (मनु० २।२४३) इति।

गर्भाधानाद्युपनयनान्तानां संस्काराणां नित्यत्वेऽप्येषामानुषङ्गिकं फलमाह मनुः—

गार्भैर्होमैर्जातकर्मचौलमौञ्जीनिबन्धनैः।
बैजिकं गार्भिकं चैनो द्विजानामपमृज्यते॥ (मनु० २। २७) इति।

ये गर्भशुद्धये क्रियन्ते ते गर्भाधानादिसंस्काराङ्गप्राजापत्यादि-होमास्तैस्तथा जातकर्माद्यैश्च बीजात् समुद्भूतं बैजिकं प्रतिषिद्ध-मैथुनसंकल्पादिना पैतृकरेतोदोषजनितम्, तथा गर्भात् सम्भूतं गार्भिकम् अशुचिमातृगर्भवासजनितं तदुभयविधमपि द्विजानां ब्राह्मणक्षत्रियविशामेनः पातकम् अपमृज्यते अपक्षीयते इत्यर्थः। त एते संस्काराः शूद्रस्यापि वैदिकमन्त्रैर्विना कार्या इत्याह यमः—

शूद्रोऽप्येवंविधः कार्यो विना मन्त्रेण संस्कृतः। इति।

अथ गर्भाधानं भार्यायामृतुमत्यां कार्यम्। षोडशरात्रिपरिमितो गर्भधारणयोग्यो रजोदर्शनोपलक्षितः स्त्रीणामवस्थाविशेषो हि ऋतुः। तत्राद्याश्चतस्रः स्त्रीसम्पर्कादावपि निषिद्धाः, अन्याश्चामा-वास्याद्याः केवलं स्त्रीसम्भोगे निषिद्धा रात्रीर्वर्जयित्वा ज्योतिर्विदा-दिष्टे शुभे काले स्वगृह्योक्तप्रकारेण होमादिपूर्वकं गर्भाधानसंस्कारं कुर्वन्त्यार्यजनाः। ननु ऋतुकाले स्वदारसंयोगो रागत एव प्राप्तस्तत्र शास्त्रेण 'ऋतौ भार्यामुपेयादि'त्यनेन गृह्योक्तविधिना च किं क्रियते इति चेत्। उच्यते—लोके हि पुरुषाणामजितेन्द्रियाणां दुःसहकाम-सन्तापाद्भवेदेव स्त्रियां प्रवृत्तिः। समानश्च सन्तापोपशमो गम्यायां वा अगम्यायां वा। तत्र 'ऋतौ भार्यामुपेया' दित्यादिना शास्त्रेण नियमः क्रियते। यथा स्वयोषिदेव गम्या परकीया त्वगम्येति। इत्थं च भार्यापदस्वारस्येन लभ्यते। परकीयायां स्वनिरूपितभार्या-

त्वस्यैवाभावात्। तथा 'ऋता' वित्युक्त्या ऋतुकाले एव नान्यदेति। किञ्च यथा श्रौतयज्ञानुष्ठाने अग्नौ कपालान्यधिश्रित्य अनुमन्त्रयते—'भृगूणामाङ्गिरसां धर्मस्य तपसा तप्यध्वम्' इति। तत्र मन्त्रं विनापि स्वभावत एवोष्णो वह्निः कपालानि तापयेदेव। परंत्वेवं क्रियमाणमभ्युदयकारि भवति। तथा शास्त्रोक्तविधिमुपेक्ष्यापि स्त्रियां संयुक्तः पुमान् गर्भमादध्यादेव। परं शास्त्रोक्तविधिना क्रियमाणं कर्माभ्युदयकारि भवतीति। तथा चोवाच भगवान् मनुः—

श्रुतिस्मृत्युदितं धर्ममनुतिष्ठन् हि मानवः।
इह कीर्त्तिमवाप्नोति प्रेत्य चानुत्तमं सुखम्॥
श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिः।
ते सर्वार्थेष्वमीमांस्ये ताभ्यां धर्मो हि निर्बभौ॥

(मनु० २। ६—१०) इति।

ते श्रुतिस्मृती सर्वार्थेषु अमीमांस्ये प्रातिकूलतर्कैर्न विचारयितव्ये यतस्ताभ्यां धर्मो निर्बभौ निःशेषेण प्रकाशतां गतः। धर्मस्यादृष्टरूपत्वेनातीन्द्रियतया तर्कसाध्यत्वाभावाच्छास्त्रैकगम्यत्वाच्चेत्याहुः। एवमेवादृष्टफलके सर्वत्र शास्त्रविहिते कर्मविशेषे दिगियमनुसन्धेया। अत एवैतदकरणे दोषं प्रोवाच आश्वलायनः—

'गर्भाधानस्याकरणात्तस्यां जातस्तु दुष्यती'ति।

अथ पुंसवनं कुर्वाणः पतिः सुस्नातो विहितनित्यकृत्यो मङ्गलस्नातां परिहिताऽहतवाससं भूषितां भार्यां स्वदक्षिणत उपवेश्य स्वगृह्योक्तं कर्मानुष्ठाय प्रक्षालिते प्रसृतीकृते पत्नीपाणौ समानरूपवत्साया गोर्दधि निक्षिप्य तदुपरि लिङ्गवद्यवं तत्पार्श्वयोरण्डद्वयवन्माषद्वयं च निधाय किं पिबसीति त्रिवारं पत्नीं पृच्छति। सापि पुंसवनमिति त्रिरुक्त्वा सयवमाषं तद्दधि निःशेषं पीत्वा जलमाचम्य पुनरेवं प्रश्नप्रतिवचनपूर्वकं द्विवारं प्राश्याचामति। इदं पुंसवनाख्यं कर्म तृतीये मासि कार्यम्। गर्भानभिव्यक्तौ तु चतुर्थे षष्ठे वा मासि कार्यमित्याहुः।

अथ सीमन्तोन्नयनं चतुर्थे षष्ठेऽष्टमे वा मासि शुभे दिवसे कुर्वन्ति। तत्र च औदुम्बरस्तबकद्वयेन कुशाङ्कुरत्रयेण च सहितया त्रिशुक्लया शलल्या पत्न्याः केशललाटयोः सन्धिमारभ्य ऊर्ध्वप्रदेशे सीमन्तं पतिरुल्लिखति। ततो यथाचारं सगोधूमामौदुम्बरफलमालां पत्नीकण्ठे निधाय वीणागाथिनौ द्विजौ सोमं राजानमुपगायतामिति प्रेरयति। ततस्तौ द्विजौ वीणयोपगायतः।

ततो होमशेषं समाप्य ऋत्विग्भ्यो दक्षिणां दत्त्वा जीवत्पतिपुत्रकाभिर्वृद्धस्त्रीभिर्गर्भिण्या मङ्गलाचारं कारयेत्। अस्मिन् कर्म्मणि शतं ब्राह्मणा भोजनीयाः। इदं च कर्म्म क्षेत्रसंस्काररूपत्वात् प्रतिगर्भं नावर्त्तते। तथा चोक्तं हारीतेन—

सकृत्तु कृतसंस्काराः सीमन्तेन द्विजास्त्रियः।
यं यं गर्भं प्रसूयन्ते स सर्वः संस्कृतो भवेत्॥ इति।

अथ विष्णुबलिं गर्भिण्या गर्भस्य पुष्टिपूर्वकसुखप्रसवकामाः कुर्वन्ति। तत्र गर्भाधिदेवतां विष्णुं विष्णुदेवत्यैः 'अतो देवा अवन्तु नः' (ऋ० १। २२। १६) इत्यादिचतुःषष्ट्या मन्त्रैश्चरुणा हुत्वाऽवशिष्टान्नेन चतुःषष्टिवारं बलिदानं गोमयोपलिप्ते स्थण्डिले कृत्वा विष्णवेऽर्घ्यं च दत्त्वा बलिशेषात् किंचिदन्नमादाय पिण्डद्वयं कृत्वा दम्पती प्राश्नीयाताम्। तत आचम्य होमशेषं समाप्य दक्षिणां दत्त्वा यथाशक्ति ब्राह्मणान् भोजयेत्। इदं कर्म्म प्रतिगर्भमावर्त्तनीयम्। 'प्रतिगर्भं बलिः कार्यः सीमन्तश्च प्रशस्यते' इत्याश्वलायनोक्तेः।

अथ जातमात्रे कुमारे पिता जातकर्म्म करोति। तत्र पुत्रस्य मुखं निरीक्ष्य नद्यादावुदङ्मुखः स्नात्वाऽऽचम्य सितचन्दनमाल्यादिभिरलंकृतः पिता नालच्छेदनात्पूर्वं स्वगृह्योक्तविधिना हवनं कृत्वा विषममानेन मधुसर्पिषी शिलातले निक्षिप्य तत्र सुवर्णं यावद्रजोविमोकं घर्षयित्वा तेनैव सुवर्णेन सुवर्णरजोविमिश्रं मधुसर्पिषं गृह्योक्तमन्त्रेण कुमारं पाययेत्। स्वविभवाऽनुसारेण च गोभूहिरण्यादि ब्राह्मणादिभ्यो दद्यात्।

पित्रादिसपिण्डानां जननिमित्तमाशौचं कर्म्मानर्हत्वलक्षणं प्राप्नोति। यथाह मनुः—

दशाहं शावमाशौचं सपिण्डेषु विधीयते।
जननेऽप्येवमेव स्यान्निपुणं शुद्धिमिच्छताम्॥

(मनु० ५। ५६, ६१) इति।

शावाशौचजननाशौचयोर्विशेषमप्याह मनुः—

सर्वेषां शावमाशौचं मातापित्रोस्तु सूतकम्।
सूतकं मातुरेव स्यादुपस्पृश्य पिता शुचिः॥ (मनु० ५।६२) इति।

मरणनिमित्तमस्पृश्यत्वं सर्वेषां सपिण्डानां समानम्। जनननिमित्तमस्पृश्यत्वं तु मातापित्रोरेव। तत्रापि दशरात्रमस्पृश्यत्वं मातुरेव। पिता तु स्नानात् स्पृश्यो भवति, कर्म्मार्हस्तु दशरात्रानन्तरमेवेत्यर्थः। अयमर्थः संवर्त्तेन स्पष्टीकृतः—

जाते पुत्रे पितुः स्नानं सचैलं तु विधीयते ।
माता शुध्येद्दशाहेन स्नानात्तु स्पर्शनं पितुः ॥ इति ।

अयं सूतकमृतकाद्याशौचप्रकारः केवलं स्मृतिबोधित एवेति मन्तव्यम् । वेदेऽपि प्रख्यातत्वात् । तथा चैतरेयब्राह्मणे श्रूयते— दाहुर्यदाहिताग्निः सूतकान्नं प्राश्नीयात् का तत्र प्रायश्चित्तिः' :० ब्रा० ७ । ६ ) इत्यादि ।

अथ नामकरणम् । तच्च जन्मत एकादशे द्वादशे वा दिवसे यत्र सुदिने वापि कार्यम् । यदाह मनुः—

नामधेयं दशम्यां तु द्वादश्यां वाऽस्य कारयेत् ।
पुण्ये तिथौ मुहूर्त्ते वा नक्षत्रे वा गुणान्विते ॥
( मनु० २ । ३० ) इति ।

कीदृशं नाम विदध्यादित्यपेक्षिते मनुनोक्तम्—

माङ्गल्यं ब्राह्मणस्य स्यात् क्षत्रियस्य बलान्वितम् ।
वैश्यस्य धनसंयुक्तं शूद्रस्य तु जुगुप्सितम् ॥
शर्मवद्ब्राह्मणस्य स्याद्राज्ञो रक्षासमन्वितम् ।
वैश्यस्य पुष्टिसंयुक्तं शूद्रस्य प्रेष्यसंयुतम् ॥
स्त्रीणां सुखोद्यमक्रूरं विस्पष्टार्थं मनोहरम् ॥
( मनु० २ । ३१—३३ ) इति ।

तथा आश्वलायनगृह्यसूत्रेऽप्युक्तम्—'नाम चास्मै दद्युर्घोषवदातरन्तस्थमभिनिष्ठानान्तं द्व्यक्षरं चतुरक्षरं वा । द्व्यक्षरं प्रतिष्ठाम श्चतुरक्षरं ब्रह्मवर्चसकामः । युग्मानि त्वेव पुंसाम्, अयुजानि णाम्' ( आश्व० गृ० १ । १५ । ४—६ ) इति । एवं च ब्राह्मणत्रियविशां यथायथं भद्रशर्म्मा बलवर्म्मा वसुभूतिरिति, शूद्रस्य दीनदास इति, स्त्रीणां च यशोदेव्येवमादीनि नामानि स्वस्वगृह्योवेधिना कार्याणि ।

चतुर्थे मासि कर्त्तव्यं शिशोर्निष्क्रमणं गृहात् ।
षष्ठेऽन्नप्राशनं मासि यद्वेष्टं मङ्गलं कुले ॥ ( मनु० २ । ३४ ) ।

चतुर्थषष्ठयोर्म्मासयोर्निष्क्रमणान्नप्राशने कार्ये ।

अथ प्रथमे द्वितीये तृतीये पञ्चमे वा वर्षे उपनीत्या सह वा ाकुलाचारं चौलं कार्यम् । चूडा शिखेत्युभौ पर्यायौ । तदर्थं र्म चौडम् । चौलमिति डकारस्थाने लकारोच्चारणं पाक्षिकं कसम्प्रदायात् । 'रिक्तो वा एषोऽनपिहितो यन्मुण्डस्तस्यैतदपिनं यच्छिखेति' श्रुतिवचनेन, तथा 'यत्र बाणाः सम्पतन्ति

कुमारा विशिखा इव' ( ऋ० ६ । ७५ । १७ ) इति मन्त्रलिङ्गेन च सशिखमशिखं वा वपनमिति पक्षद्वयं लभ्यते। तच्च शाखाभेदेन व्यवस्थितम् । आपस्तम्बस्तु—'तूष्णीं केशान् विनीय यथर्षि शिखा निदधाति' इत्याह । यथर्षीत्यस्य प्रवरसंख्ययेत्यर्थः। तत्र या मध्ये शिरसि चूडा स्थाप्यते तां वर्जयित्वाऽन्यासां वपनमुपनयनकाले भवतीत्याहुः।

अथोपनयनम्। तच्चाचार्यसमीपे नयनपूर्वकं बटोर्गायत्रीसम्बन्धकरणम्। इदं द्वितीयं जन्मेति व्यपदिशन्ति। यदाह मनुः—

मातुरग्रेऽधिजननं द्वितीयं मौञ्जिबन्धने।
तृतीयं यज्ञदीक्षायां द्विजस्य श्रुतिचोदनात्॥
तत्र यद्ब्रह्मजन्मास्य मौञ्जिबन्धनचिह्नितम्।
तत्रास्य माता सावित्री पिता त्वाचार्य उच्यते॥

( मनु० २ । १६९—१७० ) इति।

उपनयनकालश्चाश्वलायनगृह्ये उक्तः । 'अष्टमे वर्षे ब्राह्मणमुपनयेद्गर्भाष्टमे वा। एकादशे क्षत्रियम्। द्वादशे वैश्यम्। आ षोडशाद्ब्राह्मणस्यानतीतः कालः, आ द्वाविंशात् क्षत्रियस्या चतुर्विंशाद्वैश्यस्य। अत ऊर्ध्वं पतितसावित्रीका भवन्ति, नैनानुपनयेन्नाध्यापयेन्न याजयेन्नैभिर्व्यवहरेयुः' ( आश्व० गृ० १ । १९ । १—७ ) इति । ब्राह्मणादीनामुपनयनकालस्य परमावधिः षोडशवर्षादिरूपस्तस्याप्यतिपाते संस्कारहीनानां तेषामसंव्यवहार्यतापातात् पतितत्वमापद्यते। अथ ते यदि व्रात्यस्तोमाख्यं क्रतुविशेषं कुर्युस्तर्हि सावित्रीदानयोग्या भवेयुः। यदाह याज्ञवल्क्यः—

अत ऊर्ध्वं पतन्त्येते सर्वधर्मबहिष्कृताः।
सावित्रीपतिता व्रात्या व्रात्यस्तोमादृते क्रतोः॥

( या० स्मृ० १ । ३८ ) इति।

ब्राह्मणक्षत्रियविशां बटवो यथाक्रम कृष्णमृगरुरुबस्तचर्माणि[1] उत्तरीयाणि वसीरन्। किंच मुञ्जमयीं त्रिगुणवर्तितां सुखस्पर्शां मेखलाम्[2], कार्पासतन्तुमयं[3] त्रिवृदेकग्रन्थियुतं यज्ञोपवीतम्,

१ यदाह मनुः—'कार्ष्णरौरवबास्तानि चर्माणि ब्रह्मचारिणाम्। वसीरन्नानुपूर्व्येण शाणक्षौमाविकानि च॥' इति । २ यदाह मनुः—'मौञ्जी त्रिवृत् समा श्लक्ष्णा कार्या विप्रस्य मेखला। क्षत्रियस्य तु मौर्वी ज्या वैश्यस्य शणतान्तवी॥' इति । ३ यदाह मनुः—'कार्पासमुपवीतं स्याद् विप्रस्योर्द्ध्ववृतं त्रिवृत्। शणसूत्रमयं राज्ञो वैश्यस्याविकसूत्रजम्॥' इति।

पालाशं बैल्वं वा केशान्तप्रमाणमव्रणमृजुं दण्डं च ब्राह्मणबटुर्धारयेत्। तथा क्षत्रियबटुर्धनुर्ज्यानिर्मितां मेखलां, शणसूत्रमयं यज्ञोपवीतं, वाटं खादिरं वा ललाटसंमितं दण्डं च धारयेत्। एवं वैश्यबटुः शणसूत्रमयीं मेखलां, मेषलोमनिर्मितं यज्ञोपवीतं, पैलवमौदुम्बरं वा नासासंमितं दण्डं च धारयेत्। मेखलामजिनं दण्डमुपवीतं च धृतवन्तं प्राप्तसावित्र्युपदेशं बटुमाचार्यो ब्रह्मचर्यमुपदिशेत्। यथा ब्रह्मचार्यसि सन्ध्योपासनादि कुरु, दिवा मा स्वाप्सीः, आचार्याधीनो वेदमधीष्वेत्यादि। यथाचार्योपदिष्टं ब्रह्मचर्यं द्वादश वर्षाणि वेदग्रहणान्तं वा धारयेत्। सायं प्रातः समिधमग्नावादध्यात्। सायं प्रातर्भिक्षेत। भवत्पूर्वं चरेद्भैक्षं ब्राह्मणो, भवन्मध्यं राजन्यो, भवदन्तं वैश्यः। तद्यथा भवान् भिक्षां ददातु, भिक्षां भवान् ददातु, भिक्षां ददातु भवानिति। यदि स्त्रियं प्रति भिक्षां याचेत तदा भवानित्यस्य स्थाने भवतीपदं प्रयोक्तव्यम्। यदा तु ददात्वित्यस्य स्थाने देहीति प्रयुज्यते तदा भवच्छब्दस्य भवतीशब्दस्य वा सम्बोधनपदं प्रयोक्तव्यम्।

मातरं वा स्वसारं वा मातुर्वा भगिनीं निजाम्।
भिक्षेत प्रथमं भिक्षां या चैनं नावमानयेत्॥ ( मनु० २।५० )

भैक्षं समाहृत्य गुरवे निवेद्यापोशनपूर्वकं सत्कृत्य भिक्षान्नमकुत्सयन् भुञ्जीत।

उपनीतं शिष्यमाचार्यः प्रथमतः शौचाचारमग्निकार्यं सन्ध्योपासनं च शिक्षयेत्। ततः साङ्गान् सरहस्यान् वेदान्। अध्येष्यमाणः शिष्यो गुरोः पादौ व्यस्ताभ्यां पाणिभ्यां संस्पृश्य दक्षिणत उपविश्य ब्रह्माञ्जलिं विधाय गुरुणा 'अधीष्व भोः' इत्युक्ते आदौ प्रणवमुच्चार्य यथोपदिशेद् गुरुस्तथाऽभ्यस्येत्। द्विजातीनां हि वेदाभ्यासः सकलपुरुषार्थसाधक इति वैदिकः सिद्धान्तः। धर्मार्थकाममोक्षाख्यश्चतुर्विधोऽपि पुरुषार्थः पावमान नाभानेदिष्ठ पुरुषसूक्तप्रभृतीनां जपहोमाद्यनुष्ठानेन भवतीति शौनकेन ऋग्विधाने।

यः पावमानीरध्येति पूतात्मा विजितेन्द्रियः।
तस्य कामदुघा भूत्वा उपतिष्ठन्ति धेनवः॥

इत्यादिनोक्तम्। किंच वेदाभ्यासेन सुब्राह्मणत्वम्, अन्यथा तु शूद्रप्रायता भवति। यदाह मनुः—

वेदमेव सदाभ्यस्येत् तपस्तप्स्यन् द्विजोत्तमः।
वेदाभ्यासो हि विप्रस्य तपः परमिहोच्यते॥
योऽनधीत्य द्विजो वेदानन्यत्र कुरुते श्रमम्।

स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥

( मनु० २ । १६६, १६८ ) इति ।

अन्यत्रापि स्मर्यते—

जन्मना जायते शूद्रः संस्कारात् द्विज उच्यते ।
वेदाभ्यासाद्भवेद्विप्रो ब्रह्म जानाति ब्राह्मणः ॥ इति ।

ब्राह्मणकुले जन्मनोत्पत्तिमात्रेण शूद्रः शूद्रकल्पो जायते । असंस्कृतस्य शौचाचाराद्यभावादिति भावः । गौर्वाहीक इत्यादाविवात्र वाक्ये गौण्या वृत्त्या 'शूद्र' शब्दप्रयोगः । यद्वा अशूद्र इति च्छेदः । एवमपि पूर्वोक्त एवार्थः फलति । 'नञिवयुक्तमन्यसदृशाधिकरणे लोके तथा ह्यर्थगतिरिति न्यायात् । संस्कारादुपनयनाख्यात् द्विज उच्यते । तस्य द्वितीयजन्मस्थानीयत्वात् । तथा चोवाच याज्ञवल्क्यः—

मातुर्यदग्रे जायन्ते द्वितीयं मौञ्जिबन्धनात् ।
ब्राह्मणक्षत्रियविशस्तस्मादेते द्विजाः स्मृताः ॥

( या० स्मृ० १ । ३९ ) इति ।

ब्रह्म वेदं यो जानात्यर्थतः शब्दतश्चाधिगच्छति स ब्राह्मण इत्यर्थः । नैरुक्तग्रन्थे यास्कमुनिना वेदार्थमजानतामुपहासः श्रुतिवाक्यत उपदर्शितः—

---

१ 'वृत्त्या शूद्रसमो ज्ञेयः' इति वसिष्ठबौधायनोक्तेः । 'वृत्त्या शूद्रसमास्तावद्विज्ञेयास्ते विचक्षणैः । यावद् वेदे न जायन्ते द्विजा ज्ञेयास्ततः परम् ॥' इति (१ । ८) शङ्खस्मृतेः । 'जन्मना ब्राह्मणो ज्ञेयः संस्काराद् द्विज उच्यते । विद्यया याति विप्रत्वं श्रोत्रियस्त्रिभिरेव च'॥ (१३८) इत्यत्रिस्मृतेः। 'जातमात्रः शिशुस्तावद् यावदष्टौ समा वयः। स हि गर्भसमो ज्ञेयो व्यक्तिमात्रप्रदर्शितः॥४॥ भक्ष्याभक्ष्ये तथाऽपेये वाच्यावाच्ये ऋतानृते । अस्मिन् काले न दोषः स्याद् यावद् वेदे न जायते ॥ ५ ॥ उपनीते तु दोषोऽस्ति क्रियमाणैर्विगर्हितैः । अप्राप्तव्यवहारोऽसौ बालः षोडशवार्षिकः ॥ ६ ॥ इति दक्षस्मृतेश्च । यथाश्रुते शूद्रस्यापि संस्कारैर्द्विजत्वापत्तिः । विश्वामित्रगाधिकुशिकानां विश्वामित्रतपसा ऋषित्वमेव जातम्, न तु ब्राह्मणत्वम् 'त्रीणि यस्यावदातानि योनिर्विद्या च कर्म च । एतच्छिवे विजानीहि ब्राह्मणाग्रयस्य लक्षणम् ॥' 'तपः श्रुतं च योनिश्चेत्येतद् ब्राह्मणकारकम् । तपःश्रुताभ्यां यो हीनो जातिब्राह्मण एव सः ॥' इति भगवत्पतञ्जलिधृतस्मृतेः योनिमन्तरा ब्राह्मण्याप्राप्तेः । क्वापि ब्रह्मर्षिपदप्रयोगस्तु 'ब्रह्मण ऋषिः' 'मन्त्राणामृषिः' इत्येवं राजर्षित्वेऽपि न विरुध्यते । यद्वा सर्वथा स्वतन्त्रेऽमात्ये राजपदप्रयोगवदिति दाधिमथाः ।

स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम्।
योऽर्थज्ञ इत् सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा ॥
( नि० १ । १८ ) इति । तदेतदृचाप्युक्तम्—

उत त्वः पश्यन् न ददर्श वाचमुत त्वः शृण्वन् न शृणोत्येनाम्।
उतो त्वस्मै तन्वं वि सस्रे जायेव पत्य उशती सुवासाः॥ ( ऋ० १० । ७१ । ४ ) इति ।

अत्र त्व इत्यदन्तं सर्वनाम प्रातिपदिकमन्यार्थकम् । उतेति निपातोऽप्यर्थकः। एवं च अन्यः कश्चित् पश्यन्नपि वाचं न ददर्श । अन्यः खलु शृण्वन्नप्येनां वाचं वेदलक्षणां न शृणोतीत्यर्थः । इदमर्द्धर्चमविद्वांसं निदर्शयति । अत्र वाचो दर्शनं लेखदशायां नोच्चार्यमाणतादशायामित्यास्थेयम् । अन्यथा वाचश्चाक्षुषविषयत्वानर्हत्वेन दृशिकर्म्मत्वानुपपत्तेः । एवं चाविदुषा लेखरूपेण दृष्टाऽपि वागदृष्टप्रायैव । वाचनाभावात् । यदि कदापि परेणोच्चारिता वाक् श्रुताप्यश्रुतैव । अर्थज्ञानाभावादिति भावः । एतेन वेदकालेऽपि लिपिसद्भावोऽवगम्यत इति प्रपञ्चितं प्रथमप्रकाशे । उत्तरेण त्वर्द्धर्चेन विद्वान् प्रशस्यते । तदित्थम् । त्वस्मै अन्यस्मै विदुषे तन्वं शब्दार्थोभयात्मिकां निजतनूं विसस्रे प्रकाशयति । इयं वागिति शेषः । उशती कामयमाना सुवासाः शोभनवस्त्रादिभूषिता जाया इव पत्ये। यथा कुलवधूः स्वभर्त्रे सकलं निजकौशलमाविष्करोति, इतरं प्रति तु गोपायति तथेयं वागपि विद्वांसं प्रति समाचरतीति भावः। तस्मादविद्वत्तया परिहासविषया मा भूमेति मनसि निधाय प्रयोजनान्तरनैरपेक्ष्येण विप्रा वेदाभ्यासं कुर्युरित्यावेदयति प्रकृत ऋङ्मन्त्र इति ध्येयम् । 'ब्राह्मणेन निष्कारणो धर्म्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च (महाभा० पस्पशा०) इति स्पष्टमेवामुमर्थमागमोऽवगमयति। ब्राह्मणेन षडङ्गवेदस्यार्थज्ञानसहितमध्ययनं कर्त्तव्यमयं तस्य निष्कारणो दृष्टप्रयोजननिरपेक्षो धर्म्म इति तदर्थः ।

अध्ययनं विचारोऽभ्यसनं जपोऽध्यापनं चेति भेदात् पञ्चधा वेदाभ्यासो भवति । तथा च शौनकेन स्मर्यते—

वेदस्वीकरणं पूर्वं विचारोऽभ्यसनं जपः ।
तद्दानं चैव शिष्येभ्यो वेदाभ्यासो हि पञ्चधा ॥ इति ।

अध्यापनप्रकारोऽपि तेन प्रोक्तः ।

पारायणं वर्त्तयेद्ब्रह्मचारी गुरुः शिष्येभ्यः समनुव्रतेभ्यः ।
अध्यासीनो दिशमेकां प्रशस्तां प्राचीमुदीचीमपराजितां वा ॥

एकः श्रोता दक्षिणतो निषीदेत् द्वौ वा भूयांसस्तु यथाऽवकाशम्॥ ( ऋ० प्रा० १५ । १—३ ) इत्यादि।

अपराजितां प्रागुदीचीम् । ईशानीमिति यावत् । दक्षिणतो गुरोर्दक्षिणपार्श्वे । भूयांसस्तु शिष्या यथावकाशं निषीदेयुर्न तत्र गुरोर्दक्षिणत एवेति नियम इति भावः।

सति सम्भवे यावद् विद्याग्रहणं द्विजाग्र्यादेव कर्त्तव्यम्। आपदि तूच्यते मनुना—

श्रद्दधानः शुभां विद्यामाददीतावरादपि।
अन्त्यादपि परं धर्म्मं स्त्रीरत्नं दुष्कुलादपि॥
विषादप्यमृतं ग्राह्यं बालादपि सुभाषितम्।
अमित्रादपि सद्वृत्तममेध्यादपि काञ्चनम्॥
स्त्रियो रत्नान्यथो विद्या धर्म्मः शौचं सुभाषितम्।
विविधानि च शिल्पानि समादेयानि सर्वतः॥
( मनु० २। २३८—२४० ) इति।

वेदाध्ययनं कुर्वन् शिष्यो ब्रह्मचारिधर्म्मान् पालयेत् । यदाह मनुः—

सेवेतेमांस्तु नियमान् ब्रह्मचारी गुरौ वसन्।
संनियम्येन्द्रियग्रामं तपोवृद्ध्यर्थमात्मनः॥
नित्यं स्नात्वा शुचिः कुर्याद्देवर्षिपितृतर्पणम्।
देवताभ्यर्चनं चैव समिदाधानमेव च॥
वर्जयेन्मधु मांसं च गन्धमाल्यं रसान् स्त्रियः॥
( मनु० २। १७५—१७७ ) इत्यादि।

स चायं ब्रह्मचारी द्विविधः। नैष्ठिक[1] उपकुर्वाणश्चेति भेदात्।

---

१ स्त्री चेत् नैष्ठिकी=ब्रह्मवादिनी, उपकुर्वाणा=सद्योवधूश्चेति भेदद्वयमवसेयम्। 'स्त्री चाविशेषात्' इति कात्यायनश्रौतसूत्रेण 'जातिं तु बादरायणोऽविशेषात् तस्मात्स्त्र्यपि प्रतीयेत जात्यर्थस्याविशिष्टत्वात्' ( ६। १। ८ ) इति पूर्वमीमांसायां जैमिनीयसूत्रेण च स्त्रीपुंसयोर्विशेषाभावस्य स्पष्टमभिहितत्वात्। एतदधिकरणस्य स्वरसो यथा 'अष्टवर्षं ब्राह्मणमुपनयीत' इत्यत्र प्रतिभाति न तथा 'स्वर्गकामो यजेत' इत्यत्र, ब्राह्मणशब्दस्यैव जातिवाचकत्वात् स्वर्गकामपदस्य क्रियावाचकत्वेन जातिवाचकत्वाभावस्य स्पष्टतरं प्रतीयमानत्वाद्। उपलक्षणतयास्योदाहरणत्वेऽपि साक्षाज्जातिवाचकस्योदाहरणत्वाभावे बीजाभावात्। अनुपनीतानामनधीतवेदानां स्वर्गसाधकयागे मन्त्रोच्चारणसाधनकेऽधिकारकथनस्य व्यर्थत्वाच्च। मन्त्रोच्चारणे प्रतिनिधिकल्पने सर्वस्मिन्

तत्र यो गुरुकुलाधीनः सन् यावज्जीवमखण्डितं ब्रह्मचर्यव्रतं पालयति स नैष्ठिक इत्युच्यते। तदुक्तं याज्ञवल्क्येन—

नैष्ठिको ब्रह्मचारी तु वसेदाचार्यसन्निधौ।
तदभावेऽस्य तनये पत्न्यां वैश्वानरेऽपि वा॥

(या० स्मृ० १।४९) इति।

उक्तेन प्रकारेणात्मानं निष्ठामुत्क्रान्तिकालं नयतीति नैष्ठिकः स यावज्जीवमाचार्यसमीपे वसेत् न तु वेदग्रहणानन्तरं स्वतन्त्रो भवेत् इत्यादिस्तदर्थः। नैष्ठिकस्य ब्रह्मचारिणो ब्रह्मलोकावाप्तिरिति स्पष्टं मन्वादिभिः स्मृतम्। यस्तु गार्हस्थ्यमिच्छन् विद्याप्रदं गुरुं तदभीष्टदक्षिणाप्रदानेनोपकुरुते स उपकुर्वाण इत्युच्यते।

षट्त्रिंशद्वाष्टादश वा नव वा वर्षाणि साङ्गवेदत्रयाभ्यासं ब्रह्मचारी कुर्यात्। तत्र प्रतिवेदं द्वादश वा षड् वा त्रीणि वा वर्षाण्यध्ययनकालः। यद्वा प्रोक्तकालावधेरूर्ध्वमधो वा यावता वेदा ग्रहीतुं शक्यन्ते तावत्कालं वेदब्रह्मचर्यं चरेत्। एवं स्वशक्त्यनुसारेण वेद-

---

यागकर्मण्यपि प्रतिनिधिकल्पने लाघवात् अधिकरणस्यैव वैयर्थ्यता(?)पातात्। अत एव 'न शूद्रसमाः स्त्रियः' 'नहि शूद्रयोनौ ब्राह्मणक्षत्रियवैश्या जायन्ते' 'तस्माच्छन्दसा स्त्रियः संस्कार्याः' 'द्विविधाः ब्रह्मवादिन्यः सद्योवध्वश्च। तत्र ब्रह्मवादिनीनामुपनयनमग्नीन्धनं वेदाध्ययनं स्वगृहे भिक्षाचर्या' इति। सद्योवधूनां तूपस्थिते विवाहे कथंचिदुपनयनं कृत्वा विवाहः कार्यः। हारीतस्मृतिः (२१। २०–२४) पराशरमाधवीये निर्णयसिन्धौ च समुपलभ्यते। तत्र ब्रह्मवादिनीनां पितृगोत्रप्रवरवेदशाखानामेव यावज्जीवं सत्त्वात् ताः 'पिता पितामहो भ्राता नैनामध्यापयेत् परः' इति यमवाक्यानुसारेणैत एवाध्यापयेयुः स्वशाखावेदम्। सद्योवधूनां तु पतिगोत्रप्रवरवेदशाखानां जनयिष्यमाणत्वेन 'पिता पितामहो भ्राता वेदातिरिक्तं पाठयेयुः। वेदं तु पाणिग्राह एव 'वैवाहिको विधिः स्त्रीणां संस्कारो वैदिकः स्मृतः।' इत्येतदुक्त्वा 'एष प्रोक्तो द्विजातीनामौपनायानको विधिः।' इत्युपसंहारेण विवाहात्प्राक् पाणिग्राहसंमेलनस्याशक्यत्वात्पाणिग्राहागमनोत्तरं 'प्रावृतां यज्ञोपवीतिनीमभ्युदानयन् जपेत्—सोमो ददद् गन्धर्वाय' इति गोभिलगृह्यानुसारेण उपनयनं कृत्वा पाठयेत् स्वशाखावेदम्। 'पतिरेको गुरुः स्त्रीणाम्' इत्यत्रोपात्तः पतिशब्दो रक्षकपर एव, न पाणिग्राहपरः ब्रह्मवादिनीनां पाणिग्राहस्यासंभवात्। इति सिद्धान्तितं जैमिनीयन्यायमालाविस्तर–निर्णयसिन्धु–सिद्धान्तकौमुदी–ऋक्सूक्तटिप्पणीषु। इति दाधिमथाः।

त्रयं वेदद्वयमेकं वा वेदमधीत्य गुरवे दक्षिणां दत्त्वा स्नायात्। अशक्तौ तु गुर्वनुज्ञयाऽदत्तदक्षिणोऽपि स्नात्वा स्वगृह्योक्तप्रकारेण समावर्त्तनं कुर्यात्।

अथ विवाहः। स च लक्षणान्वितया यवीयस्या सवर्णया दर्शनीयकन्यया सह कर्त्तव्यः। यदाह याज्ञवल्क्यः—

अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत्।
अनन्यपूर्विकां कान्तामसपिण्डां यवीयसीम्॥
अरोगिणीं भ्रातृमतीमसमानार्षगोत्रजाम्॥ (या० स्मृ० १। ५२—५३) इति। अविप्लुतब्रह्मचर्योऽस्खलितब्रह्मचर्यः। लक्षण्यां बाह्याभ्यन्तरलक्षणैर्युक्ताम्। स्त्रियमिति नपुंसकत्वनिवृत्तये स्त्रीत्वेन परीक्षिताम्। अनन्यपूर्विकां दानेनोपभोगेन वा पुरुषान्तरापरिगृहीताम्। कान्तां कमनीयाम्, वोढुर्मनोनयनानन्दकारिणीम्। असपिण्डां समान एकः पिण्डो देहो यस्याः सा तादृशी न भवतीत्यसपिण्डा ताम्। सपिण्डता चैकशरीरान्वयेन भवति। तथाहि-पुत्रस्य पितृशरीरान्वयेन पित्रा सह सपिण्डता। एवं पितामहादिभिरपि पितृद्वारेण। तथा पुत्रस्य मातृशरीरान्वयेन मात्रा सहैकपिण्डता। मातामहादिभिरपि मातृद्वारा। तथा मातृष्वसृमातुलादिभिरपि स्वजननीजनकजन्यत्वादिरूपया मातृद्वारा एकशरीरान्वयात्। एवं पितृष्वसृपितृव्यादिभिरपि स्वजनकजनकजन्यत्वरूपया पितृद्वारा एकशरीरान्वयात् सपिण्डता वेदितव्या। तथा पत्या सह पत्न्या एकशरीरारम्भकत्वेनैकशरीरान्वयात् सपिण्डता। एवं भ्रातृभार्याणामपि परस्परमेकशरीरान्वितत्वेन सपिण्डैर्भ्रातृभिः सह एकशरीरारम्भकत्वेन सपिण्डत्वमवगन्तव्यम्। एवं यत्र यत्र सपिण्डशब्दस्तत्र तत्र साक्षात् परम्परया वा एकशरीरान्वयो वेदितव्यः। अवश्यमेकशरीरान्वयेन सापिण्ड्यं वर्णनीयम्। 'आत्मा हि जज्ञे आत्मनः' इति 'प्रजामनुप्रजायसे' इत्यादिश्रुतेः। तथा गर्भोपनिषदि 'एतत् षाट्कौशिकं शरीरं त्रीणि मातृतस्त्रीणि पितृतः। अस्थिस्नायुमज्जानः पितृतः। त्वङ्मांसरुधिराणि मातृतः' इति तत्र तत्र शरीरावयवान्वयप्रतिपादनादिति दिक्। यदत्रैकशरीरा-

१ इदानींतनास्तु तद्दिन एव स्नानसंस्कारमाचरन्ति। तत्र 'त्रिभ्य एव तु वेदेभ्यः पादं पादमदूदुहत्। तदित्यृचोऽस्याः सावित्र्याः परमेष्ठी प्रजापतिः॥ अकारं चाप्युकारं च मकारं च प्रजापतिः। वेदत्रयान्निरदुहद् भूर्भुवः स्वरितीति च॥' इति मनुस्मृतिसंवादेन प्रणवव्याहृतिसावित्रीपाठेनैव वेदत्रयपठनसमाप्तिं मन्यन्ते। इति दाधिमथाः।

न्वयमूलकं सापिण्डत्वं तच्चानादौ संसारे सर्वस्य सर्वेणापि सह यथाकथंचित् संभवतीत्यतिप्रसङ्गवारणायाह याज्ञवल्क्यः—

'पञ्चमात् सप्तमादूर्ध्वं मातृतः पितृतस्तथा' (या० स्मृ० १।५३) इति। मातृतो मातृसन्ताने पञ्चमात् पितृतः पितृसन्ताने सप्तमादूर्ध्वं सापिण्ड्यं निवर्त्तत इति शेषः। तथा च पितृपितामहादयः षट् आत्मा च सप्तमः। किंच पुत्रपौत्रादयः षट् आत्मा च सप्तमः एतावन्त एव परस्परं सपिण्डा भवन्ति नान्ये। सन्तानभेदे तु यतः सन्तान-भेदस्तमादाय गणयेत् यावत्सप्तममिति योजनीयं सर्वत्रेति संक्षेपः। विस्तरस्तु सापिण्ड्यदीपिकादौ द्रष्टव्यः। यवीयसीं[1] न्यूनवयस्काम्। अरोगिणीम् अचिकित्स्यरोगरहिताम्। भ्रातृमतीमित्यनेन विशेषणेन पुत्रिकापुत्रपरिग्रहशङ्का निरस्यते। असमानार्षगोत्रजाम्। ऋषेरिद-मार्षं नाम प्रवर इत्यर्थः। गोत्रं नाम कश्यपादीनामगस्त्याष्टमाना-मृषीणां पौत्रप्रपौत्रादिवंशपरंपरा। एवं च या समानप्रवरजा समानगोत्रजा[2] च न भवति सा असमानार्षगोत्रजा तां तथाविधां कन्यामुद्वहेदित्यर्थः।

---

१ 'युवतितराम्' इत्येव व्याख्यानं युक्ततरम्। न्यूनेऽर्थे ईयसुनोऽदर्शनात्। षोडशवर्षत इति वा आदौ शेषः। लीलावत्यादिग्रन्थेषु षोडशवर्षवयस्काया एवाधिकमूल्यकथनात्। ततो न्यूनाधिकवयस्काया मूल्ये न्यूनत्वकथनात्। तथा च ततो न्यूने वयसि यौवनस्यारोक्ष्यमाणत्वाशया ग्राह्यत्वम्। ततोऽधिके वयसि यौवनपतननिश्चयात्त्याज्यत्वमेवेति भावः। यद्वा 'यवीयस्' शब्दस्य जघन्यज=पश्चाज्जातपर्यायत्वेन फलितार्थकथनमेतत्। वयोन्यूनताया इयत्ता-माह–विष्णुपुराणेऽपि-वर्षैरेकगुणां भार्यामुद्वहेत् त्रिगुणः स्वयम्' (वि० पु० ३, १०, १६) इति। एवं च त्रिगुणस्यैव वरस्य विधानेन चतुर्गुणपञ्चगुणादेर्न विधानम्। एवं चाष्टचत्वारिंशद्वर्षव्रतवतो वरस्य त्रयः (षट्) पञ्चाशद्वर्षवय-स्कत्वस्यैव संभवे कन्याया अष्टादशवर्षीया एव योग्यता। एवं च रजस्वला-परिणयने निषेधवाक्यानामादरे श्रीरामचन्द्रवत्सकलगुणगणालंकृतवरालाभे नैव महतां पूज्यानामाग्रहः। अत एव चतुर्थीकर्मविधानं वीरमित्रोदये—'प्राग् रजोदर्शनाद् भार्यां नेयाद् गत्वा पतत्यधः। व्यर्थीकारेण शुक्रस्य ब्रह्महत्याम-वाप्नुयात्।' इत्याश्वलायनवचनेन प्राग्रजोदर्शनतो गमननिषेधस्य जागरूकत्वेन संगच्छते। इति दाधिमथाः।

२ भिन्नपितृकाणाम् ऋषीणां समाननामत्वेनैव नैक्यम् इति समानगोत्र-त्वाभासेऽपि विवाहे नैव दोषः। अत एव निर्णयसिन्धौ—"द्वौ देवरातौ—एक आङ्गिरसः श्रुत्युक्तः, अन्यो भार्गवः। तयोः कल्पाभेदेऽप्याङ्गिरसेन (तस्य)

देवरातेन (तस्य) जामदग्न्यदेवरातैर्भवत्येव विवाहः" इत्युपसंहृतम्। समाननाम्नामृषीणां भिन्नपितृकत्वे मानं तु—मन्त्रब्राह्मणसर्वानुक्रमणिकादिषु क्वचित् पितृनामोल्लेखाभावः क्वचित् पितृनामोल्लेख एव च। तद्यथा—

| ऋषिनाम | विशेषणम् | ऋ० म० | सूक्तम् |
|---|---|---|---|
| अग्निः | | ८ | १०२ |
| ,, | चाक्षुषः | ९ | १०६ |
| ,, | तापसः | १० | १४१ |
| ,, | पावकः | १० | १४० |
| ,, | सौचीकः | १० | ५१ |
| अत्रिः | | ५ | २७ |
| ,, | सांख्यः | १० | १४३ |
| अम्बरीषः | | ९ | ९८ |
| ,, | वार्षगिरः | १ | १०० |
| अर्चनाना | | ८ | ४२ |
| ,, | आत्रेयः | ५ | ६३ |
| अवत्सारः | | ९ | ५३ |
| ,, | काश्यपः | ५ | ४४ |
| इन्द्रः | | १ | १६५ |
| ,, | मुष्कवान् | १० | ३८ |
| ,, | वैकुण्ठः | १० | ४५ |
| उशना | | ९ | ८७ |
| ,, | काव्यः | ८ | ८४ |
| ऋषभः<br>,, | वैराजः<br>शाक्वरः | १० | १६६ |
| ,, | वैश्वामित्रः | ३ | १३ |
| कक्षीवान् | | ९ | ७४ |
| ,,<br>,, | दैर्घतमसः<br>औशिजः | १ | ११६ |
| कण्वः | | ९ | ९४ |
| ,, | घौरः | १ | ३६ |
| कविः | | ९ | ७५ |
| ,, | भार्गवः | ९ | ४७ |
| कश्यपः | | ९ | ६४ |
| ,, | मारीचः | १ | ९९ |
| कुत्सः | आंगिरसः | १ | ९४ |
| ,, | आप्त्यः | १ | १०५ |
| कुमारः | आग्नेयः | ७ | १०२ |
| कुमारः | आत्रेयः | ५ | २ |
| ,, | यामायनः | १० | १३५ |
| कुशिकः | | ३ | ३१ |
| ,, | सौभरः | १० | १२७ |
| गयः | आत्रेयः | ५ | ९ |
| ,, | प्लातः | १० | ६३ |
| गृत्समदः | | २ | २ |
| ,, | आङ्गिरसः<br>शौनहोत्रः<br>भार्गवः<br>शौनकः | २ | १ |
| गौरवीतिः | | ९ | १०८ |
| ,, | शाक्त्यः | ५ | २० |
| घर्मः | तापसः | १० | ११४ |
| ,, | सौर्यः | १० | १८१ |
| चक्षुः | मानवः | ९ | १०६ |
| ,, | सौर्यः | १० | १५८ |
| च्यवनः | दाधीचः | तांड्यमहाब्राह्मणे | |
| ,, | भार्गवः | १० | १९ |
| जमदग्निः | | ३ | ६२ |
| ,, | भार्गवः | ८ | १०१ |
| त्रसदस्युः | | ९ | ११० |
| ,, | पौरुकुत्स्यः | ४ | ४२ |
| त्रितः | | ९ | ३३ |
| ,, | आप्त्यः | १ | १०५ |

वरगुणानाह यमः—

कुलं च शीलं च वयश्च वित्तं विद्या च रूपं च सनाथता च ।
एतान् गुणान् सप्त परीक्ष्य देया कन्या बुधैः शेषमचिन्तनीयम् ॥ इति ।

आश्वलायनगृह्येऽपि—'कुलमग्रे परीक्षेत मातृतः पितृतश्चेति यथोक्तं पुरस्तात् । बुद्धिमते कन्यां प्रयच्छेद्बुद्धिरूपशीललक्षणसम्पन्नामरोगामुपयच्छेत' (आश्व० गृ० १ । ५ । १-३) इति अत्र वृत्तिकृता नारायणभट्टेनोक्तम्—अग्रवचनं वधूवरगुणेभ्यः कुलमेव प्रधानमिति

| ऋषिनाम | विशेषणम् | ऋग्वेद मण्डल | सू० |
|---|---|---|---|
| दध्यङ् | आङ्गिरसः ( गोपथब्राह्मणे पूर्वं० ५।२१ ) | | |
| ,, | आथर्वणः ( वा० सं० अनुक्रमणिकायाम् ) | | |
| दधीचिः | च्यावनः ( वायुपुराणे ७।९ अध्या० ) | | |
| द्वितः | आप्त्यः | ९ | १०३ |
| ,, | आत्रेयः | ५ | १८ |
| नृमेधः | | ८ | ८९ |
| ,, | भार्गवः | ८ | १०० |
| नोधाः | | ९ | ९३ |
| ,, | गौतमः | १ | ५८ |
| पराशरः | | ९ | ९७ |
| ,, | शाक्त्यः | १ | ६५ |
| पायुः | | १० | ८७ |
| ,, | भारद्वाजः | ६ | ७५ |
| प्रजापतिः | वाच्यः | ९ | ८४ |
| ,, | वैश्वामित्रः | ३ | ३८ |
| प्रतर्दनः | काशिराजः | १० | १७९ |
| ,, | दैवोदासिः | ९ | ९६ |
| प्रियमेधः | आङ्गिरसः | ८ | २ |
| ,, | वासिष्ठः | ८ | ८७ |
| बन्धुः | गौपायनः | १० | ५७ |
| बन्धुः | लौपायनः | ५ | २४ |
| बुधः | आत्रेयः | ५ | १ |
| ,, | सौम्यः | १० | १०१ |
| भरद्वाजः | | ९ | ९७ |
| ,, | बार्हस्पत्यः | ६ | १ |
| भृगुः | स्वयम्भूः ( गोपथब्राह्मणे ) | | |
| ,, | वारुणिः | ९ | ६५ |
| मन्युः | तापसः | १० | ८३ |
| ,, | वासिष्ठः | ९ | ९७ |
| मेधातिथिः | | ८ | २ |
| ,, | काण्वः | १ | १२ |
| मेध्यातिथिः | | ९ | ४१ |
| ,, | काण्वः | ८ | १ |
| यमः | | १० | १४ |
| ,, | वैवस्वतः | १० | १० |
| यमी | | १० | १५४ |
| ,, | वैवस्वती | १० | १० |
| रेणुः | | १० | ८९ |
| ,, | वैश्वामित्रः | ९ | ७० |
| वत्सः | आग्नेयः | १० | १८७ |
| ,, | काण्वः | ८ | ६ |
| ,, | भार्गवः | | |
| वसुक्रः | | १० | २९ |
| ,, | ऐन्द्रः | १० | २७ |
| ,, | वासिष्ठः | ९ | ९७ |

बोधनाय। पुरस्तादिति श्रौतसूत्रे नवमाध्याये दशपेयप्रकरणे इत्यर्थः। यथोक्तमिति। तत्र चेत्थमुक्तम्-'ये मातृतः पितृतश्च दशपुरुषं समनुष्ठितविद्यातपोभ्यां पुण्यैश्च कर्म्मभिर्येषामुभयतो नाब्राह्मण्यम्' (आश्व० श्रौ० ९। ३। २०) इति। विद्यागुणसम्पन्ना मातृकुले पञ्च पितृकुले पञ्च पुरुषा विद्यन्ते तत्कुलं दशपेयप्रकरणे ऋत्विक्स्वीकारायोक्तं सा कुलपरीक्षा कन्यास्वीकाराय वरवरणाय च विवाहप्रकरणेऽप्यनुसन्धेयेति भावः।

वधूवरयोर्विवाहयोग्यं वय उपदिष्टं मनुना—

त्रिंशद्वर्षो वहेत्कन्यां हृद्यां द्वादशवार्षिकीम्।
त्र्यष्टवर्षोऽष्टवर्षां वा धर्म्मे सीदति सत्वरः॥
(मनु० ९।९४) इति।

त्र्यष्टवर्षश्चतुर्विंशतिवर्षः। सत्वर उक्तन्यूनेऽपि वयसि वर्त्तमानो यो विवाहार्थं त्वरावान् भवति स पुमान् धर्म्मे सीदति गार्हस्थ्यधर्म्मे क्लिश्यतीत्यर्थः। एतद्वचनं न प्रोक्तवयस्कैरेवोद्वाहः कर्त्तव्यो नाधि-

| ऋषिनाम | विशेषणम् | ऋग्वेदमण्डलं | सूक्तम् | ऋषि० | विशेष० | ऋग्वेदम० | सूक्तम् |
|---|---|---|---|---|---|---|---|
| विप्रबन्धुः | गौपायनः | १० | ५७ | श्यावाश्वः | आत्रेयः | ५ | ५२ |
| ,, | लौपायनः | ५ | २४ | श्रुतबन्धुः | गौपायनः | १० | ५७ |
| विरूपः | | ८ | ७५ | ,, | लौपायनः | ५ | २४ |
| ,, | आङ्गिरसः | ८ | ४३ | सप्तवध्रिः (?वध्रिः) | | ८ | ७५ |
| विश्वामित्रः | | ३ | २ | ,, | आत्रेयः | ५ | ७३ |
| ,, | गाधिनः | ३ | १ | सुपर्णः | काण्वः | ८ | ५९ |
| वेनः | | १० | १२३ | ,, | तार्क्ष्यपुत्रः | १० | १४४ |
| ,, | भार्गवः | ९ | ८५ | सुबन्धुः | गौपायनः | १० | ५७ |
| शक्तिः | | ७ | ३२ | ,, | लौपायनः | ५ | २४ |
| ,, | वासिष्ठः | ९ | ९७ | सुमित्रः | कौत्सः | १० | १०५ |
| शुनःशेफः | | ९ | ३ | ,, | वाध्र्यश्वः | १० | ५९ |
| ,, | आजीगर्तिः | १ | २४ | हिरण्यस्तूपः | | ९ | ४ |
| श्यावाश्वः | | ८ | ३५ | ,, | आङ्गिरसः | १ | ३१ |

इति। एवं ११३१ शाखानां वेदानामुपलब्धौ अन्येषां ग्रन्थानां चोपलब्धौ सर्वर्षिकाणां भिन्नमूलपुरुषाणां निश्चयो भवेत्। एवं 'शरद्वच्छुनकदर्भाद् भृगु-वत्साग्रायणेषु', 'विकर्ण-शुङ्ग-च्छगलाद् वत्स-भरद्वाजात्रिषु', 'विकर्ण-कुशीतकात्

कवयस्कैरिति नियमार्थम्। किन्तु विवाहयोग्यवयसः प्राप्तिकाल-प्रदर्शनार्थम्। ततश्चाधिकवयस्कानामपि विवाहो न दोषायेति भावः। न्यूनवयस्कानां तु विवाहो धर्म्महानिकर एव। मनुना स्पष्टमेव तथा-भिधानात्।

यत्तु—

> कन्या द्वादशवर्षाणि याऽप्रदत्ता वसेद्गृहे।
> भ्रूणहत्या पितुस्तस्याः सा कन्या वरयेत्स्वयम्॥

इति यमेनोक्तम्। तत्तु असंस्कृतायाः कन्याया रजोदर्शनविषयम्। तथा च देवलात्रिकश्यपाः—

> पितुर्गेहे तु या कन्या रजः पश्यत्यसंस्कृता।
> भ्रूणहत्या पितुस्तस्याः सा कन्या वृषली स्मृता॥
>
> यस्तां समुद्वहेत् कन्यां ब्राह्मणो ज्ञानदुर्बलः।
> अश्राद्धेयमपाङ्क्तेयं तं विद्याद्वृषलीपतिम्॥

इति प्रोचुः।

कन्याया उपनयनस्थाने विवाहसंस्कारस्य विधानात् पुत्रस्याष्टमे वर्षे उपनयनमिव कन्याया अप्यष्टमे वर्षे विवाहः प्रशस्तः। तत आ रजोदर्शनाद्गौणः कालः। यथा पुत्रस्याषोडशवर्षात्। तदुत्तरं तु पुत्रो यथा व्रात्यत्वं गच्छति तथा कन्यापि विवाहसंस्काररहिता रजस्वला चेद्वृषलीत्वं गच्छतीति भावः।

---

काश्यपे', 'कपि-बोधादाङ्गिरसे' इत्यादिस्थले सप्तम्यन्तव्यावर्तनीयानाम् अन्येषामपि सत्त्वस्यावश्यकल्पनीयतया निश्चीयते न ऋषिनामसादृश्यमात्रेण समानगोत्रत्वनिश्चयः। किञ्च गोत्राणामसङ्ख्यत्वस्यैव 'गोत्राणां तु सहस्राणि प्रयुतान्यर्बुदानि च' इत्यनेन सूचितत्वात् सङ्कल्पवरणादावेव तेषां प्राधान्येन ग्रहणात् विवाहोपयोगित्याज्यात्याज्यत्वनिश्चयाय तु देशविशेषे कुलविशेषे च "सिद्धं तु कुलायाभ्यो लोके गोत्राभिमताभ्यः" इति भरद्वाजवचनेन परस्सहस्रवर्षप्रचरितेन-कुलाख्यानामेव गोत्रत्वेन व्यवहारः स्वीक्रियते। 'येनास्य पितरो याता येन याताः पितामहाः। तेन यायात् सतां मार्गं तेन गच्छन्न रिष्यति॥ यस्तु देशानुरूपेण कुलमार्गेण चोद्वहेत्। नित्यसंव्यवहार्यः स्याद् वेदाच्चैतत् प्रतीयते॥' इति स्मृत्या "मा नः पथः पिञ्यात् परावत" इति श्रुतिमूलिकया दोषाभावसूचनात्।

विवाहकाल उक्तो गृह्यसूत्रे आश्वलायनेन—'उदगयन[1] आपूर्यमाण[2]-पक्षे कल्याणे नक्षत्रे चौलकर्मोपनयनविवाहाः। सार्वकालमेके विवाहम्' ( आश्व० गृ० १।४।१-२ ) इति ॥ आपूर्यमाणपक्षः शुक्लपक्षः। सार्वकालमिति तु गान्धर्वादिजघन्यविवाहपरम्।

विवाहस्य सन्त्यष्टौ भेदाः। यदाह मनुः—

ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथाऽऽसुरः।
गान्धर्वो राक्षसश्चैव पैशाचश्चाष्टमोऽधमः॥
( मनु० ३।२१ ) इति।

तत्र विद्याशीलवन्तमयाचितारं वरमाहूय वस्त्रालङ्कारादिभिरभ्यर्च्य तस्मै वस्त्राभरणभूषितां कन्यामुदकपूर्वां प्रयच्छेदेष ब्राह्मो विवाहः। ज्योतिष्टोमादियज्ञे ऋत्विक्कर्म कुर्वते यदलङ्कृत्य कन्या प्रदीयते स दैवः। एकं द्वे वा गोमिथुने यागादिसिद्धये कन्यायै दातुमेव वा न तु शुल्कबुद्ध्या वराद्गृहीत्वा यथाविधि यत्कन्या प्रदीयते स आर्षो विवाहः। सह युवां धर्म्मं चरतमिति सुताप्रदानकाले पूर्वमेव वचसा परिभाष्य यत्कन्या प्रदीयते स प्राजापत्यः। कन्यायै तत्पित्रादिभ्यश्च यथाशक्ति धनं दत्त्वा यत्कन्या स्वीक्रियते स आसुरः। वधूवरयोरन्योन्यानुरागेण यः परस्परसंयोगः स गान्धर्वः। कन्यायाः पित्रादीन् हत्वा तेषामङ्गानि वा छित्वा भित्त्वा वा यत् प्रसह्य कन्याहरणं स राक्षसो विवाहः। सुप्तां मद्यमदविह्वलां दुःशीलां वा रहसि यत्रोपगच्छति स पैशाचोऽधमो विवाहः।

---

१ धनुर्मकरसन्धौ देवानां निशीथकालत्वेन तत आरभ्यैव मार्तण्ड+आरोहण ( A. M. ) प्रवृत्तेः, उदगयनसमाप्तौ दक्षिणायनप्रारम्भतो मार्तण्ड+पतन ( P. M. ) प्रवृत्तेः पतनापेक्षया रोहणस्यैव मङ्गलरूपत्वेन तत्कालस्यैव मङ्गलकृत्ये ग्रहणम्।

२ पूर्णमास्यन्त एव चन्द्रलोकवासिनां पितृणां निशीथकालत्वेन तत आरभ्यैव पितृलोके मार्तण्ड+आरोहण ( A. M. ) स्य प्रवृत्तेः अमावास्यान्ते मध्याह्नत आरभ्य पितृणां मार्तण्ड+पतन ( P. M. ) स्य प्रवृत्तेः शुक्लपक्ष एव मार्तण्डारोहणकालत्वेन मङ्गलकृत्यं विदधते। A. M., P. M. पदयोरुक्तमर्थमजानानाः अन्यथैवार्थमुपदिशन्तः पाश्चात्याः पश्चाद्बुद्धय एवेति बोध्यम्। एवं लङ्कानगर्यां निशीथ एव मार्तण्ड-पतन ( P. M. ) समाप्तौ मार्तण्ड+आरोहण ( A. M. ) प्रारम्भोऽस्मद्देशे। इति दाधिमथाः।

एष्वष्टस्वपि विवाहेषु राक्षसपैशाचौ वर्जयित्वा षड् विवाहा ब्राह्मणस्याऽभ्यनुज्ञाताः। तत्राद्याश्चत्वारः प्रशस्ता इतरौ द्वौ जघन्यौ। क्षत्रियवृत्त्यवस्थितस्य ब्राह्मणस्य राक्षसो विवाहोऽपि जघन्यत्वेनोक्तः। क्षत्रियस्य तु प्राजापत्यगान्धर्वराक्षसाः प्रशस्ताः। वैश्यस्य प्राजापत्यगान्धर्वासुराः प्रशस्ताः। राक्षसो जघन्यः। वैश्यवदेव शूद्रस्यापि ज्ञेयम्। पैशाचस्तु सर्वेषां वर्णानां सर्वथा निषिद्ध एवेति। स्पष्टं चेदं सर्वं मन्वादिस्मृतिषु।

सवर्णायाः कन्यायाः परिणयनविधौ वरेण वधूपाणेर्ग्रहणं स्वगृह्योक्तविधिना देवाग्निद्विजसन्निधौ क्रियते। असवर्णायास्तु कन्यायाः परिणयने पाणिग्रहणस्थाने शरादिग्रहणं कन्यया क्रियते।

यदाह मनुः—

पाणिग्रहणसंस्कारः सवर्णासूपदिश्यते।
असवर्णास्वयं ज्ञेयो विधिरुद्वाहकर्म्मणि॥
शरः क्षत्रियया ग्राह्यः प्रतोदो वैश्यकन्यया।
वसनस्य दशा ग्राह्या शूद्रयोत्कृष्टवेदने॥

( मनु० ३।४३-४४ ) इति।

ननु—

ययोरेव समं वित्तं ययोरेव समं कुलम्।
तयोर्विवाहो मैत्री च नोत्तमाधमयोः क्वचित्॥

इति महाभारते उक्तत्वाद्ब्राह्मणादीनां क्षत्रियादिकन्याभिः सह विवाहसम्बन्धोऽनुचित इति चेत्सत्यम्। सवर्णकन्याया अलाभे असवर्णापरिणयनस्य केवलं कामार्थत्वेनाभ्यनुज्ञातस्य प्राशस्त्याभावात्। अत एवोक्तं मनुना—

सवर्णाऽग्रे द्विजातीनां प्रशस्ता दारकर्म्मणि।
कामतस्तु प्रवृत्तानामिमाः स्युः क्रमशोऽवराः॥

---

१ क्षत्रिय-वैश्य-शूद्राणां प्रतिग्रहस्य धर्म्मत्वाभावेन ब्राह्मणानामेव प्रतिग्रहस्य धर्म्मत्वेन 'अद्भिरेव द्विजाऽग्र्याणाम्' इत्यत्रैवकारस्य भिन्नक्रमत्वेन 'द्विजाऽग्र्याणामेव अद्भिः कन्याया आदानं प्रशस्यते' इत्यर्थेन 'चतुरो ब्राह्मणस्याद्यान् प्रशस्तान् कवयो विदुः। राक्षसं क्षत्रियस्यैकमासुरं वैश्यशूद्रयोः' इत्यनेन वैश्यशूद्रयोरासुरविवाहस्यैव विधानात् द्रव्यदानपूर्वककन्याग्रहणस्यैव वैश्यशूद्रयोर्धर्मत्वेन सङ्कल्पोच्चारणेनाद्भिः कन्या नैव ग्राह्येति आधुनिकधर्मविप्लवः परिहार्य एवेति दाधिमथाः।

शूद्रैव भार्या शूद्रस्य सा च स्वा च विशः स्मृते।
ते च स्वा चैव राज्ञः स्युस्ताश्च स्वा चाग्रजन्मनः॥
( मनु० ३।१२-१३ ) इति॥

प्रशस्ता। त्रिवर्गौपयिकत्वात्। सा चेति शूद्रा। स्वा चेति वैश्या। इमे द्वे विशो भार्ये स्मृते। ते वैश्याशूद्रे। स्वा क्षत्रिया। इमास्तिस्रो राज्ञः स्युः। ता इति क्षत्रियावैश्याशूद्राः। स्वा ब्राह्मणी। इदमसवर्णपरिणयनमिदानीन्तना आर्यजना न कुर्वन्ति। अस्य विवाहस्य कलौ वर्ज्यत्वेनादित्यपुराणे उक्तत्वात्।

अथ दैवादुक्तलक्षणो वरो न लभ्यते कन्यायाश्च गौणोऽपि विवाहकालोऽतिक्रामति तदा पित्रादिभिः किं विधेयमित्यत्राह मनुः—

काममा मरणात्तिष्ठेद्गृहे कन्यर्त्तुमत्यपि।
न चैवैनां प्रयच्छेत गुणहीनाय कर्हिचित्॥
( मनु० ९।८९ ) इति।

ननु पित्रादिभिरदीयमानाऽपि काचित् कुमारी सञ्जातार्त्तवा मदनवेदनामपारयन्ती कथं कुर्यादिति चेदत्राप्युक्तं मनुना—

त्रीणि वर्षाण्युदीक्षेत कुमार्यृतुमती सती।
ऊर्ध्वं तु कालादेतस्माद्विन्देत सदृशं पतिम्॥
अदीयमाना भर्त्तारमधिगच्छेद्यदि स्वयम्।
नैनः किञ्चिदवाप्नोति न च यं साधिगच्छति॥
( मनु० ९।९०-९१ ) इति।

सा स्वयंवरा कुमारी यं पतिमधिगच्छति सोऽपि न च एनः पापं प्राप्नोतीत्यर्थः। एतेन पूर्वोदाहृतं देवलात्रिकश्यपानां वचनं प्रमादाद्ब्राह्मादिविवाहपरतया वेदितव्यमिति न तद्विरोध आपादनीयः।

अथ प्रसङ्गात्पुनर्विवाहो विचार्यते। तत्र तावत्कन्यालक्षणविचारे याज्ञवल्क्यस्मृतौ 'अनन्यपूर्विकां कान्ताम्' ( या० स्मृ० १।५२ ) इत्युक्तत्वादन्यपूर्विकामपि केचित्कदाचिदुद्वहन्तीति गम्यते। तत्रान्यपूर्विका द्विविधा—

अक्षता च क्षता चैव पुनर्भूः संस्कृता पुनः।
स्वैरिणी या पतिं हित्वा सवर्णं कामतः श्रयेत्॥
(या० स्मृ० १।६७)

इति याज्ञवल्क्योक्तेः । येन केनचित् पुरुषेण सह सञ्जातविवाहसंस्कारदूषिता न तु तेनोपभुक्ता सा हि अक्षतेत्युच्यते । या तु संस्कारात् प्रागेव पुरुषसंयोगदूषिता सा तु क्षतेत्युच्यते । उभे अपि पुनर्विवाहसंस्कृते पुनर्भूत्वं प्रतिपद्येते । या तु पतिं त्यक्त्वा स्वेच्छयान्यं सवर्णं पतिमाश्रयेत् सा स्वैरिणीत्युच्यते । नेयं पुनर्विवाहयोग्या । तत्र सञ्जातविवाहसंस्काराया अक्षतायाः पुनरुद्वाहे पतिपरित्यागो वैधव्यं वा हेतुः । तथा चाह मनुः—

> या पत्या वा परित्यक्ता विधवा वा स्वयेच्छया ।
> उत्पादयेत् पुनर्भूत्वा स पौनर्भव उच्यते ॥
> सा चेदक्षतयोनिः स्याद्गतप्रत्यागतापि वा ।
> पौनर्भवेन भर्त्रा सा पुनः संस्कारमर्हति ॥

( मनु० ९।१७५–१७६ ) इति ।

स्वयेच्छया पुनर्भूत्वा अन्यस्य पुनर्जाया भूत्वा यमुत्पादयेत्स पुत्रः पौनर्भव इति योजना । सा उभयविधापि स्त्री यद्यक्षतयोनिः स्यात् तदा पौनर्भवेन भर्त्रा सह पुनर्विवाहाख्यं संस्कारमर्हति । अपि वा या स्त्री गतप्रत्यागता कौमारं पतिं परित्यज्यान्यमाश्रित्य पुनः प्रत्यागता सती यद्यक्षता भवेत् साऽपि तेन कौमारेण भर्त्रा पुनर्विवाहमर्हति नेतरेणेत्यर्थः । एवं च क्षताया विधवायाः सधवाया वा द्वितीयेन पत्या पुनर्विवाहो न भवतीति मन्वाशयः । यत्तु याज्ञवल्क्यस्मृतौ 'अक्षता च क्षता चे'ति वचनम्, तत्तु संस्कारात् प्रागेव पुरुषसम्बन्धदूषितायाः पुनर्विवाहबोधकं, नतु क्षताया विधवायाः । न चैवमप्यसंस्कृतायास्तादृश्याः क्षतायाः क्रियमाणस्य विवाहस्यापूर्वत्वात् पुनर्विवाहसंस्कारत्वं नोपपद्येतेति वाच्यम् । पुरुषसंयोगमात्ररूपस्य संस्कारस्य पूर्वं जातत्वेन विवक्षणादित्याशयात् । अन्यथा 'सा चेदक्षतयोनिः स्या'दिति मनुवचनेन सह विरोधापाताच्च । अत एव तत्रत्यं क्षतापदं संस्कारात्प्रागेव पुरुषसम्बन्धदूषितेत्येवं रीत्या व्याख्यातं मिताक्षरायां विज्ञानेश्वरेण । अत एव कलिवर्ज्यप्रकरणे बृहन्नारदीये–'दत्ताऽक्षतायाः कन्यायाः पुनर्दानं परस्य चे'त्युक्तम् । यत्तु कलिवर्ज्यप्रकरणे आदित्यपुराणे 'बालायाः क्षतयोन्याऽस्तु वरेणान्येन संस्कृति'रित्युक्तम् । तत्तु अनूढापरम् । बालापदस्वारस्यात् । अन्यथा 'दत्ताया'इत्येव ब्रूयात् ।

स्मृत्यादिषूपलभ्यमानोऽप्ययं विधवापुनर्विवाहः सर्वथा परिवर्जनीय एवाधर्म्मत्वादित्याशयवान्मनुरुवाच—

नोद्वाहिकेषु मन्त्रेषु नियोगः कीर्त्यते क्वचित् ।
न विवाहविधावुक्तं विधवावेदनं पुनः ॥
( मनु० ९।६५ ) इति ।

वंशक्षये समुपस्थिते विधवायां प्रजोत्पादनाय देवरादीनां यो नियोग उपदिश्यते नासौ वैवाहिकेषु मन्त्रेषु क्वचिदपि शाखायां कीर्त्यते । तथा विवाहविधायकेषु वेदमन्त्रेषु विधवायाः पुनर्वेदनम् पुनर्विवाहोऽपि न कीर्त्यते इत्यर्थः । वैवाहिकमन्त्रास्तु—

अर्यमणं नु देवं कन्या अग्निमयक्षत ।
स इमां देवो अर्यमा प्रेतो मुञ्चातु नाऽमुतः ॥
( आश्व० गृ० १।७।१३ )

इत्यादयः । अर्यमाभिधमग्निदेवं कन्या अयक्षत यजति स्म । देवोऽर्यमाग्निरिमां कन्यामितोऽस्माल्लोकात् प्रमुञ्चातु परित्यजतु, परन्तु नामुतो नाऽमुष्माल्लोकादिति हि तदर्थः । एभिर्मन्त्रैः स्वाञ्जलिस्थं लाजद्रव्यं वराऽन्वारब्धा कन्या विवाहाग्नौ जुहोति । अत्र सर्वत्र कन्यापदं श्रूयते । नहि मृतभर्तृका स्त्री कन्यापदवाच्या भवति । किञ्च ।

सोमः प्रथमो विविदे गन्धर्वो विविद उत्तरः ।
तृतीयो अग्निष्टे पतिस्तुरीयस्ते मनुष्यजः ( ?=जाः ) ॥
( ऋ० १०।८५।४० )

इति श्रूयते । वधूं प्रति वरवाक्यमेतत् । स्त्रीणां हि चत्वारः पतयो भवन्ति । तत्र प्रथमः सोमो विविदे लब्धवान् त्वामिति शेषः । उत्तरो द्वितीयो गन्धर्वः । तृतीयस्ते तव पतिरग्निः । चतुर्थः पतिर्मनुष्यजोऽहमिति श्रुत्यर्थः । अयं मन्त्रो विधवापुनर्विवाहे विरुध्येत । मन्त्रोक्तपतिसङ्ख्याबाधप्रसङ्गात् । तथा—

सोमो ददद्गन्धर्वाय गन्धर्वो दददग्नये ।
रयिं च पुत्रांश्चादादग्निर्मह्यमथो इमाम् ॥
( ऋ० १०।८५।४१ )

इत्यनेन ऋङ्मन्त्रेणापि अग्निर्मह्यं मनुष्याय वरायेमां ददातीति बोध्यते । ततश्च यस्मै वरायाग्निना कन्या प्रदत्ता तस्मिन् मृते सञ्जातां

विधवां समुद्वहति परस्मिन् वरे 'अग्निर्मह्यमथो इमामि'ति वाक्यघटितो मन्त्रोऽपार्थकः स्यात् ।[1]

किञ्च विधवायाः पाणिर्ग्रहीतव्य इतरो वा कश्चिदवयवः । नाद्यः । पाणिग्रहणकर्म्मणि प्रयुज्यमाने 'गृभ्णामि ते सौभगत्वाय हस्तम्' ( ऋ० १०।८५।३६ ) इति मन्त्रे 'मह्यं त्वाऽदुर्गार्हपत्याय देवाः' इति श्रवणात् । देवास्त्वा त्वां गार्हपत्याय गार्हपत्यमग्निं परिचरितुम् । 'क्रियार्थोपपदस्य' ( अष्टा० २।३।१४ ) इति चतुर्थी । मह्यमदुर्दत्तवन्त इति तदर्थस्य प्रकृते विरुद्धत्वात् । नान्त्यः । तथाविधार्थप्रतिपादकविधेरभावात् । एवं च वैवाहिकमन्त्राणां विधवाविवाहेऽर्थत एव निवृत्तौ सिद्धायां तत्प्रतिपाद्यपाणिग्रहणादिकर्म्मणामपि निवृत्तौ तस्य धर्म्यविवाहत्वमेव न भवतीति सिध्यति । तदेतत्सर्वमभिसन्धाय मनुनाऽष्टमेऽध्याये स्मर्यते—

पाणिग्रहणिका मन्त्राः कन्यास्वेव प्रतिष्ठिताः ।
नाऽकन्यासु क्वचिन्नृणां लुप्तधर्म्मक्रिया हि ताः ॥
( मनु० ८ । २२६ ) । इति ।

कन्यात्वाभाववत्यो नार्यो लुप्तधर्म्मक्रियाः लुप्ताः धर्म्मक्रियाः स्वकर्मकदानप्रतिग्रहादिरूपाः यासां तास्तथाविधाः हीति निश्चयेनेति तदर्थः । ननु कन्यात्वहानिः केन भवतीत्याकाङ्क्षायां समनन्तरमेव स्मृतं मनुना—

पाणिग्रहणिका मन्त्रा नियतं दारलक्षणम् ।
तेषां निष्ठा तु विज्ञेया विद्वद्भिः सप्तमे पदे ॥
( मनु० ८।२२७ ) इति ।

दारलक्षणं कन्यात्वनाशकभार्यात्वस्य निमित्तम् । तेषां वैवाहिकमन्त्राणां निष्ठा सम्पूर्त्तिः सप्तमे पदे 'सखा सप्तपदी भव सा मामनुव्रता भव' ( आश्व० गृ० १।७।१९ ) इत्यादिमन्त्रेण दत्ते सति विद्वद्भिः शास्त्रज्ञैर्विज्ञेयेति तदर्थः । एवं च सप्तपदीक्रमणात् प्राग् भार्यात्वनि-

---

१ श्रुतौ तु विट्प्रत्ययान्त आकारान्तो मनुष्यजाशब्दः प्रथमाया एकवचने बहुवचने च समान इति 'वेदाः प्रमाणम्' 'गावो धनम्' इत्यत्रेव मनुष्यजाः इति 'बहुवचनान्तमुद्दिश्य तुरीयपतित्वं विधेयम्' इति बहुविवाहवादिशङ्कापनोदनाय डप्रत्ययान्तह्रस्वाकारान्तमनुष्यजशब्द एव ग्रन्थकर्त्रा समाश्रितः। इति दाधिमथाः ।

वस्तुत इयं टिप्पणी पूर्वपृष्ठे समुद्धृतेन 'सोमः प्रथम' इत्यादिमन्त्रगतेन 'मनुष्यज' इति शब्देन संबद्धा बोद्धव्या ( मं० दे० शा० ) ।

ष्पत्त्यभावेन कन्यात्वस्याक्षतत्वात् कदाचित् प्रसङ्गवशाद्भवेत् पुनर्विवाहः परन्तु न तदूर्ध्वमिति सूच्यते ।

अत्र केचिदर्वाञ्चो विधवाविवाहवादिनो वदन्ति-यथा-'तस्मादेकस्य बह्व्यो जाया भवन्ति नैकस्यै बहवः सहपतयः ।' इति श्रुत्या सहपदेन युगपदेकस्या बहुपतिकत्वनिषेधबोधनद्वारा प्रथमपत्युर्नाशादिप्रसङ्गे क्रमेण बहुपतिकत्वं बोध्यत इति । तन्न । तथा तात्पर्यकल्पने मानाभावात् । समनन्तरोदाहृतमनुस्मृतिवाक्यविरोधात् । वैवाहिकैर्वेदमन्त्रैरपि विरोधापाताच्च ।

यत्तु महाभारते आदिपर्वणः पञ्चनवत्युत्तरशततमेऽध्याये 'सूक्ष्मो धर्म्मो महाराज नास्य विद्मो वयं गतिम्' इति द्रौपदीविवाहप्रकरणस्थस्य युधिष्ठिरवाक्यस्य व्याख्यावसरे 'नैकस्या[2] बहवः सहपतय इति श्रुत्या सहेति युगपद्बहुपतित्वनिषेधो न तु समयभेदेने' ति नीलकण्ठभट्टेनोक्तम् । तस्य तु नह्येकस्याः स्त्रियः समयभेदेन बहवः पतयः कर्त्तव्या इत्येवंरूपविधिकल्पनायां तात्पर्यम् , किन्तु समयभेदेन बहुपतित्वनिषेधाभावे एव । तथा च शास्त्रीयप्रातिस्विकनिषेधानुपलम्भमात्रेणासन्दिग्धानुष्ठेयत्वलक्षणं सद्धर्म्मत्वं न लोकविद्विष्टस्य कर्म्मणः सिध्यतीति तदाशयः । उदाहृतनीलकण्ठीयव्याख्यानस्य विधवाविवाहवादिसमानतात्पर्यकत्वे तु प्रकृतविषये धर्म्मस्य विधिबोधितत्वेनासन्दिग्धत्वाद् दुर्बोधत्वलक्षणसूक्ष्मत्वस्य भङ्गापत्या 'सूक्ष्मो धर्म्मो महाराज नास्य विद्मो वयं गतिम्' इतिमूलश्लोकार्थप्रतिकूलतैवापद्येत । तस्माद्यथैकमपि विशालं गृहक्षेत्रादिकं वृक्षादिकं वा वस्तु युगपदनेकेभ्योऽपि दातुं शक्यते तथा एकस्या अपि कन्याया युगपद्बहुपुरुषेभ्यो दानप्रसक्तौ तन्निषेधाय प्रवृत्ताया 'नैकस्यै बहवः सह पतय' इति श्रुत्याः क्रमिकबहुपतिसत्त्वकल्पकत्वं नास्त्येवेति युक्तम् ।

एवं च सति 'यदेकस्मिन् यूपे द्वे रशने परिव्ययति तस्मादेको द्वे जाये विन्देत । यन्नैकां रशनां द्वयोर्यूपयोः परिव्ययति तस्मान्नैका द्वौ पती विन्देत' इति श्रुत्यन्तरस्यापि संवादः सम्पद्यते । नह्येकस्मिन् क्रतौ यूपस्तम्भे परिवीताया रशनायाः समयभेदेनाप्यनुष्ठीयमाने द्वितीय-

---

१ तैत्तिरीयसंहिता ( ६।४।३ ) । २ उदाहृततैत्तिरीयश्रुताविव काठकश्रुतावपि 'तस्मादुतैको बह्वीर्जाया विन्दते नैका बहून् पतीन्' ( २९।८ ) इत्यत्र सहपदं युगपत् पदं वा नैवोपन्यस्तम् । तेन सार्वदिक एव निषेधः इति दाधिमथाः ॥

स्मिन् क्रतौ यूपस्तम्भे परिव्ययनं सम्भवति तस्या रशनायाः प्रथमभूतक्रतूच्छिष्टत्वेनामेध्यत्वादुत्तरे क्रतुकर्म्मण्यनर्हत्वात्। तस्मादेकवारं यथोक्तविवाहविधिना कस्मैचिदेकस्मै प्रदत्ताया नार्याः सत्यपि पत्युर्नाशादौ पुनरन्यस्मै प्रदानं न धर्म्यं भवति। तस्याः कन्यात्वाभावेन दानयोग्यत्वाभावादिति तत्त्वम्। एतेन विधवाविवाहो न वेदविरुद्ध इति केषांचिदाधुनिकानामुक्तिः परास्ता वेदितव्या। अत एवोक्तं श्रुतिरहस्यपारदृश्वना भगवता मनुना नवमेऽध्याये ४७ श्लोके—

सकृदंशो निपतति सकृत् कन्या प्रदीयते।
सकृदाह ददानीति त्रीण्येतानि सतां सकृत्॥ इति।

पित्रादिधनविभागोंऽशः स भ्रातॄणां धर्म्मतः कृतः सकृदेव भवति, न पुनरन्यथा क्रियते। तथा पित्रादिभिः सकृदेकस्मै दत्ता कन्या न पुनरन्यस्मै दीयते। एवं चान्येन पूर्वमन्यस्मै दत्तायां पश्चात् पित्रादिभ्यः प्राप्तायामपि जनितमपत्यं न बीजिनो भवतीत्येतदर्थमस्योपन्यासः। तथा कन्यातोऽन्यस्मिन्नपि गवादिद्रव्ये सकृदेव ददानीत्याह न पुनस्तदन्यस्मै दीयते। त्रीण्येतानि सतां साधूनां धर्म्यपथानुवर्त्तिनां सकृद्भवन्तीति कुल्लुकभट्टो व्याचख्यौ। तथाऽत्रैवाध्याये—

देवराद्वा सपिण्डाद्वा स्त्रिया सम्यङ्नियुक्तया।
प्रजेप्सिताधिगन्तव्या सन्तानस्य परिक्षये॥ मनु०९।५९॥

इत्यादिना विधवानियोगप्रकारमुक्त्वा—'नान्यस्मिन् विधवा नारी नियोक्तव्या द्विजातिभिः' ( मनु० ९।६४ ) इत्यादिना तं प्रतिषिध्य प्रतिषेधदार्ढ्यायैव च—'नोद्वाहिकेषु मन्त्रेषु नियोगः कीर्त्यते क्वचित्' ( मनु० ९।६५ ) इत्युक्त्वा प्रक्रान्तस्य-'सकृदंशो निपतति सकृत् कन्या प्रदीयते' इत्यर्थस्यापि दृढीकरणाय-'न विवाहविधावुक्तं विधवावेदनं पुनः।' ( मनु० ९।६५ ) इत्युक्तम्। तथैव चाग्रे उपसंहृतं भगवता मनुना—

न दत्त्वा कस्यचित् कन्यां पुनर्दद्याद्विचक्षणः।
दत्त्वा पुनः प्रयच्छन् हि प्राप्नोति पुरुषानृतम्॥
( मनु० ९।७१ ) इति।

अत्र पद्ये कुल्लुकभट्टस्तु कस्मैचिद्वाचा कन्यां दत्त्वा तस्मिन् मृते दानगुणदोषज्ञः पुनस्तामन्यस्मै न दद्यात्। यस्मादेकस्मै दत्वान्यस्मै ददत् पुरुषाऽनृतं दोषं प्राप्नोति। सप्तपदीक्रमणस्यासंजातत्वाद्भार्यात्वा-

निष्पत्तेः पुनर्दानाशङ्कायामिदं वचनमिति व्याचख्यौ। तद्रीत्या तु यदि वाग्दत्ताया अपि मृतपतिकाया अन्यस्मै पुनर्दानं प्रतिषिध्यते तत्र किमु वक्तव्यं सप्तपदीक्रमणान्तविवाहविधिना दत्तायाः पत्यौ मृते पुनरन्यस्मै दानं न भवतीति। वस्तुतस्तु—'तेषां निष्ठा तु विज्ञेया विद्वद्भिः सप्तमे पदे' ( मनु० ८।२२७ ) इत्यष्टमाध्याये प्रोक्तवता मनुना सप्तपदीक्रमणात् प्राग्वाग्दत्तादीनां विवाहयोग्यं कन्यात्वमवतिष्ठत इति बोधितम्। ततश्च सप्तपदीक्रमणात् प्राग्वरमरणादौ सा कन्यान्यस्मै दातुं युज्यते न तु तदूर्ध्वमिति बोध्यम्। इममेव मन्वाशयं वसिष्ठः प्रकाशितवान्—

अद्भिर्वाचा च दत्तायां म्रियेतादौ वरो यदि।
न च मन्त्रोपनीता स्यात् कुमारी पितुरेव सा ॥ इति।

तथा यमोऽपि—

नोदकेन न वा वाचा कन्यायाः पतिरुच्यते।
पाणिग्रहणसंस्कारात् पतित्वं सप्तमे पदे ॥ इति।

न चैवं सति—

स तु यद्यन्यजातीयः क्लीबः पतित एव वा।
विकर्मस्थः सगोत्रो वा दासो दीर्घामयोऽपि वा ॥
ऊढाऽपि देया सान्यस्मै सहाभरणभूषणा।

इति कात्यायनवचनमसङ्गतं स्यादिति वाच्यम्। संभावनार्थकस्यापिशब्दस्य प्रयोगेण तद्वचनस्याप्युक्तार्थ एव तात्पर्यावधारणात्। यथा 'अनुत्तमो रसो ह्येष प्रमीतमपि चेतयेदि'त्यादौ प्रमीतशब्दो मृतकल्पं मूर्च्छितमेवोपस्थापयति न तु गतप्राणम्, तथैवात्र वचने ऊढाशब्दोऽप्यूढाकल्पामपूर्णविवाहसंस्कारां वाग्दत्तादिकामेवोपस्थापयति न तु सम्पूर्णविवाहसंस्काराम्। मृते रसप्रयोगस्येवोढायां वैवाहिकमन्त्रप्रयोगस्य बाधितार्थत्वात्। एतेन विधवाविवाहो मनुसंमत इति केषांचित्प्रतारकाणामुक्तिः परास्ता वेदितव्या।

अथ—

नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतौ।
पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते ॥

इति पराशरेण कलियुगीयधर्मनिरूपणप्रस्तावे स्मृतत्वादभ्यनुज्ञात एव विधवाविवाह इति चेन्नैवम्। स्मृतीनां श्रुतिमूलकत्वेनैव प्रामा-

ण्यनिश्चये स्थिते प्रत्यक्षवैवाहिकमन्त्रार्थविरुद्धो विधवाविवाह इत्यधस्तादुपपादितत्वात् सम्पूर्णविवाहसंस्कारेण प्रणष्टकन्यात्वानां पश्चान्मृतभर्तृकाणां नारीणां पुनरन्यपुरुषेण सह श्रौतविवाहसम्बन्धस्य पराशरस्मृत्या घटयितुमशक्यत्वात्। अवैदिकविवाहतात्पर्यकत्वे तु तस्या अप्रामाण्यापत्तेश्च। यत्त्विदं पराशरवचनं यथाश्रुतं व्याख्याय माधवेनोक्तम्–'अयं च पुनरुद्वाहो युगान्तरविषय इति कलौ[1] नानुष्ठेयः। तथा चादित्यपुराणम्—

ऊढायाः पुनरुद्वाहो ज्येष्ठांशो गोवधस्तथा।
कलौ पञ्च न कुर्वीत भ्रातृजायां कमण्डलुम्॥ इति।

इत्यादि। तदेतन्मन्दम्। उपक्रमोपसंहाराभ्यां पराशरस्मृतेः कलियुगीयधर्म्ममात्रबोधकत्वे स्थिते युगान्तरीयधर्म्मबोधकत्वकल्पनाया अनुचितत्वात्। अत एव प्रकृतं पराशरवचनं विद्वन्मनोहराख्यटीकायां नन्दपण्डित एवं व्याचख्यौ–वाग्दानानन्तरं पाणिग्रहणात् प्राक् पतौ उत्पत्स्यमानपतित्ववति पूर्वस्मिन् वरे नष्टे = दूरदेशगमनेनापरिज्ञातवृत्तान्ते, मृते = लोकान्तरं गते, प्रव्रजिते, क्लीबे वा सति एवंविधासु आपत्तिषु नारीणां कन्यानामन्यः पतिर्विधीयते इत्यर्थः। तदाह नारदः-

परिगृह्य तु यः कन्यां वरो देशान्तरं व्रजेत्।
त्रीनृतून् समतिक्रम्य कन्यान्यं वरयेद्वरम्॥
स्त्रीपुंसयोस्तु संबन्धाद्वरणं प्राग्विधीयते।
वरणाद्ग्रहणं पाणेः संस्कारोऽपि विचक्षणैः॥
तयोरनियतं प्रोक्तं वरणं दोषदर्शनात्॥ इति॥

वसिष्ठोऽपि—

अद्भिर्वाचा च दत्तायां म्रियेतादौ वरो यदि।
न च मन्त्रोपनीता स्यात् कुमारी पितुरेव सा॥ इति॥

यमोऽपि—

नोदकेन न वा वाचा कन्यायाः पतिरुच्यते।
पाणिग्रहणसंस्कारात् पतित्वं सप्तमे पदे॥ इति।

---

१ कलि प्रथम संधि संवत्सराः–३६००० षट्त्रिंशत् सहस्राणि ततो घोरकलिकालस्य षष्टिसहस्राधिकलक्षत्रय ३६०००० संवत्सराः ततः कलिचरमसंधिसंवत्सराः षट्त्रिंशत्सहस्राणि ३६००० भवन्ति एवं निर्णये ऽधुना कलिसंधिसमये नैव कलिवर्ज्यवचसां प्राप्त्याग्रहः॥ इति दाधिमथाः॥

मनुरपि—

पाणिग्रहणिका मन्त्रा नियतं दारलक्षणम्।
तेषां निष्ठा तु विज्ञेया विद्वद्भिः सप्तमे पदे॥
(मनु० ८।२२७) इति॥

नष्टे मृते इति वाक्यस्थचकारेणान्यजातीयादेर्ग्रहणम्। तथा च कात्यायनः—

स तु यद्यन्यजातीयः क्लीबः पतित एव वा।
विकर्म्मस्थः सगोत्रो वा दासो दीर्घामयोऽपि वा॥
ऊढापि देया सान्यस्मै सहाभरणभूषणा। इति।

अत्रोढापीत्यपिशब्दः कैमुतिकन्यायेन वाग्दत्ताया एवान्यस्मै दानमाचष्टे न तूढायाः। तथात्वे सगोत्रोढाया अपि पुनर्विवाहः प्रसज्येत। तथात्वे सति च 'भोगतस्तां परित्यज्य पालयेज्जननीमिवे' ति विरुध्येत। पञ्चस्विति प्रचयशिष्टसंख्यानुवादो न परिसंख्या।

नन्वेवमपि 'वाचा दत्ता मनोदत्ताऽग्निं परिगता सप्तमं पदं नीता भुक्ता गृहीतगर्भा प्रसूता चेति सप्तविधा पुनर्भूस्तां गृहीत्वा न प्रजां धर्म्मं विन्देत्' इति बौधायनवचनविरोधः स्यादिति चेन्मैवम्। तस्य निर्दुष्टवरविषयत्वात्।

अत एव नारदः—

दत्तां न्यायेन यः कन्यां वराय न ददाति यः।
अदुष्टश्चेद्वरो राज्ञा स दण्ड्यस्तत्र चो(चौ)रवत्॥

इति तत्र दण्डं विधत्ते। तस्मादेवंविधविषयेषु वाग्दानेऽपि कृते वरान्तराय दानं न भवतीति सिद्धमित्येवं रीत्या पराशरीयं प्रकृतवचनं व्याख्यायान्यथा व्याख्याने कलिवर्ज्यप्रकरणस्थविधवाविवाहनिषेधकवचनविरोधमुद्भावितवान् नन्दपण्डितः। भट्टोजिदीक्षिता अपि चतुर्विंशतिमतव्याख्यायामेवमेवाहुः। एतेन कलियुगैकविषयपराशरस्मृतिविरोधेन कलिवर्ज्यप्रकरणस्थानां पुराणवचनानामप्रामाण्यम्। स्मृतिपुराणयोर्विरोधे पुराणस्य जघन्यत्वात्। यद्वा कलिवर्ज्यप्रकरणेनापत्तिविशेषमनाश्रित्य सामान्यत एव पुनरुद्वाहस्य निषेधात्तस्योत्सर्गत्वम्। परिगणितपञ्चस्वेवापत्सु पुनर्विवाहविधायकस्य पराशरवचनस्यापवादत्वमित्यादिबहुविधो वङ्गदेशीयानामर्वाचां तदनुवर्त्तिनां च केषांचित्प्रलापः सर्वश्रुतिस्मृतिविरोधादुपेक्षणीय इति विभाव्यताम्।

देवरेण सुतोत्पत्तिर्दत्ता कन्या न दीयते।
न यज्ञे गोवधः कार्यः कलौ न च कमण्डलुः॥

इति क्रतुस्मरणादूढायाः पुनरुद्वाहस्य कलौ निषेधः केवलं पौराणिक एवेति वदन्तो भ्रान्ता एवेत्याहुः।

नन्वेवमपि—

सा चेदक्षतयोनिः स्याद्गतप्रत्यागतापि वा।
पौनर्भवेन भर्त्रा सा पुनः संस्कारमर्हति॥
(मनु० ९।१७६)

इति मानववचनेन, तथा 'अक्षता भूयःसंस्कृता पुनर्भूः' इति वैष्णववचनेन, तथा 'अक्षता च क्षता चैव पुनर्भूः संस्कृता पुनः' इति याज्ञवल्कीयवचनेन, तथान्यैरप्येवंविधवचनैर्बोधिते विधवापुनःसंस्कारे वैवाहिकमन्त्राणां बाधितार्थत्वाद्विनियोगो न स्यात्। तथा सति तस्य पुनःसंस्कारत्वमपि भज्येतेति चेन्न।

इच्छयान्योन्यसंयोगः कन्यायाश्च वरस्य च।
गान्धर्वः स तु विज्ञेयो मैथुन्यः कामसंभवः॥
(मनु० ३।३२)

इति मनूक्तलक्षणस्य गान्धर्वविवाहस्य संस्कारत्ववदमन्त्रकस्यापि विधवापुनर्विवाहस्य संस्कारत्वाक्षतेः। अत एव पुनरुपनयनप्रयोग इवायं विधवापुनर्विवाहप्रयोगः कल्पसूत्रादौ क्वापि नोपदिष्टः पूर्वाचार्यैः। प्रत्युत

पाणिग्रहणिका मन्त्राः कन्यास्वेव प्रतिष्ठिताः।
नाकन्यासु क्वचिन्नॄणां लुप्तधर्म्मक्रिया हि ताः॥
(मनु० ८।२२६)

इति वदता मनुनास्य धर्म्यविवाहत्वाभाव एव बोधितः। यद्यपि—

गान्धर्वेषु विवाहेषु पुनर्वैवाहिको विधिः।
कर्त्तव्यश्च त्रिभिर्वर्षैः समयेनाग्निसाक्षिकः॥

इति देवलवचनेनाग्निसाक्षिक इति पदघटितेन पुनर्विवाहे होमादिविधिः प्रतीयते, तथापि देवलवचनगतपुनर्विवाहस्य सप्तपदीक्रमणात् प्रागेव नष्टादिपतिकानामलुप्तकन्यात्ववतीनां कर्त्तव्यपुनर्विवाहपरत्वान्नोदाहृतमनुवचनेन विरोधः। यद्वा 'नाकन्यासु क्वचिन्नॄणाम्'

इति मनुवचनं पुनर्भ्वादिविवाहे सर्वथा न वैवाहिकमः
निषेधकं किन्तु तेषां मन्त्राणां तत्र विषये बाधितार्थत्वेन ऽ
भावबोधकम्। एवं च अकन्याभूताः पुनर्भूप्रभृतयो वैद
संस्क्रियमाणा अपि अपगतधर्म्मविवाहादिशालिन्य एव
तस्मान्नासौ धर्म्यो विवाह इति ज्ञापनार्थं 'लुप्तधर्म्मक्रिया।
तत्रैव वचनेऽभिहितमिति बोध्यम्।

अथैवमपि—

नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतौ।
पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते॥
अष्टौ वर्षाण्युदीक्षेत ब्राह्मणी प्रोषितं पतिम्।
अप्रसूता तु चत्वारि परतोऽन्यं समाश्रयेत्॥
क्षत्रिया षट् समास्तिष्ठेदप्रसूता समास्त्रयः।
वैश्या प्रसूता चत्वारि द्वे वर्षे त्वितरा वसेत्॥
न शूद्रायाः स्मृतः काल एष प्रोषितयोषिताम्।
जीवति श्रूयमाणे तु स्यादेष द्विगुणोऽवधिः॥
अप्रवृत्तौ तु भूतानां दृष्टिरेषा प्रजापतेः॥

इति नारदस्मृतेरसङ्गतार्थकत्वमापद्येत। प्रतिपादितदोषा
प्रसरात्। 'अप्रसूता तु चत्वारी' त्याद्युक्त्या अस्याः स्मृतेर्वाग्द
त्वस्य वक्तुमशक्यत्वादिति चेन्नैवम्। उपक्रमोपसंहाराभ्याम
दस्मृतेर्नियोगविधिबोधनार्थत्वनिश्चयेन पुनर्विवाहपरत्वस्य
तथा हि—

अज्ञातदोषेणोढा या निर्दोषा नान्यमाश्रिता।
बन्धुभिः सा नियोक्तव्या निर्बन्धुः स्वयमाश्रयेत्॥

इत्युपक्रम्य 'नष्टे मृते' इत्यादिना नियोगानुष्ठानस्य नि
भिधाय तत्रापि भर्तरि नष्टे दूरदेशगमनादिनाऽपरिज्ञातवृत्त
कियता कालेन नियोगोऽनुष्ठेय इत्यपेक्षायाम् 'अष्ट वर्षाण
इति प्रतीक्षाकालावधिमभिधाय प्रोक्तकालादूर्ध्वं कदाचित् प
वार्ताश्रवणे तु पुनरपि तावत्कालप्रतीक्षा कर्त्तव्येत्युक्त्वा 'अ
भूतानाम्' इति श्लोकार्द्धेन सर्वथा भर्तृजीवनवार्त्ताया अप्रवृत्तौ
यामेव नियोगानुष्ठानं नान्यदा इति प्रजापतेर्दृष्टिर्मतमित्युक्तम्
न्तरं च 'अतोऽन्यगमने स्त्रीणामेष दोषो न विद्यते' इत्युपर

जापतेरेषा दृष्टिरतो हेतोरन्यगमने अन्यं प्रति नियोगधर्म्मेणा-
गे कृतेऽपि स्त्रीणामेष प्रसिद्धो व्यभिचारलक्षणो दोषो न विद्यत
संहारवाक्यस्यार्थः। ब्राह्मणीप्रभृतीनां प्रतीक्षाकालतारतम्यं तु
सत्त्वादिगुणतारतम्यनिबन्धनम्। प्रसूताया अपि नियोगोपदेशो-
विषयः। 'द्वितीयमेके प्रजनं मन्यन्ते स्त्रीषु तद्विदः।' (मनु० ९।६१)
नियोगप्रकरणे मनुस्मरणात्। एवं च प्रकृता नारदस्मृतिरुप-
संहारबलेन नियोगविधिबोधिकेति स्पष्टमेव।

दुदाहृतनारदस्मृतिसमानानुपूर्वीकेण 'नष्टे मृते प्रव्रजिते' इत्यादि-
स्मृतिवचनेन नारदस्मृत्युक्तो नियोगविधिरेव कलावनुष्ठेयत्वेन
मिति चेन्न। 'औरसः क्षेत्रजश्चैव दत्तः कृत्रिमकः पुनः'
चने एवकारस्वारस्येन क्षेत्रज औरस एव पुत्रो न तु नियोगजोऽ-
नियमकरणात् पराशरेण कलियुगे नियोगस्य निराकृतत्वात्।
पराशरवचनमौरसादीनां चतुर्णां पुत्राणां कलियुगे परिग्रहवि-
म्। ततश्च नियोगविधिरपि कलियुगेऽर्थापत्त्या कल्पयितव्यः,
यथा क्षेत्रजपुत्र उपपद्येतेति वाच्यम्। 'दत्तौरसेतरेषां तु पुत्र-
परिग्रहः' इति आदित्यपुराणस्थकलिवर्ज्यप्रतिपादकवचनविरो-
स्मृत्यन्तरेष्वपि नियोगस्य कलिवर्ज्यत्वबोधनादुदाहृतपराशर-
य क्षेत्रजपुत्राभ्यनुज्ञायां भवदुक्तरीत्या तात्पर्यकल्पने मानाभा-
तथा चाह बृहस्पतिः—

उक्तो नियोगो मनुना निषिद्धः स्वयमेव तु।
युगह्रासादशक्योऽयं कर्त्तुमन्यैर्विधानतः॥
तपोज्ञानसमायुक्ताः कृतत्रेतादिके नराः।
द्वापरे च कलौ नृणां शक्तिहानिर्हि निर्मिता॥
अनेकधा कृताः पुत्रा ऋषिभिर्ये पुरातनैः।
न शक्यास्तेऽधुना कर्तुं शक्तिहीनैरिदन्तनैः॥ इति।

था बौधायनोऽपि—

विधिर्यो निष्ठितः पूर्वं क्रियते नेह साम्प्रतम्।
पुराकल्पे स एतच्च विधवायां नियोजनम्॥ इति।

तुरपि—

देवरेण सुतोत्पत्तिर्दत्ता कन्या न दीयते।
न यज्ञे गोवधः कार्यः कलौ न च कमण्डलुः॥ इति।

अत्र 'देवरेण सुतोत्पत्ति' रित्यनेन

देवराद्वा सपिण्डाद्वा स्त्रिया सम्यङ्नियुक्तया।
प्रजेप्सिताधिगन्तव्या सन्तानस्य परिक्षये ॥ (मनु० ९।५९)

इति मन्वादिबोधितो नियोगविधिर्निषिध्यते। 'दत्ता कन्या न दीयते' इत्यनेन तु

पाणिग्रहे मृते बाला केवलं मन्त्रसंस्कृता।
सा चेदक्षतयोनिः स्यात् पुनः संस्कारमर्हति ॥

इति वसिष्ठादिवचनैर्बोधितो युगान्तरीयो विधवापुनर्विवाहो निषिध्यत इति बोध्यम्।

यत्तु विधवापुनर्विवाहकामुकैः कैश्चिदुच्यते—संजातसम्पूर्णविवाहसंस्कारायाः स्त्रियाः पत्युर्मरणादौ सति द्वितीयेन भर्त्रा सह पुनःसंस्कारे कृते पुनर्भूशब्देन तदपत्यानां च पौनर्भवशब्देन व्यवहारो युगान्तरे आसीत्। कलौ तु तथाविधाया अपि धर्म्मपत्नीशब्देन तदपत्यानां च औरसशब्देन व्यवहारः कर्त्तव्यो न तु युगान्तरीयैर्निन्दास्पदैः पुनर्भ्वादिशब्दैरिति महाभारतप्रामाण्यात् कल्प्यते। तथा च भीष्मपर्वणि नवतितमेऽध्याये वर्ण्यते।

अर्जुनस्य सुतः श्रीमानिरावान्नाम वीर्यवान्।
स्नुषायां नागराजस्य जातः पार्थेन धीमता ॥
ऐरावतेन सा दत्ता अनपत्या महात्मना।
पत्यौ हते सुपर्णेन कृपणा दीनचेतना ॥
भार्यार्थे तां च जग्राह पार्थः कामवशानुगाम्।
एवमेष समुत्पन्नः परक्षेत्रेऽर्जुनात्मजः ॥
स नागलोके संवृद्धो मात्रा च परिरक्षितः।
पितृव्येण परित्यक्तः पार्थद्वेषाद्दुरात्मना ॥
रूपवान् बलसम्पन्नो गुणवान् सत्यविक्रमः।
इन्द्रलोकं जगामाशु श्रुत्वा तत्रार्जुनं गतम् ॥
सोऽभिगम्य महाबाहुः पितरं सत्यविक्रमः।
अभ्यवादयदव्यग्रो विनयेन कृताञ्जलिः ॥
न्यवेदयत चात्मानमर्जुनस्य महात्मनः।
इरावानस्मि भद्रं ते पुत्रश्चाहं तव प्रभो ॥

१ अश्वसेनेन।

मातुः समागमो यश्च तत्सर्वं प्रत्यवेदयत् ।
तच्च सर्वं यथा वृत्तमनुसस्मार पाण्डवः ॥
परिष्वज्य सुतं चापि आत्मनः सदृशं गुणैः ।
प्रीतिमानानयत्पार्थो देवराजनिकेतने ॥
सोऽर्जुनेन समाज्ञप्तो देवलोके तदा नृप ।
प्रीतिपूर्वं महाबाहुः स्वकार्यं प्रति भारत ॥
युद्धकाले त्वयास्माकं साह्यं देयमिति प्रभो ।
बाढमित्येवमुक्त्वा तु युद्धकाले इहागतः ॥

इत्याद्यभिधायाग्रे तस्य युद्धप्रसङ्गमभिधायोक्तम्–

विमोहितमिरावन्तं न्यहनद्राक्षसोऽसिना ॥
अजानन्नर्जुनश्चापि निहतं पुत्रमौरसम् ।
जघान समरे शत्रून् राक्षसान् भीष्मरक्षिणः ॥ इति ।

अस्मिन्नाख्याने नागराजेन ऐरावतेन विधवा निजस्नुषाऽर्जुनाय दत्ता । तस्यां चार्जुनादुत्पन्न इरावानर्जुनस्यौरसः पुत्र इति वर्णितम् । ततश्च कलिकालभवेन पार्थेन विधवाविवाहोऽनुष्ठित इति तस्यां जात इरावांश्च औरसपुत्रत्वेन व्यवहृत इति च लभ्यते । कलियुगे प्रथमः शाककर्ता युधिष्ठिर इति ज्योतिःशास्त्रादौ प्रसिद्धत्वात् पाण्डवाः कलियुगीया एवेति ।

तत्रोच्यते। उदाहृते भारतीयाख्याने पुत्रौरसादिशब्दप्रयोगमात्रेण न भवदभिप्रेतार्थः सिध्यति। तत्रत्यौरसादिपदानां योगार्थमात्रतात्पर्येण प्रयुज्यमानत्वेन धर्म्मपत्नीजत्वसमनियतपुत्रत्वावच्छिन्नरूपरूढ्यर्थपरत्वाभावात्। 'एवमेष समुत्पन्नः परक्षेत्रेऽर्जुनात्मज' इत्युक्त्या 'पितृव्येण परित्यक्तः पार्थद्वेषाद् दुरात्मना' इत्युक्त्या 'मातुः समागमो यश्च तत्सर्वं प्रत्यवेदय' दित्युक्त्या चैरावतो नियोगधर्म्मजत्वस्य स्फुटमेवाभिहितत्वाच्च। किञ्च महाभारते वनपर्वणि ४२ अध्याये

भो भो शक्रात्मज श्रीमन् शक्रस्त्वां द्रष्टुमिच्छति ।
आरोहतु भवान् शीघ्रं रथमिन्द्रस्य संमतम् ॥
आह माममरश्रेष्ठः पिता तव शतक्रतुः ।
कुन्तीसुतमिहायातं पश्यन्तु त्रिदशालयाः ॥

इत्यर्जुनं प्रति मातलिवाक्ये, तथा तत्रैव पर्वणि ४७ अध्याये 'महर्षे मम पुत्रोऽयं कुन्त्यां जातो महाभुज' इति लोमशं प्रतीन्द्रवाक्ये च

केवलमिन्द्राङ्गजन्यत्वमेव निमित्तीकृत्य प्रवृत्तैः पुत्रात्मजपित्रादिशब्दैर्यथा न कुन्त्या इन्द्रधर्म्मपत्नीत्वं न वाऽर्जुनस्येन्द्रौरसपुत्रत्वं कथंचिदपि स्थापयितुं शक्यते तथा प्रकृतेऽपि नागराजस्नुषा नार्जुनस्य धर्म्मपत्नीति न वा इरावानर्जुनस्य औरसः पुत्र इति वक्तुं शक्यते। किन्तु परक्षेत्रे इन्द्रात् समुत्पन्नोऽर्जुनो यथा क्षेत्रस्वामिनः पाण्डोरेव पुत्रस्तथा प्रकृते परक्षेत्रेऽर्जुनादुत्पन्न इरावानपि क्षेत्रस्वामिनो नागराजात्मजस्यैव पुत्र इति सहृदयेन भवतानिच्छताप्यभ्युपेयम्। नन्वेवमपि कलौ नियोगस्य निषिद्धत्वात् कथं नागराजेन निजस्नुषाऽर्जुनं प्रति नियुक्ताऽर्जुनेन च गृहीतेति चेत्। नायं दोषः। यथा रजनीमुखलक्षणस्य सन्ध्यासमयस्येषद्भानुप्रभावत्त्वमीषत्तमिस्रत्वं च विश्वजनीनानुभवसिद्धं, तथा युगसन्ध्यासमयस्यापि वृत्तवर्त्तिष्यमाणोभयधर्म्मवत्वस्येष्टत्वात्। पाण्डवानां द्वापरप्रान्तकलिप्रारम्भलक्षणे युगसन्ध्यासमये संजातत्वात्[1]। तथा चोक्तं श्रीमद्भागवते प्रथमस्कन्धे १५ अध्याये

यदा मुकुन्दो भगवानिमां महीं जहौ स्वतन्वा श्रवणीयसत्कथः।
तदाऽहरेवाप्रतिबुद्धचेतसामधर्म्महेतुः कलिरन्ववर्त्तत ॥ इति।

अन्ववर्त्ततेति पूर्वमेवांशेन प्रविष्टस्य तेन रूपेणानुवृत्तिरुक्तेति तच्छ्लोकव्याख्यायां श्रीधरस्वामिनोक्तम्। तथा तत्रैव १२ स्कन्धे २ अध्याये उक्तम्

यावत् स पादपद्माभ्यां स्पृशन्नास्ते रमापतिः।
तावत्कलिर्वै पृथिवीं पराक्रान्तुं न चाशकत् ॥ इति।

इमं श्लोकमवतारयता श्रीधरस्वामिनोक्तम् 'ननु श्रीकृष्णे पृथिव्यां वर्त्तमानेऽपि सन्ध्यारूपेण कलिः प्रविष्ट एवासीत्। सत्यम्। तथापि तावत्तस्य पराक्रमो नाभवदित्याह यावदिती'ति। कृष्णस्य पाण्डवानां च समकालिकत्वं पुराणादिप्रसिद्धमेव। एवं च क्वापि धर्मशास्त्रे सप्तपदीक्रमणान्तविवाहसंस्कारोत्तरं नष्टादिपतिकानां स्त्रीणां पुनर्वि-

---

१ महाभारतसंग्रामश्च विन्ध्याचलतो दाक्षिणात्यानां कार्तिककृष्णे उदीचां तु मार्गशीर्षकृष्णे अमावास्यायां सूर्यग्रहणतः पश्चादेव जात इति महाभारते स्पष्टतया निर्णीतः ( सूर्यग्रहणस्य लक्ष्यसंभवो गणितशास्त्रानुसारेण विक्रमशकतः ३०४४ शालिवाहनशकतः ३१८० पूर्वमेव निर्णीतो महाभारतमीमांसाग्रन्थ १२९ पृष्ठे प्रकाशितः ॥ इति द्राविमथाः ॥

वाहो न धर्म्यत्वेन बोध्यते। तथा क्वचिदपि पुराणेतिहासादौ मृतभर्तृकाणां वनितानां पुनर्विवाहो वर्णितो नोपलभ्यते। तस्मात् पराशरीयं 'नष्टे मृते प्रव्रजिते' इति वचनं श्रुतिस्मृत्यादिविरुद्धार्थविधाने प्रवृत्तमिति न कथमपि संभावयितुं शक्यमिति ध्येयम्।

अथैवमप्यस्य पराशरवचनस्य प्रायश्चित्तप्रकरणे पाठो वाग्दत्तादिपरत्वे असङ्गतः स्यादिति चेत्। सप्तपद्युत्तरं नष्टादिपतिकानां पुनर्विवाहबोधकत्वेऽपि तत्र पाठोऽसङ्गत एव। अस्य पुनर्विवाहस्य प्रायश्चित्तस्वरूपत्वाभावादिति तुल्यम्। यदि परिवेदनदोषापनुत्तये ज्येष्ठाय कन्यां समर्प्य पुनः सा कनिष्ठेन विवाह्या इत्युक्तं तत्र प्रसङ्गादुपस्थितस्य पुनर्विवाहस्य क्वचिद्विषयेऽभ्यनुज्ञानार्थं 'नष्टे मृते प्रव्रजिते' इति पराशरेणोच्यते इति प्रसङ्गसङ्गतिं मन्यसे तर्हि ममाप्येषा संमतैव। परंतु सप्तपद्युत्तरं नष्टादिपतिकानां पुनर्विवाहविधायकमिदं वचनमिति यद्भवान् मन्यते, तदहं न मन्ये। प्रतिपादिताच्छ्रुत्यादिविरोधात्। किंतु सप्तपदीक्रमणात् पूर्वमेव नष्टादिपतिकानां पुनर्विवाहविधायकमित्येव। तथा च विद्वन्मनोहरायां नन्दपण्डितैरपीदं वचनमित्थमेवावतारितम् 'नन्वस्तु परिवेदने कन्याया ज्येष्ठसमर्पणानन्तरं पुनस्तेनेव विवाहो वाग्दानानन्तरमनिष्पन्ने विवाहे तु वरवैगुण्ये इति कथमित्यत आह 'नष्टे मृत इती' ति। एवं प्रसङ्गवशादुपस्थितं वाग्दत्तादिविषयकं पुनर्विवाहमभिधाय सम्पूर्णविवाहविधिना संस्कृतानां स्त्रीणां[1] श्रौतस्मार्त्तादिधर्म्मकृत्ये पत्या सहैवाधिकारस्य विधिबोधितत्वेन कदाचिद् दुर्दैववशात् पत्यौ मृते धर्म्मकर्म्मानधिकारवतीभिर्विधवाभिः किं प्रायश्चित्तमनुष्ठेयं येन तासां दुरितक्षयद्वारा परलोकहानिर्न भवेदित्याकाङ्क्षायां प्रायश्चित्तं प्रदर्शयन् पराशर उवाच—

मृते भर्त्तरि या नारी ब्रह्मचर्ये व्यवस्थिता।
सा मृता लभते स्वर्गं यथा ते ब्रह्मचारिणः॥

इति।

तदेतद्विस्तरेण स्मृतं पञ्चमेऽध्याये मनुना—

नास्ति स्त्रीणां पृथग्यज्ञो न व्रतं नाप्युपोषितम्।

---

१ दम्पत्योर्जीवतोः सहैवाधिकारः। पतिरहितानां ब्रह्मवादिन्यादीनां तु कण्वभीष्मविभाण्डकादिविधुराणामिवाधिकारो निराबाध एवेति जैमिनीयमीमांसायां षष्ठाध्याये निपुणतरं निरूपितमस्ति इति सिद्धान्तकौमुदीटिप्पण्यामपि प्रपञ्चितमस्माभिः॥ इति दाधिमथाः॥

पतिं शुश्रूषते येन तेन स्वर्गे महीयते ॥
पाणिग्रहस्य साध्वी स्त्री जीवतो वा मृतस्य वा ।
पतिलोकमभीप्सन्ती नाचरेत्किंचिदप्रियम् ॥
कामं तु क्षपयेद्देहं पुष्पमूलफलैः शुभैः ।
न तु नामापि गृह्णीयात् पत्यौ प्रेते परस्य तु ॥
(मनु० ५।१५५-१५७)

मृते भर्त्तरि या नारी ब्रह्मचर्यै व्यवस्थिता ।
स्वर्गं गच्छत्यपुत्रापि यथा ते ब्रह्मचारिणः ॥
(मनु० ५।१६०)

नान्योत्पन्ना प्रजास्तीह न चाप्यन्यपरिग्रहः ।
न द्वितीयश्च साध्वीनां क्वचिद्भर्त्तोपदिश्यते ॥
(मनु० ५।१६२) इति ।

तस्माद्विधवापुनर्विवाहस्य धर्म्यत्वे किंचिदपि श्रुतिस्मृत्यादिकं प्रमाणं नास्तीत्याहुः । एवं रीत्या केचित् पण्डिता विधवापुनर्विवाहस्य धर्म्मत्वं प्रतिपादयन्ति । केचिच्च तत् प्रतिक्षिपन्ति, तदुभयमत्र दिक्प्रदर्शनरीत्या सङ्गृहीतम् । परंत्वियं विप्रतिपत्तिर्न चरमां कोटिमधिरूढा । यतोऽत्र विषये विप्रतिपन्ना बहवः पण्डिताः स्वस्वपक्षसमर्थनाय प्रमाणविचारं सततमावर्त्तयन्त्येवेति बोध्यम् ।

अथ प्रमीतपत्नीकेन द्विजेन सत्यां गृहस्थाश्रमधर्म्मचिकीर्षायां प्रागुक्तलक्षणवती पुनरन्या कन्या समुद्वाह्या । तथा चापस्तम्बः—

अथ प्रमीतभार्यो य इच्छेद्गार्हस्थ्यमात्मनः ।
तेनान्या पुनरुद्वाह्या निर्विण्णश्चेद्वनं व्रजेत् ॥
मुमुक्षायां तु संन्यस्य प्रव्रजेद्धीर आत्मवान् ।
अनाश्रमी न तिष्ठेत दिनमेकमपि द्विजः ॥ इति ।

ननु विधवाया इव विधुरस्यापि पुनर्विवाहो न धर्म्यो भवेत् 'अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत्' ( या० स्मृ० १।५२ ) इति याज्ञवल्क्यवचने 'श्रुतशीलिने विज्ञाय ब्रह्मचारिणेऽर्थिने देया' इति बौधायनवचने च ब्रह्मचर्यविशिष्टब्रह्मचारिण उपादानादिति चेन्मैवम्—तत्रत्यब्रह्मचारिशब्दस्य स्नातकपरत्वात् । अन्यथा ब्रह्मचर्याश्रमदशायां कन्याप्रतिग्रहे तदाश्रमभङ्गापत्त्या ब्रह्मचारिणे कन्यादानानुपपत्तेः । अत एव ब्रह्मचर्यं समाप्य समावर्त्तनोत्तरमेव

सर्वत्र कल्पसूत्रादिस्मृतिषु विवाहविधिः स्मर्यते। द्वितीयादिविवाहस्थलेऽपि 'गृहागतायाऽस्मै स्नातकाय वराय ब्राह्मादिविवाहविधिना कन्यादानमहं करिष्ये' इत्यादिप्रकारेणैव कन्यादानसंकल्पवाक्यादि प्रयुज्यते। तत्राऽपि वेदविद्याव्रतस्नातत्वलक्षणस्य स्नातकत्वस्य सुस्थितत्वात्। न च ब्रह्मचर्यसमाप्त्युत्तरं यावद् गृहस्थाश्रमं न स्वीकरोति तावदेव स्नातकत्वं द्विजस्यावतिष्ठते इति भ्रमितव्यम्।

वेदविद्याव्रतस्नातान् श्रोत्रियान् गृहमेधिनः।
पूजयेद्धव्यकव्येन विपरीतांस्तु वर्जयेत्॥
(मनु० ४।३१)

इत्यादिबहुभिः श्लोकैश्चतुर्थाध्याये मनुना गृहमेधिनं लक्षीकृत्यैव स्नातकधर्म्मोपदेशात्।

सत्यां तु धर्म्मशीलायां प्रजावत्यां स्वयोषिति।
नान्यां समुद्वहेद्भार्यामित्यापस्तम्ब उक्तवान्॥

इति वचने धर्म्मशीलायां प्रजावत्यामिति विशेषणद्वयोपादानाद्विद्यमानभार्याया दुष्टत्वे भार्यान्तरं कर्त्तव्यमिति बोधयति स्मृतिकारः। तथा च स्पष्टमुवाच याज्ञवल्क्यः—

सुरापी व्याधिता धूर्त्ता वन्ध्यार्थघ्न्यप्रियंवदा।
स्त्रीप्रसूश्चाधिवेत्तव्या पुरुषद्वेषिणी तथा॥
अधिविन्ना तु भर्त्तव्या महदेनोऽन्यथा भवेत्॥
(या० स्मृ० १।७३–७४) इति।

अधिवेत्तव्या तदुपरि स्त्र्यन्तरं कर्त्तव्यमित्यर्थः।

स्वविभवानुसारेण यथोचितदानमानादिभिः स्त्रीणां मनःसन्तोषो यत्नतः सम्पादनीयः। अन्यथा गृहस्थाश्रमधर्म्मस्य वैगुण्यमापद्येत। तथा चोक्तं मनुना ९ अध्याये—

प्रजनार्थं महाभागाः पूजार्हा गृहदीप्तयः।
स्त्रियः श्रियश्च गेहेषु न विशेषोऽस्ति कश्चन॥
(मनु० ९।२६)
अपत्यं धर्म्मकार्याणि शुश्रूषा रतिरुत्तमा।
दाराधीनस्तथा स्वर्गः पितॄणामात्मानश्च ह॥
(मनु० ९।२८) इति।

तृतीयेऽध्यायेऽपि तेनोक्तम्—

यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः ।
यत्रैतास्तु न पूज्यन्ते सर्वास्तत्राफलाः क्रियाः॥
(मनु० ३।५६)

सन्तुष्टो भार्यया भर्त्ता भर्त्रा भार्या तथैव च ।
यस्मिन्नेव कुले नित्यं कल्याणं तत्र वै ध्रुवम् ॥
(मनु० ३।६०) इति ।

तथा याज्ञवल्क्योऽप्याह—

भर्तृभ्रातृपितृज्ञातिश्वश्रूश्वशुरदेवरैः ।
बन्धुभिश्च स्त्रियः पूज्या भूषणाच्छादनाशनैः ॥
(या० स्मृ० १।८२) इति ।

तथा स्त्रियमधिकृत्याह याज्ञवल्क्यः—

पतिप्रियहिते युक्ता स्वाचारा विजितेन्द्रिया ।
सेह कीर्त्तिमवाप्नोति प्रेत्य चानुत्तमां गतिम् ॥
(या० स्मृ० १।८७) इति ।

बहुभार्यं प्रत्याह कात्यायनः—

अग्निशिष्टादिशुश्रूषा बहुभार्यः सवर्णया ।
कारयेत् तद्बहुत्वं चेज्ज्येष्ठया गर्हिता न चेत् ॥ इति ।

अग्निशुश्रूषा औपासनहोमादिरूपाः। शिष्टशुश्रूषा आतिथ्यादिकाः। इदं च पत्नीसम्पाद्यधर्म्मक्रियामात्रोपलक्षणम् । ज्येष्ठाया अनर्हत्वे तु मध्यमया कनिष्ठया वा धर्म्मक्रियाः कारयेत्। तत्रापि सवर्णयेति सति सम्भवे सम्बध्यते एव ।

अथ वर्णानां स्वकुलोचितानि धर्म्मादिसाधकानि कर्म्माण्याह याज्ञवल्क्यः—

इज्या[1]ध्ययनदानानि वैश्यस्य क्षत्रियस्य च ।
प्रतिग्रहोऽधिको विप्रे याजनाध्यापने तथा ॥
(या० स्मृ० १।११८) इति ।

तत्रेज्याध्ययनदानलक्षणं कर्म्मत्रितयं सर्वेषां द्विजातीनां धर्म्मो ब्राह्मणस्य तु यजनयाजनाध्ययनाध्यापनदानप्रतिग्रहरूपाणि षट् कर्म्माणि ।

---

१ यज्ञादिक्रिया ।

षण्णां तु कर्म्मणामस्य त्रीणि कर्म्माणि जीविका ।
याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः ॥
( मनु० १०।७६ )

इति मनूक्तेर्याजनादीनि त्रीणि ब्राह्मणस्य जीविकासाधनानि। 'विशुद्धाच्च प्रतिग्रह' इत्युक्तत्वादनापद्यविशुद्धात् प्रतिग्रहो निषिद्ध इति सूचितम् ।

तत्रापि विशेषमाह याज्ञवल्क्यः—

कुशाः शाकं पयो मत्स्या गन्धाः पुष्पं दधि क्षितिः ।
मांसं शय्यासनं धाना प्रत्याख्येयं न वारि च ॥
अयाचिताहृतं ग्राह्यमपि दुष्कृतकर्म्मणः ।
अन्यत्र कुलटाषण्ढपतितेभ्यस्तथा द्विषः ॥
( या० स्मृ० १।२१४–२१५ )

इति । एवमपराण्यपि ऋतोऽयाचितभैक्षकृषिवाणिज्यकुसीदरूपाणि षट् कर्म्माणि ब्राह्मणस्य जीविकात्वेनोपदिष्टानि मन्वादिभिः । तत्र यो बहुपोष्यवर्गः स समुदितैः षड्भिरप्यृतादिभिरुपायैर्वृत्तिं कल्पयेत्। यः स्वल्पपरिवारः स याजनादिभिस्त्रिभिरुपायैर्वर्तेत । यस्तु प्रतिग्रहस्याधर्म्मकर्म्मत्वं मनुते स प्रतिग्रहं विहाय द्वाभ्यां याजनाध्यापनाभ्यामेव जीवेत् । कश्चित् पुनः स्वल्पमपि पारतन्त्र्यमसहमानोऽध्यापनमात्रेणात्मनो वृत्तिं कल्पयेत् ।

तदुक्तं मनुना—

षट्कर्मैको भवत्येषां त्रिभिरन्यः प्रवर्त्तते ।
द्वाभ्यामेकश्चतुर्थस्तु ब्रह्मसत्रेण जीवति ॥
( मनु० ४।९ ) इति ।

ब्रह्मसत्रमध्यापनम् ।

क्षत्रियादीनां जीवनोपायानाह याज्ञवल्क्यः—

प्रधानं क्षत्रिये कर्म्म प्रजानां परिपालनम् ।
कुसीदकृषिवाणिज्यपाशुपाल्यं विशः स्मृतम् ॥

---

१ ऋतम् उञ्छशिलं ज्ञेयम् । तत्रोञ्छो नाम यत्र कोपि न वारयेत्तथाविधेषु क्षेत्रपरिसरापणरथ्यादिप्रदेशेषु पतितानां धान्यादिकणानामङ्गुलिभ्यामुच्चयनम् । शिलस्तु मञ्जर्यात्मकानेकधान्योच्चयनम् । अनयोः समाहार उञ्छशिलम् ।

२ मह्यं देहीति याचनामन्तरेण यदुपस्थितं तदयाचितम् ।

शूद्रस्य द्विजशुश्रूषा तयाऽजीवन् वणिग्भवेत्।
शिल्पैर्वा विविधैर्जीवेद् द्विजातिहितमाचरन्॥
(या० स्मृ० १।११९-१२०)

इति। प्रजापालनं हि क्षत्रियस्य प्रधानं कर्म्म उत्तमा वृत्तिरित्यर्थः। 'शस्त्रास्त्रभृत्त्वं क्षत्रस्ये'त्यादिना शस्त्रधारित्वादिकमप्यन्यो जीवनोपायः क्षत्रियस्यान्यत्र स्मृतः। ननु प्रजापालनं कथं जीवनोपाय इति चेद्वैश्यवृत्तिषूपदिष्टं पशुपालनं यथा पशुभ्य उपलब्धैः पयोदधिघृतादिभिर्वस्तुभिर्वैश्यस्य जीविका, तथा प्रजाभ्य आगतैः षष्ठांशादिभिः क्षत्रियस्यापि समीचीना जीविका सम्पद्यते। तथा राज्यसम्बन्ध्यनेकाधिकारोचितकर्म्मभिरपि ब्राह्मणादिवर्णानां जीविका सम्पद्यते।

यथोक्तम्—

धर्म्मकृत्येषु धर्मज्ञानर्थकृत्येषु पण्डितान्।
स्त्रीषु क्लीबान्नियुञ्जीत नीचान्नीचेषु कर्म्मसु॥ इति।

याज्ञवल्क्योऽप्याह—

तत्र[1] तत्र च निष्णातानध्यक्षान् कुशलान् शुचीन्।
प्रकुर्यादायकर्म्मान्त्र(न्त)व्ययकर्म्मसु चोद्यतान्॥
(या० स्मृ० १।३२२)।

स मन्त्रिणः[2] प्रकुर्वीत प्राज्ञान् मौलान् स्थिरान् शुचीन्।
तैः सार्द्धं चिन्तयेद्राज्यं विप्रेणाथ ततः स्वयम्॥
(या० स्मृ० १।३१२)।

---

१ तत्र तत्र धर्मार्थकामादिषु राजा अध्यक्षान् योग्यानधिकारिणः प्रकुर्यान्नियुञ्जीत।

२ स महोत्साहादिगुणैर्युक्तो राजा मन्त्रिणः कुर्वीत। कथंभूतान्। प्राज्ञान् हिताहितविवेककुशलान्। मौलान् स्ववंशपरंपरायातान्। स्थिरान् महत्यपि हर्षविषादस्थाने विकाररहितान्। शुचीन्। पवित्रवासनावतः। एवं मन्त्रिणः कृत्वा तैः सह राज्यं संधिविग्रहादिलक्षणं कार्यं चिन्तयेद्व्यस्तैः समस्तैश्च। ततस्तेषामभिप्रायं ज्ञात्वा सकलशास्त्रार्थविचारकुशलेन विप्रेण पुरोहितेन सह विचिन्त्य ततः स्वयं स्वबुद्ध्या कार्यं विचिन्तयेत्।

ये राष्ट्रेऽधिकृतास्तेषां चारैर्ज्ञात्वा विचेष्टितम्।
साधून् संमानयेद्राजा विपरीतांश्च घातयेत्॥
(या० स्मृ० १।३३८) इति।

सेयं राजनियुक्ताऽधिकारनिर्वर्त्तनेन सम्पादिता जीविका उपरिष्टादुपदिष्टां जीविकामपेक्ष्य जघन्या। स्वातन्त्र्यहानिकरत्वात्। प्रभूतधनादपि परतन्त्रादल्पधनस्यापि स्वतन्त्रस्य वरीयस्त्वाच्च।

अत एव—

यद्यत् परवशं कर्म्म तत्तद्यत्नेन वर्जयेत्।
यद्यदात्मवशं कर्म्म तत्तत्सेवेत यत्नतः॥
सर्वं परवशं दुःखं सर्वमात्मवशं सुखम्।
एतद्विद्यात्समासेन लक्षणं सुखदुःखयोः॥

इति चतुर्थाध्याये (१५९।१६०) मनुः प्रोवाच।

परवशं परप्रार्थनादिसाध्यं सर्वं कर्म्म दुःखहेतुः। आत्मवशं स्वाधीनं देहव्यापारसाध्यं सर्वं कर्म्म सुखं सुखहेतुरित्यादिस्तदर्थः। यावदात्मवशेन कर्म्मणा निजपोष्यवर्गसहितस्य स्वस्य यथोचितं जीवनं सम्पद्यते तावत् परप्रार्थनासाध्यं कर्म्म जीवनोपायत्वेन नैव स्वीकुर्यादिति यत्नेन वर्जयेदित्यनेन सूचितम्।

पोष्यवर्गश्चोक्तो दक्षेण—

माता पिता गुरुर्भार्या प्रजा हीनः समाश्रितः।
अभ्यागतोऽतिथिश्चापि पोष्यवर्ग उदाहृतः॥ इति।

प्रजा पुत्रादिसन्ततिः हीनोऽनन्यगतिको यः समाश्रितो बहुवर्षाणि स्वगृहमधिवासितः। गुरुः पितामहादिर्वृद्धः पितृव्यादिर्वा। एते च गृहमेधिना कथमपि कृत्वा पोषणीया इति भावः।

सर्वेषामपि वर्णानां स्वोचितवृत्त्या जीवनानिर्वाहरूपायामापदि जीवनोपायानाह मनुः—

विद्या शिल्पं भृतिः सेवा गोरक्ष्यं विपणिः कृषिः।
धृतिर्भैक्षं कुसीदं च दश जीवनहेतवः॥
(मनु० १०।११६) इति।

---

१ राष्ट्रेषु राज्याधिकारेषु ये नियुक्तास्तेषां चरितं चारैः सम्यग्विदित्वा साधून् सुचरितान् संमानयेत् दानमानसत्कारैः पूजयेत्। विपरीतान् दुष्टचरितान् सम्यग् ज्ञात्वा घातयेदपराधानुसारेण।

आपत्प्रकरणात् 'जीवनहेतव' इति निर्देशाच्च दशानां मध्ये यया वृत्त्या यस्य वर्णस्या(?+ना)पदि जीवनं प्रतिषिद्धं तयापि तस्यापदि जीवनमभ्यनुज्ञायते। यथा ब्राह्मणस्य भृतिसेवाशिल्पादि।

एवं वेदविद्याव्यतिरिक्ता वैद्यतर्कविषापनयनादिविद्या क्षत्रियादीनां सर्वेषां जीवनार्थं न दुष्यति। ब्राह्मणस्य तु वेदादिसर्वापि विद्या भवत्येव जीविका। विपणिर्वाणिज्यम्। धृतिः सन्तोषः। तस्मिन् सति स्वल्पवित्तेनापि जीव्यते। भैक्षं भिक्षासमूहः। कुसीदं वृद्ध्या धनप्रयोगः। एभिरुपायैरापदि जीविकां वर्त्तयेत्। आपदं निस्तीर्य पुनर्गर्हितां वृत्तिं न समाश्रयेत्।

> नेहेतार्थान् प्रसङ्गेन[1] न विरुद्धेन कर्म्मणा।
> न विद्यमानेष्वर्थेषु नार्त्यामपि यतस्ततः॥
> ( मनु० ४।१५ ) इति मनूक्तेः।

अथ द्विजातीनां धर्म्मकृत्यं समासेनोपदिशति मनुः—

> वेदोदितं स्वकं कर्म्म नित्यं कुर्यादतन्द्रितः।
> तद्धि कुर्वन् यथाशक्ति प्राप्नोति परमां गतिम्॥
> ( मनु० ४।१४ ) इति।

स्मार्त्तमपि वेदमूलकत्वाद्वेदोदितमेव। एवं च स्वकं स्वाश्रमोक्तं श्रौतं स्मार्त्तं च कर्म्म नित्यमनलसः सन् कुर्यात् यावज्जीवमनुतिष्ठेत्। हि यतस्तत् स्वकं कर्म्म यथाशक्ति कुर्वन् पुमान् परमामुत्तमां गतिं प्राप्नोति। नित्यकर्म्मानुष्ठानात् पापक्षयेण सत्त्वशुद्ध्या ब्रह्मसाक्षात्कारान्मोक्षसिद्धेरिति भावः।

तत्र तावद्रात्रेरुपान्त्यो मुहूर्त्तो ब्राह्माह्वयस्तस्मिन् प्रबुध्य परमेश्वरानुध्यानपूर्वकं वृत्तं वर्त्तिष्यमाणं च स्वहितं वेदार्थसंशयांश्च चिन्तयेत्। तदानीं चित्तस्याव्याकुलत्वेन तत्त्वप्रतिभासयोग्यत्वात्। ततो धर्म्मार्थकामान् यथोक्तकाले यथाशक्ति सेवेत।

यदाह याज्ञवल्क्यः—

> ब्राह्मे मुहूर्त्ते उत्थाय चिन्तयेदात्मनो हितम्।
> धर्मार्थकामान् स्वे काले यथाशक्ति न हापयेत्॥
> ( या० स्मृ० १।११५ ) इति।

---

१ प्रसज्यते यत्र पुरुषः स प्रसङ्गो गीतवादित्रादिस्तेनार्थान् धनानि नेहेत नोपार्जयेत्।

अथातः कृतशौचविधिः पुमान् नद्यादौ विमलैर्जलैर्विधिवत् स्नात्वा धौते वाससी परिधायाचम्य प्राणानायम्य समाहितो भूत्वा प्रातःसंध्यामुपासीत । संध्योपासनं हि द्विजातिभिरुपात्तदुरितक्षयार्थं नित्यमनुष्ठेयम् इत्याह मनुः--

पूर्वां संध्यां जपंस्तिष्ठन् नैशं पापं व्यपोहति ।
पश्चिमां तु समासीनो हन्ति पापं दिवाकृतम् ॥
न तिष्ठति तु यः पूर्वां नोपास्ते यस्तु पश्चिमाम् ।
स शूद्रवद्बहिष्कार्यः सर्वस्मात् द्विजकर्म्मणः ॥

( मनु० २।१०२-१०३ ) इति ।

एवमायुरादिकरं सन्ध्योपासनमित्यपि प्रोवाच स एव--

ऋषयो दीर्घसन्ध्यत्वाद्दीर्घमायुरवाप्नुयुः ।
प्रज्ञां यशश्च कीर्त्तिं च ब्रह्मवर्चसमेव च ॥

( मनु०४।९४ ) इति ।

दीर्घसन्ध्यत्वाद्दीर्घकालं सन्ध्यानुष्ठानादित्यर्थः । अत्र सन्ध्यापदमहोरात्रयोः सन्धिकाले या क्रिया विधीयते तद्वाचकम् । तत्प्रख्यतया कर्म्मनामधेयत्वाद्दर्शपूर्णमासादिवत् । तत्र संम्पूर्णादित्यमण्डलदर्शनयोग्यः कालोऽहः । तद्विपरीता रात्रिः । यत्र तु काले सूर्यमण्डलखण्डस्योपलब्धिः स सन्धिकालः सन्ध्याकालः । स च प्रातः सायं चेति द्विविधः । द्वयोरपि सन्ध्ययोः शौचाचमनप्राणायाममार्जनादिकमङ्गम्, सावित्र्या ऋचोऽर्थानुसन्धानपूर्वकमानसिकोच्चारणलक्षणं जपाख्यं कर्म्म तु प्रधानम् । मन्वादिस्मृतिषु सावित्रीजपस्यैव प्राधान्यतः संकीर्त्तनात्, तस्यैव च फलमाहात्म्यबोधनात् ।

यथाह मनुः—

आचम्य प्रयतो नित्यमुभे सन्ध्ये समाहितः ।
शुचौ देशे जपन् जप्यामुपासीत यथाविधि ॥

( मनु० २।२२२ ) इति ।

जप्यां सावित्रीमृचमित्यर्थः ।

तथा च याज्ञवल्क्यः—

प्राणानायम्य सम्प्रोक्ष्य तृचेनाब्दैवतेन तु ।
जपन्नासीत सावित्रीं प्रत्यगातारकोदयात् ॥
सन्ध्यां प्राक् प्रातरेवं हि तिष्ठेदासूर्यदर्शनात् ।

( या० स्मृ० १।२४-२५ ) इति ।

अब्दैवतेन तृचेन 'आपो हि ष्ठा मयोभुवः' इत्यादिना ऋक्त्रितयेन सम्प्रोक्ष्य आत्मानं मार्जयित्वा सायंकाले प्रत्यक् प्रत्यङ्मुखो भूत्वा आतारकोदयात् सावित्रीं जपन् सन्नासीत उपविशेत्। उपविश्य जपेदिति भावः। प्रातस्तु प्राङ्मुखो भूत्वा आसूर्यमण्डलदर्शनात् सावित्रीं जपन्सन् तिष्ठेत्। स्थित्वा जपेदित्यर्थः।

तथा—

अकारं चाप्युकारं च मकारं च प्रजापतिः।
वेदत्रयान्निरदुहद्भूर्भुवःस्वरितीति च ॥
त्रिभ्य एव तु वेदेभ्यः पादं पादमदूदुहत्।
तदित्यृचोऽस्याः सावित्र्याः परमेष्ठी पितामहः ॥[1]
एतदक्षरमेतां[2] च जपन् व्याहृतिपूर्विकाम्।
सन्ध्ययोर्वेदविद्विप्रो वेदपुण्येन युज्यते ॥

(मनु० २।७६-७८)।

इत्यपि मनुराह।

अथाहिताग्निश्चेच्छ्रौतं स्मार्तं च नित्यहोमं विधाय देवतार्चनं कुर्यात्। अनाहिताग्निस्तु सन्ध्योपासनोत्तरं देवतार्चनमेव कुर्यात्।

तच्च पूर्वाह्णे कार्यम्।

मैत्रं[3] प्रसाधनं स्नानं दन्तधावनमञ्जनम्।
पूर्वाह्ण एव कुर्वीत देवतानां च पूजनम् ॥

(मनु० ४।१५२) इति मनूक्तेः।

अत्र पूर्वाह्णशब्देन रात्रिशेषदिनपूर्वभागौ विवक्षितौ। पदार्थमात्रविधिपरत्वाच्चैतद्वाक्यस्थः पाठक्रमो न विवक्षितः। न हि स्नानानन्तरं दन्तधावनमुचितं भवति। देवार्चनमपि सन्ध्योपासनादिवत् प्रत्यहमनुष्ठेयम्। 'अथातोऽहरहः परिचर्याविधिं व्याख्यास्याम' इत्यादिना बौधायनेन शिवाद्यर्चनविधेः प्रत्यहं कर्तव्यतयोपदिष्टत्वात्।

तथा—

ब्रह्माणं शंकरं सूर्यं तथैव मधुसूदनम्।
अन्यांश्चाभिमतान् देवान् भक्त्या त्वक्रोधनो नरः ॥

---

१ तदिति मन्त्रप्रतीकप्रदर्शनार्थम्। एवं च तत् सवितुर्वरेण्यमित्यस्याः सावित्र्याः सवितृदेवत्याया ऋचः पादं पादमिति योजना। २ एतदक्षरम् प्रणवाख्यम्। ३ मित्रदेवताकत्वान्मैत्रः पायुस्तद्भवत्वान्मैत्रं पुरीषोत्सर्जनम्।

स्वैर्मन्त्रैरर्चयेन्नित्यं गन्धपुष्पैस्तथाऽम्बुभिः ॥

इति कूर्मपुराणेऽप्यर्चयेन्नित्यमित्युक्तेः।

पूजायतनान्युक्तान्यग्निपुराणे—

अप्स्वग्नौ हृदये सूर्ये स्थण्डिले प्रतिमासु च।
षट्स्वेतेषु हरेः सम्यगर्चनं मुनिभिः स्मृतम् ॥ इति।

अत्र हरेरिति अर्चनीयदेवतोपलक्षणम्।

तथा तत्रैव पुराणे—

अर्चनं सम्प्रवक्ष्यामि विष्णोरमिततेजसः

इत्यादिना पुरुषसूक्तस्य षोडशभिर्ऋग्भिरावाहनमासनं पाद्यमर्घ्यमाचमनीयं स्नानं वस्त्रमुपवीतं चन्दनं पुष्पाणि धूपो दीपो नैवेद्यं नमस्कारः प्रदक्षिणा विसर्जनं चेत्येते षोडषोपचाराः कर्त्तव्यतयोपदिष्टाः। तत्रावाहनविसर्जने शालिग्रामशिलायां न कार्ये इति स्कान्दे उक्तम्—

शालिग्रामार्चने न स्त आवाहनविसर्जने।
शालिग्रामे हि भगवान् नित्यं सन्निहितो हरिः ॥ इति।

एवं बौधायनाद्युक्तप्रतिष्ठाविधिना प्रतिष्ठापितायां स्थिरायां चलायां वाऽर्चायामपि आवाहनविसर्जने प्रतिषिद्धे एव। यत्रावाहनविसर्जनयोर्निषेधस्तत्राद्यन्ताभ्यामृग्भ्यामादावन्ते च पुष्पाञ्जली समर्पयेदिति स्पष्टं रामार्चनचन्द्रिकादौ ॥

बुद्धिवृद्धिकराण्याशु धन्यानि च हितानि च।
नित्यं शास्त्राण्यवेक्षेत निगमांश्चैव वैदिकान् ॥
यथा यथा हि पुरुषः शास्त्रं समधिगच्छति।
तथा तथा विजानाति विज्ञानं चास्य रोचते ॥

( मनु० ४।१९-२० )

इति वदता मनुना शास्त्राद्यवेक्षणं प्रत्यहं कर्त्तव्यमित्युपदिष्टम्।

गृहस्थेन स्वविभवानुसारतो दानधर्म्मोऽपि प्रत्यहं यथाशक्ति समनुष्ठेय इत्याह याज्ञवल्क्यः—

दातव्यं प्रत्यहं पात्रे निमित्तेषु विशेषतः।
याचितेनापि दातव्यं श्रद्धापूतं तु शक्तितः ॥

( या० स्मृ० १।२०३ ) इति।

तथा मनुरप्याह—

यत्किंचिदपि दातव्यं याचितेनानसूयया।

उत्पत्स्यते हि तत्पात्रं यत्तारयति सर्वतः ॥
(मनु० ४।२२८) इति ।

याचितेन मह्यं देहीति याचकप्रार्थितेन पुरुषेण यत् किञ्चिदपि स्वल्पमन्नादिकमपि अनसूयया मत्सरमकृत्वा दातव्यम् । हि यतः कारणात् सर्वदा दानशीलं नरं प्रति तत् तथाविधं पात्रमुत्पत्स्यते आगमिष्यति । यत् सर्वतः सर्वस्मान्नरकहेतोः पातकात् तारयिष्यतीत्यर्थः । याचितेनेत्युपलक्षणमयाचितेनापि दातव्यमिति तात्पर्यम् । अत एव याज्ञवल्क्येन 'याचितेनापि दातव्य'मित्यपिशब्दः प्रयुक्तः । यत्सर्वस्मान्नरकहेतोस्तारयति तथाविधस्योत्तमपात्रस्य लक्षणमाह याज्ञवल्क्यः—

न विद्यया केवलया तपसा वापि पात्रता ।
यत्र वृत्तमिमे चोभे तद्धि पात्रं प्रकीर्त्तितम् ॥
(या०स्मृ० १।२००) इति ।

केवलया विद्यया श्रुताध्ययनसम्पत्त्या नैव सम्पूर्णपात्रत्वम्, नापि केवलेन तपसा शमदमादिना । अपिशब्दात् केवलेन जात्यादिना नैव सम्पूर्णपात्रत्वम् । कथं तर्हि तदिति चेत् । यत्र पुरुषे वृत्तमनुष्ठानमिमे चोभे विद्यातपसी स्तः । चशब्दाद्ब्राह्मणजातिश्च[1] । तदेव मन्वादिभिः सम्पूर्णपात्रं प्रकीर्त्तितम् । हि यस्मादतः परमुत्कृष्टं पात्रं नास्ति ।

अत्र जातिविद्यावृत्ततपःसमुच्चयानामुत्तरोत्तरोत्तमत्वेन पात्रतारतम्यात् फलतारतम्यं द्रष्टव्यमिति विज्ञानेश्वरो व्याचख्यौ । तथा च प्रोवाच मनुः—

सममब्राह्मणे[2] दानं द्विगुणं ब्राह्मणब्रुवे[3] ।
प्राधीते[4] शतसाहस्रमनन्तं वेदपारगे ॥

---

१ एतच्च भगवता पतञ्जलिना स्पष्टीकृतम् "तपः श्रुतं च योनिश्चेत्येतद् ब्राह्मणकारकम् । तपःश्रुताभ्यां यो हीनो जातिब्राह्मण एव सः ॥, त्रीणि यस्यावदातानि योनिर्विद्या च कर्म च । एतच्छिवे विजानीयाद् ब्राह्मणाग्र्यस्य लक्षणम् ॥" इति दाधिमथाः ।

२ अब्राह्मणे क्षत्रियादौ यद्दानं तत् समम् समफलं नाधिकं नाप्यूनम् ।

३ यो ब्राह्मणः क्रियारहित आत्मानं ब्राह्मणं ब्रवीति स ब्राह्मणब्रूस्तद्विषयकं दानं पूर्वापेक्षया द्विगुणम् ।

४ प्राधीते प्रारब्धाध्ययने ।

पात्रस्य हि विशेषेण श्रद्दधानतयैव च।
अल्पं वा बहु वा प्रेत्य दानस्यावाप्यते फलम्॥
(मनु० ७।८५-८६) इति।

दानधर्म्मफलमाहात्म्यमृग्वेदेऽपि श्रूयते—

उच्चा दिवि दक्षिणावन्तो अस्थुर्ये अश्वदाः सह ते सूर्येण।
हिरण्यदा अमृतत्वं भजन्ते वासोदाः सोम प्रतिरन्त आयुः॥
(ऋ० वे० १०।१०७।२) इति।

ये दक्षिणावन्तोऽश्वदाः सदक्षिणाकमश्वदानं कृतवन्तस्ते उच्चा उत्कृष्टाः सन्तो दिवि स्वर्गे सूर्येण सहास्थुस्तिष्ठन्ति स्म। हिरण्यदातारोऽमृतत्वं मोक्षं भजन्ते, वासोदा वस्त्रदातारः। सोमेति लुप्तसप्तमीकं लक्षणया सोमलोकपरम्। तथा च सोमलोके आयुः प्रतिरन्ते नयन्तीत्यर्थः।

तथा चोक्तं मनुना—

वासोदः सोमसालोक्यमश्विसालोक्यमश्वदः।
अनुडुहः श्रियं पुष्टां गोदो ब्रध्नस्य विष्टपम्॥
(मनु० ४।२३१) इत्यादि।

अथ गृहस्थस्य पञ्चमहायज्ञानुष्ठानं सकारणमाह मनुः—

पञ्च सूना गृहस्थस्य चुल्ही पेषण्युपस्करः।
कण्डनी चोदकुम्भश्च बध्यते यास्तु वाहयन्॥
तासां क्रमेण सर्वासां निष्कृत्यर्थं महर्षिभिः।
पञ्च कृता महायज्ञाः प्रत्यहं गृहमेधिनः॥
(मनु० ३।६८-६९) इति।

पशुवधस्थानं सूनापदेन व्यवह्रियते। हिंसास्थानगुणयोगाच्चुल्ह्यादयोऽपि सूना इव सूनाः। चुल्ही उद्धाहनी। पेषणी दृषदुपलात्मिका घरट्टात्मिका च। उपस्करः गृहोपकरणकुण्डसम्मार्जन्यादिः। कण्डनी उलूखलमुसले। उदकुम्भो जलाधारकलशः।

या एताः पञ्च व्यक्तीर्वाहयन् तत्तत्कार्ये योजयन् गृहस्थो बध्येत सूनादोषेण। अलक्षितहिंसायास्ततः सम्भवादिति भावः।

तेषां स्वरूपाण्याहाश्वलायनः—

'अथातः पञ्च यज्ञा देवयज्ञो भूतयज्ञः पितृयज्ञो ब्रह्मयज्ञो मनुष्ययज्ञः' (आश्व० गृ० ३।१।१-२) इति। 'तद्यदग्नौ जुहोति स देवयज्ञो,

१ तारतम्येन। २ श्रद्दधानस्य दातुर्भावः श्रद्धानता इतिकर्त्तव्यताप्रत्ययतारतम्यम् तयाऽपि चेत्यर्थः।

यद्बलिं करोति स भूतयज्ञो, यत् पितृभ्यो ददाति स पितृयज्ञो, यत् स्वाध्यायमधीते स ब्रह्मयज्ञो, यन्मनुष्येभ्यो ददाति स मनुष्ययज्ञ इति, तानेतान् यज्ञानहरहः कुर्वीत' ( आश्व० गृ० ३।१।३-४ ) इति। अस्य सूत्रवाक्यस्य यज्ञपदार्थविधानमात्रपरत्वात् पाठक्रमो न विवक्षितः। एवं च प्रथमतो ब्रह्मयज्ञमनुष्ठाय ततः परेऽनुष्ठेया इति बोध्यम्। अत एव क्रमतः पञ्चभिर्यज्ञैर्यजेत् काय तदाह मनुः—

स्वाध्यायेनार्चयेदृषीन् होमैर्देवान् यथाविधि।
पितॄन् श्राद्धैश्च नॄनन्नैर्भूतानि बलिकर्म्मणा॥
( मनु० ३।८१ ) इति।

ब्रह्मयज्ञं करिष्यन् पुमान् स्वयं शुचिर्भूत्वा शुचौ देशे प्रागग्रदर्भास्तरणे उपविश्याचम्य प्राणानायम्य सव्ये जानुनि दक्षिणं पादं कृत्वा दक्षिणजानुनि दर्भद्वयगर्भं सव्यदक्षिणपाणिभ्यां कृतं ब्रह्माञ्जलिं निधाय द्यावापृथिव्योः सन्धिमीक्षमाणो निमीलितलोचनो वा समाहितो भूत्वा सप्रणवं व्याहृतित्रयं सकृत् पठित्वा ऋचो यजूंषि सामानि अथर्वाङ्गिरसो[1] ब्राह्मणानि[2] कल्पान्[3] गाथा[4] नाराशंसीरितिहासपुराणानीति[5] स यावन्मन्येत तावदधीत्य 'नमो ब्रह्मणे नमो अस्त्वग्नये नमः पृथिव्यै नम ओषधीभ्यः। नमो वाचे नमो वाचस्पतये नमो विष्णवे महते करोमी' त्येतयर्चा समापयेत्। एवं ब्रह्मयज्ञमनुष्ठाय तदङ्गत्वेन विहितं देवर्ष्याचार्यपितृगणतर्पणं देवादितीर्थेन[6] शुद्धाभिरद्भिः कुर्यात्।[7]

---

१ आथर्वणमन्त्रान्। २ ऐतरेयादीनि। ३ कल्पान् अग्निहोत्रादिकर्म्मावबोधकान् सूत्रग्रन्थान्। ४ इन्द्रादिदेवगाथा यज्ञगाथाश्च। ५ रुद्रदेवत्या ऋचो नाराशंसीः। इतिहासान् भारतादीन्। पुराणानि ब्राह्मादीनि। साङ्गोपाङ्गवेदस्य स्वाध्यायपदवाच्यत्वाच्छिक्षाव्यकारणादीन्यङ्गानि, धर्मशास्त्रादीन्युपाङ्गानि च, यथाशक्ति पठनीयानि ब्रह्मयज्ञे इति ध्येयम्। ६ देवतीर्थेन देवानां, प्रजापतितीर्थेनर्ष्याचार्याणां, पितृतीर्थेन पितॄणां तर्पणविधिः कार्यः। अङ्गुलीनामग्रभागे दैवं तीर्थम्, कनिष्ठाङ्गुलिमूलभागे प्राजापत्यम्, तथा अङ्गुष्ठतर्जन्योर्मध्ये पित्र्यं तीर्थं वेदितव्यम्। तथा च याज्ञवल्क्यः—'कनिष्ठादेशिन्यङ्गुष्ठमूलान्यग्रं करस्य च। प्रजापतिपितृब्राह्मदेवतीर्थान्यनुक्रमात्' ( या० स्मृ० १।१९ ) इति। अङ्गुष्ठमूलस्याधोभागे ब्राह्मं तीर्थं तेन सर्वदा विप्रादिराचामेत् 'ब्राह्मेण विप्रस्तीर्थेन नित्यकालमुपस्पृशेत्' ( मनु० २।५८ ) इति मनूक्तेः। ७ अत्र आश्वलायनगृह्यसूत्रे तृतीयाध्यायस्य तृतीया चतुर्थी च कण्डिका द्रष्टव्या। [ मं० दे० शा० ]

अथ वैश्वदेवः—

अनेन कर्म्मणा देवयज्ञभूतयज्ञपितृयज्ञानां सिद्धिर्भवति। तत्र सूर्याग्निप्रभृतिदेवतोद्देशेन यदग्नौ हूयते स देवयज्ञः। यद्भूमौ बलिहरणं क्रियते स भूतयज्ञः। स्वधाकारेण पितृभ्यो यदन्नोदकं प्रदीयते स पितृयज्ञ इति। एवं वैश्वदेवकर्म्मणा पितृयज्ञस्य सम्पाद्यमानत्वान्नित्यश्राद्धमनावश्यकमिति सत्यप्यानुकूल्ये शिष्टा न प्रायः कुर्वन्ति।

अत एव नित्यश्राद्धं प्रक्रम्य तत्कालाः स्मृताः—

एतेन विधिना श्राद्धं कुर्यात् सांवत्सरं सकृत्।
त्रिश्चतुर्वा यथाश्राद्धं मासे मासे दिने दिने॥ इति।

एवं मनुष्ययज्ञोऽपि वैश्वदेवकर्म्मणि 'सनकादिमनुष्येभ्यो हन्ते'ति हन्तकारेण भूमौ प्रदीयमानेनान्नेन सिद्ध्यति। परन्तु सति सम्भवे समयप्राप्तस्यातिथेर्यत् सत्कृत्यान्नादिभिः सम्भावनं स मुख्यो मनुष्ययज्ञः 'नृयज्ञोऽतिथिपूजनम्' (मनु० ३।७०) इति मन्वादिस्मरणात्।

अतिथिलक्षणमाह याज्ञवल्क्यः—

अध्वनीनोऽतिथिर्ज्ञेयः श्रोत्रियो वेदपारगः।
मान्यावेतौ गृहस्थस्य ब्रह्मलोकमभीप्सतः॥
(या० स्मृ० १।१११) इति।

अध्वनि वर्त्तमानोऽतिथिर्वेदितव्यः। तथा अध्वनि वर्त्तमानः श्रोत्रियो वेदपारगश्चेत्येतौ ब्रह्मलोकमभीप्सतो गृहस्थस्य मान्यावतिथी वेदितव्यौ। श्रुताध्ययनसम्पन्नः श्रोत्रियः। एकशाखाऽध्ययनक्षमो वेदपारगः।

अतिथिशब्दार्थस्तु अनित्यावस्थानान्न विद्यते द्वितीया तिथिरस्येत्यतिथिरिति।

तदुक्तं मनुना—

एकरात्रं तु निवसन्नतिथिर्ब्राह्मणः स्मृतः।
अनित्यं हि स्थितो यस्मात्तस्मादतिथिरुच्यते॥
(मनु० ३।१०२) इति।

यो हि विद्यातपःशीलजात्यादिभिरात्मन उत्कृष्टः समो वा स पान्थः स्वस्यातिथिरिति सर्वसाधारण्येन स्मृतं मन्वादिभिः। तथा च ब्राह्मणस्य गृहे ब्राह्मण एव न क्षत्रियादिः। क्षत्रियस्य गृहे ब्राह्मणः

क्षत्रियश्चातिथिर्वेदितव्यौ न वैश्यादिरिति यथायथं वेदितव्यम्। वैश्वदेवानन्तरमतिथिकाले उपस्थिता ब्राह्मणादयः सर्वेऽपि स्वाधिकारानुरूपेण भोजनाद्यातिथ्येन विप्रादिभिर्यथाशक्ति सम्माननीया एव न प्रत्याख्येया इत्याह याज्ञवल्क्यः—

अतिथित्वेन वर्णानां देयं शक्त्याऽनुपूर्वशः।
अप्रणोद्योऽतिथिः सायमपि वाग्भूतृणोदकैः॥
(या० स्मृ० १।१०७) इति।

वर्णानां ब्राह्मणादीनामतिथित्वेन युगपत् प्राप्तानां वर्णानुपूर्व्येण यथाशक्ति देयम्। सायंकालेऽपि यद्यतिथिरागच्छति तदाप्यसावप्रणोद्यो न प्रत्याख्येयः। यद्यप्यदनीयं किमपि न विद्येत, तथापि वाग्भूतृणोदकैरपि सत्कार्य इत्यर्थः।

मनुरप्याह—

तृणानि भूमिरुदकं वाक् चतुर्थी च सूनृता।
एतान्यपि सतां गेहे नोच्छिद्यन्ते कदाचन॥
(मनु० ३।१०१) इति।

अतिथिकाले समागतान् पाखण्डिप्रभृतींस्तु वाण्यापि न सम्भावयेदित्याह मनुः—

पाख(ष)ण्डिनो[1] विकर्म्मस्थान् बैडालव्रतिकान् शठान्।
हैतुकान् बकवृत्तींश्च वाङ्मात्रेणापि नार्चयेत्॥
(मनु० ४।३०) इति।

सर्वान् सन्तर्प्यावशिष्टमन्नं गृहस्थेन भोक्तव्यमित्याह मनुः—

देवानृषीन् मनुष्यांश्च पितॄन् गृह्याश्च देवताः।
पूजयित्वा ततः पश्चाद्गृहस्थः शेषभुग्भवेत्॥

---

१ पाखण्डिनो वेदबाह्यव्रतलिङ्गधारिणः। विकर्मस्था दुराचाराः। 'धर्मध्वजी सदालुब्धश्छाद्मिको लोकदम्भकः। बैडालव्रतिको ज्ञेयो हिंस्रः सर्वाभिसन्धकः॥' (मनु० ४।१९५) इति मनूक्तलक्षणो बैडालव्रतिकः। यो हि बहुजनसमक्षं धर्ममाचरन् स्वतः परतश्च लोके ख्यापयति तस्य धर्मो ध्वज इव चिह्नमिवास्तीति स धर्मध्वजी। शठा वेदेष्वश्रद्दधाना धूर्त्ताः। हैतुका वेदविरोधितर्ककुशलाः। बकवृत्तिस्तु मनुना लक्षितः। यथा—'अधोदृष्टिर्नैष्कृतिकः स्वार्थसाधनतत्परः। शठो मिथ्याविनीतश्च बकव्रतधरो द्विजः'॥ (मनु० ४।१९६) इति बिडालो बकश्च

अघं स केवलं भुङ्क्ते यः पचत्यात्मकारणात्।
यज्ञशिष्टाशनं ह्येतत् सतामन्नं विधीयते॥
( मनु० ३।११७-११८ ) इति।

भोजनोत्तरकालं कर्त्तव्यमाह याज्ञवल्क्यः—

अतिथिं श्रोत्रियं तृप्तमासीमान्तमनुव्रजेत्।
अहःशेषं सहासीत शिष्टैरिष्टैश्च बन्धुभिः॥
( या० स्मृ० १।११३ ) इति।

न साधारणमतिथिं, किन्तु श्रोत्रियं श्रुताध्ययनसंपन्नं तृप्तमतिथिं सीमान्तपर्यन्तमनुव्रजेत्। शिष्टैरितिहासपुराणादिवेदिभिः। इष्टः काव्यकथाप्रपञ्चचतुरैः। बन्धुभिः सुहृदादिभिः सह पुराणादिप्रसङ्गजनितानन्देन दिनशेषं नयेत्। तदनन्तरं यत्कर्त्तव्यं तदपि प्रोवाच सः—

उपास्य पश्चिमां सन्ध्यां हुत्वाऽग्नींस्तानुपास्य च।
भृत्यैः परिवृतो भुक्त्वा नातितृष्णश्च संविशेत्॥
( या० स्मृ० १।११४ ) इति।

नातितृष्णः स्वायव्ययादिरूपां गृहचिन्तां निर्वर्त्य निराकुलः सन् स्वप्यात्।

इत्याह्निकविधिः संक्षिप्योक्तः।

ननु यस्योपनयनादिना वेदाध्ययनाधिकारसिद्धिः स एव श्रौते स्मार्त्ते वा कर्म्मण्यधिक्रियते शूद्रस्तूपनयनानर्हो वेदानधिकारीति न क्वापि धर्म्मकर्म्मण्यधिकारी स्यादिति चेत्। मैवम्। वेदोपजीव्येषूपनयनवेदब्रह्मचर्याऽग्निहोत्रादिकर्म्मसु शूद्रस्याधिकाराभावेऽपि बहुषु नित्यनैमित्तिककाम्यादिकर्म्मसु तस्याधिकारसिद्धौ प्रतिबन्धकाऽभावात्। अत एव

शूद्रोऽप्येवंविधः कार्यो विना मन्त्रेण संस्कृतः।

इति यमस्मृतिवचनेनामन्त्रका गर्भाधानादिसंस्काराः शूद्रस्य विहिताः।

तथा—

चत्वारो ब्राह्मणस्योक्ता आश्रमाः श्रुतिचोदिताः।
क्षत्रियस्य त्रयः प्रोक्ता द्वावेको वैश्यशूद्रयोः॥

---

यथा मूषकमीनादिहिंसारुचिस्सन् प्रायेण ध्याननिष्ठः सुविनित इवावतिष्ठते तथायमपि बैडालव्रतिको बकवृत्तिकश्चेति संज्ञाद्वयतात्पर्यम्।

इति वदता याज्ञवल्क्येन शूद्रस्य गृहस्थाश्रमधर्म्माधिकारः स्फुटमेवाभिहितः। किंच गृहस्थाश्रमोचितानि कर्म्माणि शूद्रेण कथमनुष्ठेयानि तत्राप्युवाच याज्ञवल्क्यः—

भार्यारतिः शुचिर्भृत्यभर्त्ता श्राद्धक्रियारतः।
नमस्कारेण मन्त्रेण पञ्च यज्ञान् न हापयेत्॥
(या० स्मृ० १।१२१) इति।

भार्यायामेव, न साधारणस्त्रीषु, न वा परस्त्रीषु रतिरभिगमनं यस्य स तथोक्तः। शुचिर्विप्रवद्बाह्याभ्यन्तरशौचयुक्तः। भृत्यादेर्भर्त्ता। श्राद्धक्रियारतः श्राद्धानि नित्यनैमित्तिककाम्यानि क्रियास्त्वविरुद्धानि स्नातकव्रतानि तेषु रतः। नम इत्यनेन मन्त्रेण पूर्वोक्तान् पञ्च महायज्ञान् न हापयेत् अहरहरनुतिष्ठेत्। नमस्कारमन्त्रश्च केचित्

देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च।
नमः स्वाहायै स्वधायै नित्यमेव नमो नमः॥

इति वर्णयन्ति। नम इत्यन्ये। तत्र वैश्वदेवो लौकिकेऽग्नौ कर्त्तव्यो न वैवाहिकेऽग्नावित्याचार्या इति विज्ञानेश्वरो व्याचख्यौ।

ननु 'तद्वा एतत् श्मशानं यच्छूद्रः तस्माच्छूद्रसमीपे नाध्येतव्यम्' इति स्मर्यते। ततश्च तस्याध्ययनप्रतिषेधोऽप्यर्थत एव सिद्धो न मानान्तरमपेक्षते। यस्य हि समीपे नाध्येतव्यं भवति स कथमश्रुतमधीयीत। कण्ठरवेणापि निषेधाः स्मर्यन्ते महर्षिभिः—

न शूद्राय मतिं दद्यान्नोच्छिष्टं न हविष्कृतम्।
न चास्योपदिशेद्धर्मं न चास्य व्रतमादिशेत्॥
इति ४ अध्याये (श्लो० ८०) मनुः।

तथा—

इज्याध्ययनदानानि वैश्यस्य क्षत्रियस्य च।
प्रतिग्रहोऽधिको विप्रे याजनाध्यापने तथा॥
(या० स्मृ० १।११८)

इति याज्ञवल्क्यः।

अपि च दशमेऽध्याये मनुः सस्मार—

न शूद्रे पातकं किंचिन्न स संस्कारमर्हति।
नास्याधिकारो धर्म्मेऽस्ति न धर्म्मात् प्रतिषेधनम्॥
(मनु० १०।१२६)

इतीति चेत्। सत्यम्। परंत्वसौ प्रतिषेधो नावैदिकाध्ययनयज्ञादि-धर्म्मानुष्ठानस्य किंतु वैदिकस्यैव। अन्यथा बहूनां स्मृतिवचनानां परस्परविरोधः प्रसज्येत। तथाहि द्वितीयेऽध्याये–'श्रद्दधानः शुभां विद्यामाददीतावरादपि' (मनु० २।२३८) इति नीचाच्छूद्रादेरपि विद्यास्वीकरणम्। तथा दशमेऽध्याये आपदि सर्वेषां जीवनहेतुषु—'विद्या शिल्पं भृतिः सेवा' (मनु० १०।११६) इत्यादिना प्रोक्तेषु विद्यायाः परिगणनम् मनुना यत् स्मृतं तत् सामान्यतः शूद्रस्य विद्या-मात्रानधिकारे विरुध्येत। तस्माद्वेदविद्यायां नास्त्यधिकारः शूद्रस्येत्येव सिद्ध्यति। किंच 'अस्य वेदमुपशृण्वतस्त्रपुजतुभ्यां श्रोत्रपूरणम्' (गौ० ध० १२।४ द्रष्टव्यम्) इत्यादिस्मृतिवचनैर्वेदश्रवणादावेव यथा शूद्रस्यानधिकारो बोध्यते, न तथा वेदातिरिक्तविद्याश्रवणादौ। अत एव भगवता शंकराचार्येण विद्याधिकाराधिकरणशेषे सूत्रभाष्ये उक्तम्–'श्रावयेच्चतुरो वर्णान्—इति च इतिहासपुराणाधिगमे चातुर्व-र्ण्याधिकारस्मरणात्। वेदपूर्वकस्तु नास्त्यधिकारः शूद्रस्येति स्थितम्' (वे० सू० शां० भा० १।३।३८) इति। तथा भारतीतीर्थमुनीश्वरेणापि वेदान्ताधिकरणमालायाम्—

शूद्रोऽधिक्रियते वेदविद्यायामथवा न हि।
अत्रैवर्णिकदेवाद्या इव शूद्रोऽधिकारवान्॥

इति पूर्वपक्षं कृत्वा—

देवाः स्वयंभातवेदाः शूद्रोऽध्ययनवर्जनात्।
नाधिकारी श्रुतौ स्मार्त्ते त्वधिकारो न वार्यते।

इति सिद्धान्तितम्।

एवं वैदिकावैदिकसाधारण्येन धर्म्मक्रियामात्रे शूद्रस्यानधिकार इत्यपि न वक्तुं शक्यते। उदाहृतयोर्मयाज्ञवल्क्यस्मृतिवचनयोर्व्या-कोपप्रसङ्गात्।

---

१ जैमिनीयन्यायमालायामपि (६।१।७) 'शूद्रोऽपि यष्टा नो वा स्यादवैधा-ध्ययनेन वा। उपदेष्टृमुखाद्वाऽस्य क्रतुवित्त्वेन यष्टृता॥ त्रिवर्णैर्वेदविद्भिः कृतार्थो विधयः क्रतोः। नाक्षिपन्ति चतुर्थस्य विद्यां तद्यष्टता कुतः॥ इत्येव सिद्धान्तितम्। इति दाधिमथाः।

धर्मेप्सवस्तु धर्मज्ञाः सतां वृत्तमनुष्ठिताः ।
मन्त्रवर्ज्जं न दुष्यन्ति प्रशंसामाप्नुवन्ति च ॥
( मनु० १०।१२७ )

इति दशमेऽध्याये स्थितेन मनुवचनेन सह विरोधापाताच्च । तस्मात् सुष्ठूक्तं शूद्रमुद्दिश्य योगीश्वरेण याज्ञवल्क्येन–

भार्यारतिः शुचिर्भृत्यभर्त्ता श्राद्धक्रियापरः ।
नमस्कारेण मन्त्रेण पञ्चयज्ञान् न हापयेत् ॥
( या० स्मृ० १।१२१ ) इति दिक् ॥

---

श्राद्धं कुर्यात् प्रमीतानां पितॄणां तृप्तिहेतवे ।
दर्शसंक्रान्तिमन्वादियुगाद्यादिषु पर्वसु ।
अन्यत्रापि निमित्तेषु पितॄन् यः श्राद्धकर्म्मणा ।
पूजयेत् स गृही सर्वान् कामानाप्नोत्यभीप्सितान् ॥

श्राद्धपदार्थमाह मरीचिः—

प्रेतं पितॄंश्च निर्द्दिश्य भोज्यं यत् प्रियमात्मनः ।
श्रद्धया दीयते यत्तु तच्छ्राद्धं परिकीर्त्तितम् ॥ इति ।

प्रमीतः पित्रादिः प्राक् सपिण्डीकरणात् प्रेतपदेनाभिधीयते । तथा च मृतं पित्रादिकमुद्दिश्य यदात्मनः प्रियं भोजनादिकं ब्राह्मणाय श्रद्धया दीयते तच्छ्राद्धमित्यर्थः ।

तच्चतुर्विधम्—

एकोद्दिष्टसपिण्डनपार्वणनान्दीश्राद्धभेदात् ।
विश्वेदेवविहीनमेकपिण्डयुतं
यदेकोद्देश्यकं श्राद्धं तदेकोद्दिष्टमुच्यते ॥
पित्रर्घ्यपात्रपिण्डेषु मेलनं येन भाव्यते ।
प्रेतार्घ्यपिण्डयोस्तद्धि सपिण्डनमुदीर्यते ॥

दर्शरविसंक्रमादिपर्वणि यत् क्रियते तत् पार्वणश्राद्धम् ॥

अग्न्याधानसोमयागादेः पुत्रजन्मविवाहादेश्च शुभकर्म्मणः प्रारम्भे यदङ्गतयानुष्ठीयते तन्नान्दीश्राद्धम् ।

तत्र तावदेकोद्दिष्टं त्रिविधम्—

नव-नवमिश्र-पुराणभेदात्।

तत्र मृतस्य पित्रादेः प्रथमदिनमारभ्य दशाहान्तं विहितानि श्राद्धानि नवानीत्युच्यन्ते।

एकादशाद्यूनाब्दिकान्तानि नवमिश्राणि।

ततः पराणि सांवत्सरिकादीनि तु पुराणानि।

ननु—

सपिण्डीकरणं कृत्वा कुर्यात् पार्वणवत् सदा।
प्रतिसंवत्सरं श्राद्धं छागलेयोदितो विधिः॥

इति शातातपाद्युक्तेः पितृपितामहप्रपितामहेत्येतत्त्रितयोद्देशेन प्रतिसंवत्सरं श्राद्धस्य कर्त्तव्यत्वात् कथमेकोद्दिष्टभेदेषु पुराणानां सांवत्सरिकादीनां परिगणनं युज्यत इति चेत्, सत्यम्। शातातपादिस्मृतिप्रामाण्येन तेषां पार्वणवदनुष्ठेयत्वेऽपि

सपिण्डीकरणादूर्ध्वं प्रतिसंवत्सरं सुतैः।
मातापित्रोः पृथक् कार्यमेकोद्दिष्टं मृतेऽहनि॥

इति यमाद्युक्तेरेकोद्दिष्टविधिनाऽपि सांवत्सरिकश्राद्धस्य कर्त्तव्यत्वेन संमतत्वात्। इदं च पक्षद्वयं देशाचाराद्व्यवस्थितम्। तत्र दाक्षिणात्याः पार्वणधर्म्मेण, नागराद्यस्तु एकोद्दिष्टधर्म्मेण सांवत्सरिकश्राद्धमनुतिष्ठन्ति।

सपिण्डनं त्वेकविधमेव।

एकोद्दिष्टभिन्नानां सर्वेषां नित्यनैमित्तिककाम्यश्राद्धानां पित्रादित्रितयोद्देशेनानुष्ठीयमानत्वात् पार्वणश्राद्धेऽन्तर्भावः। यद्यपि तीर्थमहालयादिश्राद्धेषु पितृव्यादीनामेकोद्दिष्टविधिना यजनं, न तु पितामहादिसाचिव्येन; तथापि तत्र पित्रादित्रितयोद्देशस्य सत्त्वान्नाव्याप्तिरिति वदन्ति। यदाहुः—

तीताम्बात्रितयं सपत्नजननी मातामहादित्रयं
सस्त्रि स्त्री तनयादि तातजननीस्वभ्रातरः सस्त्रियः।

---

१ तातत्रितयं पितृपितामहप्रपितामहाः। अम्बात्रितयं मातृपितामहीप्रपितामह्यः। मातामहादित्रयं मातामहमातुःपितामहमातुःप्रपितामहाः सस्त्रीति सपत्नीका

तातामबात्मभगिन्यपत्यधवयुग् जायापिता सद्गुरुः।
शिष्याप्ताः पितरो महालयविधौ तीर्थे तथा तर्पणे ॥ इति।

श्राद्धे भोजनीयब्राह्मणसंख्यामाह मनुः—

द्वौ दैवे पितृकार्ये त्रीनेकैकमुभयत्र वा।
भोजयेत् सुसमृद्धोऽपि न प्रसज्जेत विस्तरे ॥
( मनु० ३।१२५ ) इति।

दैवे देवश्राद्धे विश्वेषां देवानां स्थाने इति यावत्, द्वौ। पितृकार्ये पितृपितामहप्रपितामहानां स्थाने त्रीन्। यद्वा दैवे एकं पित्रादित्रिके चैकं ब्राह्मणं भोजयेत्। सुसमृद्धोपि यजमानो नोक्ताधिकब्राह्मणभोजने प्रवर्त्तेतेत्यर्थः। अयं भावः—यदा देवस्थाने द्वौ विप्रौ तदा पित्रादित्रिकस्थानेऽपि त्रय एव निमन्त्रणीयाः। यदा वा देवस्थाने एकस्तदा पित्रादिस्थानेप्येक एव। एवमनयैव दिशा बहुपित्रादिदेवताकेषु दर्शमहालयादिश्राद्धेष्वपि प्रतित्रिकं त्रय एको वा तथाऽनेकत्रिकादिस्थानेप्येक इति वा यथासंभवं द्रष्टव्यमिति। तथा चोक्तमाश्वलायनगृह्ये—

'न त्वेवैकं सर्वेषां पिण्डैर्व्याख्यातं काममनाद्ये' इति।

पितृपितामहादीनां सर्वेषामुद्देशेन यथा नैकं पिण्डं निर्वपेत् तथैकं ब्राह्मणमपि न भोजयेत्। पक्षान्तरं दर्शयति 'काममनाद्ये' इति। आद्यं न भवतीत्यनाद्यम्। बहुपित्रादिदेवताकश्राद्धानामाद्यं सपिण्डनं तद्भिन्नं सर्वं दर्शमहालयादिश्राद्धमनाद्यम्, तत्र कामं यथेच्छं विप्रमेकमपि भोजयेदिति तदर्थः।

विस्तारप्रतिषेधं सकारणमप्याह मनुः—

सत्क्रियां[1] देश[2]कालौ[3] च शौचं[4] ब्राह्मणसंपदः[5]।

---

इतिपदेन विशेषिताः। तनयः पुत्रः। आदिपदात्कन्या। तातस्य जनन्याः स्वस्य च भ्रातरोऽपि सपत्नीकाः। तथा तातस्य अम्बायाः स्वस्य च भगिनी, सा च सभर्तृका ससुता। जायापिता श्वशुरः। स्पष्टमन्यत्।

१ ब्राह्मणपूजाम्।

२ देशं दक्षिणप्रवणादिरूपम्।

३ कालमपराह्णम्।

४ शौचं पावित्र्यं श्राद्धकर्तृभोक्तृब्राह्मणगतं पाचकादिप्रेष्यवर्गनिष्ठं च।

५ गुणवद्ब्राह्मणलाभरूपा ब्राह्मणसंपदः।

पञ्चैतान् विस्तरो हन्ति तस्मान्नेहेत विस्तरम् ॥
( मनु० ३।१२६ ) इति।

श्राद्धे प्रशस्तब्राह्मणानाह मनुः—

[1]श्रोत्रियायैव देयानि हव्यकव्यानि दातृभिः।
[2]अर्हत्तमाय विप्राय तस्मै दत्तं महाफलम् ॥
एकैकमपि विद्वांसं दैवे पित्र्ये च भोजयेत्।
पुष्कलं फलमाप्नोति नामन्त्रज्ञान् बहूनपि ॥
( मनु० ३।१२८-१२९ ) इति।

विधिवदनुष्ठितस्य श्राद्धकर्म्मणः फलमाहतुर्मनुयाज्ञवल्क्यौ—

यद्यद्ददाति विधिवत् सम्यक् श्रद्धासमन्वितः ॥
तत्तत् पितॄणां भवति परत्रानन्तमक्षयम् ॥
( मनु० ३।२७५ ) इति।

आयुः प्रजां धनं विद्यां स्वर्गं मोक्षं सुखानि च।
प्रयच्छन्ति तथा राज्यं नृणां प्रीताः पितामहाः ॥
( या० स्मृ० १।२७० ) इति च।

नन्वेतद्वचनद्वयोपस्थापितोऽर्थो नोपपद्यते। प्रातिस्विकशुभाशुभकर्म्मवशेन स्वर्गनरकादिगतानां प्राणिनां पुत्रादिभिर्दत्तैरन्नपानादिभिस्तृप्त्यसम्भवात्। सम्भवेऽपि वा स्वयमात्मनोप्यनीश्वराः कथं स्वर्गादिफलं प्रयच्छेयुरिति चेत्—

वसून् वदन्ति तु [3]पितॄन् रुद्रांश्चैव [4]पितामहान्।
[5]प्रपितामहांस्तथादित्यान् श्रुतिरेषा सनातनी ॥
( मनु० ३।२८४ ) इति।

वसुरुद्रादितिसुताः पितरः श्राद्धदेवताः।
प्रीणयन्ति मनुष्याणां पितॄन् श्राद्धेन तर्पिताः ॥
( या० स्मृ० १।२६९ )

---

१ छन्दोमात्राध्यायी श्रोत्रियस्तस्मै देवपित्रन्नानि यत्नतो देयानि।

२ अर्हत्तमाय श्रुताऽऽचाराऽभिजनादिभिः पूज्यतमाय।

३ पितॄन् पितृमातृमातामहपितृव्यादीन्।

४ पितामहान् पितामहपितामहीप्रमातामहान्।

५ प्रपितामहान् प्रपितामहप्रपितामहीवृद्धप्रमातामहान्।

इति च स्मृतवद्भ्यां मनुयाज्ञवल्क्याभ्यामत्र समाहितमेव। वसवो रुद्रा आदित्या एते पितरः श्राद्धदेवताः पितृपितामहप्रपितामहादिशब्दवाच्या न केवलं देवदत्तादय एव। त एते वसुरुद्रादित्याः स्वयं श्राद्धेन तर्पिताः सन्तो मनुष्याणां श्राद्धकारिणां पितॄन् देवदत्तादींस्तर्पयन्ति। न केवलं पितॄनेव तर्पयन्ति किंतु श्राद्धकारिभ्योपि शास्त्रोक्तान्यायुःप्रजादिरूपाणि फलानि प्रयच्छन्तीत्यर्थः। अयं भावः–न ह्यत्र देवदत्तादय एव श्राद्धकर्म्मणि सम्प्रदानभूताः पित्रादिशब्दैरुच्यन्ते, किंत्वधिष्ठातृवस्वादिदेवतासहिता एव देवदत्तादयः। ततश्चाधिष्ठातृवस्वादयः श्रद्धायुतैः पुत्रादिभिर्दत्तेनान्नपानादिना तृप्ताः सन्तस्तानपि देवदत्तादींस्तर्पयन्ति स्वनिष्ठेन ज्ञानतृप्त्यतिशययोगेन। तथा श्राद्धकर्तॄन् पुत्रादींश्च फलेन योजयन्ति। देवानां कर्म्मफलप्रदाने समर्थत्वादिति न काप्यनुपपत्तिः।

---

श्रुतिस्मृत्युदितसद्धर्ममनुतिष्ठतां गृहमेधिनां हिताहितमुपदिशति मनुः—

न हीदृशमनायुष्यं लोके किंचन विद्यते।
यादृशं पुरुषस्येह [1]परदारोपसवनम्॥
(मनु० ४।१३४)।

नात्मानमवमन्येत पूर्वाभिरसमृद्धिभिः।
आ मृत्योः श्रियमन्विच्छेन्नैनां मन्येत दुर्लभाम्॥
[2]सत्यं ब्रूयात् प्रियं ब्रूयात् न ब्रूयात् सत्य[3]मप्रियम्।
प्रियं च नानृतं ब्रूयादेष धर्म्मः सनातनः॥
(मनु० ४।१३७-१३८)।

वाच्यर्था नियताः सर्वे वाङ्मूला वाग्विनिःसृताः।
तां [4]तु यः स्तेनयेद्वाचं स सर्वस्तेयकृन्नरः॥
(मनु० ४।२५६)।

मङ्गलाचारयुक्तः स्यात् प्रयतात्मा जितेन्द्रियः।

---

१ स्त्रिया अपि परपुरुषोपसेवनं हानिकरमिति तुल्यन्यायेन द्रष्टव्यम्।
२ यथादृष्टश्रुतम्।
३ यथादृष्टश्रुतमप्यप्रियं पुत्रस्ते मृत इत्यादि सत्यां गतौ स्वयं न ब्रूयात्।
४ तां वाचं यः स्तेनयेत् स्वार्थविरहितां कुर्यात्। अनृतं वदेदिति यावत्।

जपेच्च जुहुयाच्चैव नित्यमग्निमतन्द्रितः ॥
( मनु० ४।१४५ ) ।
उत्तमैरुत्तमैर्नित्यं सम्बन्धानाचरेत् सह ।
निनीषुः कुलमुत्कर्षमधमानधमांस्त्यजेत् ॥
( मनु० ४।२४४ ) ।

इत्यादि ॥

---

गृहस्थाश्रमे एवावस्थितस्य संन्यासप्रकारः प्रदर्शितो मनुना—
देवर्षिपितृभूतानां[1] गत्वाऽनृण्यं यथाविधि ।
पुत्रे सर्वं समासज्य वसेन्माध्यस्थ्यमाश्रितः ॥
एकाकी चिन्तयेन्नित्यं विविक्ते हितमात्मनः ।
एकाकी चिन्तयानो हि परं श्रेयोऽधिगच्छति ॥'
( मनु० ४।२५७-२५८ ) इति ।

महर्षीणां स्वाध्यायेन पितॄणां पुत्रोत्पादनेन देवानां यज्ञैर्यथाशास्त्रमानृण्यं गत्वा योग्यपुत्रे सर्वं कुटुम्बचिन्ताभारमारोप्य माध्यस्थ्यमाश्रितः पुत्रदारधनादौ त्यक्तममत्वो ब्रह्मबुद्ध्या समदर्शी सन् गृह एवावस्थितः । एवं पुत्रोपकल्पितवृत्तिः काम्यकर्म्मणां धनार्जनोद्यमस्य च कृतन्यास एकाकी निर्जनदेशे आत्महितं वेदान्तोक्तं जीवस्य ब्रह्मभावं सर्वदा ध्यायेत् । यस्मात्तथा ध्यायन् पुमान् परं श्रेयो मोक्षलक्षणं प्राप्नोति ।

इति गृहस्थाश्रमविचारः ।

---

अथ वानप्रस्थाश्रममभीप्सुर्विप्रो वा क्षत्रियो वा स्वस्य त्वक्शैथिल्यं केशधावल्यं च पश्यन् सांसारिकविषयवासनाविमुखचित्तश्चेत् पुत्रेषु भार्याऽग्निहोत्रादि समारोप्य सभार्याग्निहोत्रो वा पुण्यारण्ये निवसेत् । फलमूलादिभिर्मुन्यन्नैरुपकल्पितवृत्तिश्चर्मचीरजटावल्कलादि धारयंस्तपःप्रधानान्महर्षिधर्म्माननुतिष्ठन् वीतकल्मषः परिबृंहितेनोग्रतपःसंचयेन संशोषितगात्रोऽपि ब्रह्मविद्यामुपनिषच्छ्रुतिप्रतिपादितां श्रवणमननादिना समभ्यसेत् ( ? समभ्यस्येत् ) । अस्याश्रमिणो ब्रह्मलोकावाप्तिः फलं शास्त्रे उक्तम् ।

अयं चाश्रमः कलौ वर्ज्यः—

---

[1] 'महर्षिपितृदेवानाम्' इति कुल्लूकभट्टसम्मतः पाठः । ( मं० दे० शा० )

देवराच्च सुतोत्पत्तिर्मधुपर्के पशोर्वधः।
मांसदानं तथा श्राद्धे वानप्रस्थाश्रमस्तथा॥

इति बृहन्नारदीये कलिवर्ज्यप्रकरणे पाठात्।

---

अथ चतुर्थ आश्रमः संन्यासाख्यः स इदानीं निरूप्यते। अस्मिन्नाश्रमे ब्राह्मण एवाऽधिकारी नान्य इत्याह याज्ञवल्क्यः—

चत्वारो ब्राह्मणस्योक्ता आश्रमाः श्रुतिचोदिताः।
क्षत्रियस्य त्रयः प्रोक्ता द्वावेको वैश्यशूद्रयोः॥

इति।

वैश्यस्य ब्रह्मचर्यगार्हस्थ्यरूपौ द्वावेवाश्रमौ, शूद्रस्य तु गार्हस्थ्यलक्षण एक एवेत्यर्थः।

प्राजापत्यां निरूप्येष्टिं सर्ववेदसदक्षिणाम्।
आत्मन्यग्नीन् समारोप्य ब्राह्मणः प्रव्रजेद्गृहात्॥
(मनु० ६।३८)

इति मनुस्मृतौ 'ब्राह्मणाः प्रव्रजन्ति' इति जाबालोपनिषच्छ्रुतौ च ब्राह्मणपदोपादानमपीदमेवार्थं संवदति। यत्तु—'ब्राह्मणः क्षत्रियो वाथ वैश्यो वा प्रव्रजेद्गृहात्' इति कूर्म्मपुराणे उक्तम्, तच्च न स्मृतिविरुद्धस्य क्षत्रियवैश्ययोश्चतुर्थाश्रमस्य विधायकम्। किन्तु भवसुखे दोषमनुसंदधतोस्तयोः सति तीव्रवैराग्ये पुण्यारण्यगमनाभ्यनुज्ञाबोधकम्। एवं च प्रशान्तमनोधर्म्मयोः क्षत्रियवैश्ययोः पुण्यारण्यनिवासावाप्तसत्समागमप्रसङ्गेन ब्रह्मविद्योदये सति परमपुरुषार्थसिद्धिर्भवेदेवेति तात्पर्यम्।

---

ब्रह्मचर्यादिक्रमेणाश्रमाणां स्वीकारलक्षणमाश्रमसमुच्चयपक्षमाह मनुः—

आश्रमादाश्रमं[1] गत्वा हुतहोमो जितेन्द्रियः।
भिक्षाबलिपरिश्रान्तः[2] प्रव्रजन् प्रेत्य वर्द्धते॥
ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत्।
अनपाकृत्य मोक्षं तु सेवमानो व्रजत्यधः॥
(मनु० ६।३४-३५) इति।

---

१ पूर्वपूर्वाश्रमादुत्तरोत्तराश्रममित्यर्थः।

२ भिक्षाबलिदानादितत्तत्कर्मणां चिरकालसेवया परिश्रान्तः।

"जायमानो वै ब्राह्मणस्त्रिभिर्ऋणैर्ऋणवा जायते। यज्ञेन देवेभ्यः, प्रजया पितृभ्यः, स्वाध्यायेन ऋषिभ्य" इति श्रुतिबोधितानां महर्षिपितृदेवर्णानां मध्ये ब्रह्मचारी भूत्वा स्वाध्यायाध्ययनेन महर्षीणामृणमपाकृत्य, तथा स्वशक्त्यनुसारेणानुष्ठितैर्यज्ञैर्देवानामृणमपाकृत्य, मोक्षे मोक्षा॰ चतुर्थाश्रमे मनो निवेशयेत्। यस्तु प्रोक्तमृणत्रयमनपाकृत्य परिव्रजति स नरकं व्रजतीत्यर्थः। अयं भावः—

ऐहिकामुष्मिकफलभोगविरागः संन्यासाश्रमाधिकारनिमित्तम्। स यस्य नास्ति तेन गृहस्थाश्रममवलम्ब्य सांसारिकसुखदुःखे अनुभूय "यथेह कर्म्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते" इति श्रुत्युपदिष्टतर्कानुसन्धानेन यदीह परत्र चोपभोग्ये वैषयिकसुखे वासनोपशमः सम्पद्यते तर्हि गृहस्थाश्रमादपि तस्य चतुर्थाश्रमाधिकारः। अथ गृहस्थाश्रमसेवनेनापि विषयविरागविधुरस्य वानप्रस्थाश्रमस्वीकारेण महर्षिव्रतचर्यया प्रतिबन्धकदुरितक्षये सति प्रक्षीणविषयानुरागस्य संन्यासाधिकारः सम्पद्यते। वैराग्यप्रतिबन्धकदुरितक्षयकरं च ऋणत्रयापाकरणमेवेति बोधयितुं मनुनाऽऽश्रमसमुच्चयपक्षोऽभिहितो नतु ब्रह्मचर्यादिक्रमेणैव संन्यास इति नियमं कर्त्तुम्। यो वै पुरुषधौरेयो जन्मान्तरे एव नित्यनैमित्तिकादिविहितानुष्ठानेन प्रतिषिद्धवर्जनेन च प्रक्षीणपापः प्रादुर्भूततीव्रवैराग्यस्तस्य नास्ति क्रमानुरोधापेक्षा, किंतु ब्राह्मणत्वसम्पादकस्य प्रथमाश्रमस्यैवेति। तथा च श्रूयते जाबालोपनिषत्सु-"ब्रह्मचर्यं समाप्य गृही भवेत्, गृही भूत्वा वनी भवेत्, वनी भूत्वा प्रव्रजेत्। इतरथा ब्रह्मचर्यादेव प्रव्रजेद्गृहाद्वा वनाद्वा। अथ पुनरव्रती वा स्नातको वाऽस्नातको वोत्सन्नाग्निको यदहरेव विरजेत् तदहरेव प्रव्रजेत्" इति।

एवमङ्गिरा अपि सस्मार—

प्रव्रजेद्ब्रह्मचर्याद्वा प्रव्रजेच्च गृहादपि।
वनाद्वा प्रव्रजेद्विद्वानातुरो वाऽथ दुःखितः॥ इति।

वैराग्यं विना दम्भार्थं संन्यासकरणे दोषमाह यमः—

काष्ठदण्डो धृतो येन सर्वाशीर्ज्ञानवर्जितः।
स याति नरकान् घोरान् महारौरवसंज्ञितान्॥ इति।

यद्यपि—अग्निहोत्रं गवालम्भं संन्यासं पलपैतृकम्।
देवराच्च सुतोत्पत्तिः कलौ पञ्च विवर्जयेत्॥

इति निगमवाक्येन संन्यासाग्निहोत्रयोः कलौ निषेधः, तथापि

चत्वार्यब्दसहस्राणि चत्वार्यब्दशतानि च।
कलेर्यदा गमिष्यन्ति तदा त्रेतापरिग्रहः॥
संन्यासश्च न कर्त्तव्यो ब्राह्मणेन विजानता।

इति व्यासवचनेन किञ्चित्कालपर्यन्तं कलावपि संन्यासाग्निहोत्रे प्रतिप्रसूयेते।

तथा— यावद्वर्णविभागोऽस्ति यावद्वेदः प्रवर्त्तते।
संन्यासं चाग्निहोत्रं च तावत्कुर्यात् कलौ युगे॥

इति देवलस्मृतिवचनेन तु प्रोक्तवर्षसंख्यावधिमनपेक्ष्य संन्यासाग्निहोत्रयोर्वर्णविभागवेदप्रवृत्त्यवधिकत्वं बोध्यते।

संन्यासिना यथा वर्त्तितव्यं तथाह मनुः—

अध्यात्मरति[1]रासीनो[2] निरपेक्षो[3] निरामिषः[4]।
आत्मनैव सहायेन सुखार्थी[5] विचरेदिह॥

(मनु० ६।४९) इति।

सर्वेषां साधारणधर्म्ममाह मनुः—

चतुर्भिरपि चैवैतैर्नित्यमाश्रमिभिर्द्विजैः।
दशलक्षणको धर्म्मः सेवितव्यः प्रयत्नतः॥
धृति[6]ः क्षमा दमो[7]ऽस्तेयं शौचमिन्द्रियनिग्रहः[8]।
धी[9]र्विद्या सत्यमक्रोधो दशकं धर्म्मलक्षणम्॥

(मनु० ६।९१-९२) इति।

मन्वादिभिर्दर्शितो यो धर्म्मामृतकलानिधिः।
स भासते प्रकाशेऽत्र यथेन्दुर्लघुदर्पणे॥

॥ इति भट्टयज्ञेश्वरोन्नीते आर्यविद्यासुधाकरे तृतीयः प्रकाशः॥

---

१ सर्वथा ब्रह्मध्यानपरायणः।
२ स्वस्तिकादियोगासननिष्ठः।
३ दण्डकमण्डल्वादिष्वप्यपेक्षाशून्यः।
४ विगलितविषयाभिलाषः।
५ मोक्षसुखार्थी।
६ संतोषः।
७ सत्यपि विषयसंनिधाने मनसो निर्विक्रियत्वम्।
८ स्वस्वविषयलोलुपानां चक्षुरादीन्द्रियाणां वशीकरणम्।
९ शास्त्राद्यभ्यासेन लोकवृत्तपर्यालोचनेन च तत्तद्विषयकयथार्थज्ञानं धीः।

यमुद्दिश्य कृतं कर्म्म तत् सर्वं विष्णुदैवतम् ।
आध्यात्मिकीयं विविधा ब्रह्मभक्तिः स्थिता नृप ॥ इति ।

तथा अग्निपुराणेऽप्युक्तम्—

अग्निष्टोमादिकर्म्माणि सापायानि कलौ युगे ।
गङ्गास्नानं हरेर्नाम निरपायमिदं द्वयम् ॥ इति ।

सापायानि हिंसादोषसहितानि । कलौ युगे इत्यनेन युगान्तरव्यवच्छेदः । तथा चायमर्थः पर्यवस्यति—कलावनुष्ठितान्यपि अग्निष्टोमादिमहाक्रतुरूपाणि कर्म्माणि न नियमतः श्रेयोजनकानि भवन्ति, किन्तु प्रत्यवायविमिश्राण्येव । कलिकालभवानां मानवानां युगान्तरीयब्राह्मणादिवत् ज्ञानशक्त्यादेरभावेन यथाविधि कर्म्म कर्त्तुमशक्तत्वादिति ।

तथा चोक्तं विष्णुपुराणे—

प्रायश्चित्तान्यशेषाणि तपःकर्म्मात्मकानि वै ।
यानि तेषामशेषाणां कृष्णानुस्मरणं परम् ॥
कृते पापेऽनुतापो हि यस्य पुंसः प्रजायते ।
प्रायश्चित्तं तु तस्यैकं हरिसंस्मरणं परम् ॥
प्रातर्निशि तथा सायं मध्याह्नादिषु संस्मरन् ।
नारायणमवाप्नोति सद्यः पापक्षयं नरः ॥
विष्णुस्मरणसंक्षीणसमस्तक्लेशसञ्चयः ।
मुक्तिं प्रयाति स्वर्गाप्तिस्तस्य विघ्नो निगद्यते ॥
वासुदेवे मनो यस्य जपहोमार्चनादिषु ।
तस्यान्तरायो मैत्रेय देवेन्द्रत्वादिकं फलम् ॥ इति ।

तथा ब्रह्मपुराणेऽपि—

द्विजो वा राक्षसो वापि पापी वा धार्म्मिकोऽपि वा ।
राम रामेति यो वक्ति स मुक्तो भवबन्धनात् ॥
राम रामेति रामेति ये वदन्ति दिवानिशम् ।
तेषां भुक्तिश्च मुक्तिश्च भविष्यति न संशयः ॥ इति ।

तथा भगवद्गीतासु गीयते—

महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः ।
भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ॥

एवं सत्यपि ये द्विजातयः क्षुद्रफललिप्सया वैदिकविधिनिषेधानतिक्रम्यायोग्यानुष्ठानेषु मोहात्प्रवर्त्तन्ते ते महान्तं प्रत्यवायभारं शिरसा वहन्तः सन्तः स्वयमेव प्रतारिता भवन्ति। तस्मात् प्राणिविप्रलम्भेच्छादिलक्षणपुरुषदोषायत्तं प्रतारकत्वं न महेश्वरस्यास्तीति ध्येयम्। स्पष्टं चेदम् 'चतुःषष्ट्या तन्त्रैः सकलमभिसन्धाय भुवनम्' इति सौन्दर्यलहरीस्तोत्रपद्यस्य गौरीकान्तभट्टाचार्यकृतायां तरिनामकटीकायाम्।

कौलमार्गप्रतिपादकानि चतुःषष्टिस्तन्त्राणि वामकेश्वरतन्त्रे निर्दिष्टानि यथा—

चतुःषष्टिश्च तन्त्राणि मातॄणामुत्तमानि हि।
[1]महामायाशम्बरं च [2]योगिनीजालशम्बरम्॥
[3]तत्त्वशम्बरकं चैव [11]भैरवाष्टकमेव च।
[19]बहुरूपाष्टकं चैव [27]यामलाऽष्टकमेव च॥
[28]चन्द्रज्ञानं [29]मालिनी च [30]महासंमोहनं तथा।
[31]वामजुष्टं [32]महादेवं [33]वातुलं [34]वातुलोत्तरम्॥
[35]हृद्भेदं [36]तन्त्रभेदं च [37]गुह्यतन्त्रं च [38]कामिकम्।
[39]कलावादं [40]कलासारं तथाऽन्यत् [41]कुण्डिकामतम्॥
[42]मत्तोत्तरं च [43]वीणाख्यं [44]त्रोतलं [45]त्रोतलोत्तरम्।
[46]पञ्चामृतं [47]रूपभेदं [48]भूतोड्डामरमेव च॥
[49]कुलसारं [50]कुलोड्डीशं [51]कुलचूडामणिस्तथा।
[52]सर्वज्ञानोत्तमं चैव [53]महाकालीमतं तथा॥
[54]अरुणेशं [55]मोदनीशं [56]त्रिकुण्डीश्वरमेव च।
[57]पूर्वं [58]पश्चिमं [59]दक्षं च [60]उत्तरं च [61]निरुत्तरम्॥
[62]विमलं [63]विमलोत्थं च [64]देवीमतमतः परम्॥ इति।

एतैस्तन्त्रैः प्रतिपाद्यं वस्तु संक्षिप्यात्र निरूप्यते। तत्रान्यस्मिन् पदार्थेऽन्यथाप्रतिभानरूपमायाप्रपञ्चरचनोपायप्रतिपादकमैन्द्रजालिकविद्यात्मकं प्रथमं महामायाशम्बराख्यं तन्त्रम्।

योगिनीसमूहदर्शनोपायप्रतिपादकं योगिनीजालशम्बराख्यं द्वितीयं तन्त्रम्।

पृथिव्यादितत्त्वानामन्यत्रान्यबोधोपायप्रतिपादकं तत्त्वशम्बरतन्त्रम्। इदमपीन्द्रजालविद्याविशेषरूपमेव।

भैरवाष्टकं यथा—[4]सिद्धभैरवतन्त्रं मायिकभैरवतन्त्रं [6]कङ्कालभैरवतन्त्रं [7]कालाग्निभैरवतन्त्रं [8]शक्तिभैरवतन्त्रं [9]योगिनीभैरवतन्त्रं [10]महाभैरवतन्त्रं [11]भैरवनाथतन्त्रं चेति । एतान्यष्टौ तन्त्राणि कापालिकमतप्रतिपादकानि।

बहुरूपा नाम शक्तिस्तत्प्रतिपादकानामष्टानां तन्त्राणां गणो बहुरूपाऽष्टकं तद्यथा—[12]ब्राह्मीतन्त्रं [13]माहेश्वरीतन्त्रं [14]कौमारीतन्त्रं [15]वैष्णवीतन्त्रं [16]वाराहीतन्त्रं [17]इन्द्राणीतन्त्रं [18]चामुण्डातन्त्रं [19]शिवदूतीतन्त्रमिति ।

यामलाष्टकं रुद्रयामलादीन्यष्टौ [27]तन्त्राणि कुलक्रमागतायाः शक्त्युपासनाया एव प्रतिपादकानि ।

कामैश्वर्यादीनां षोडशनित्यानां चन्द्रकलान्तर्वर्त्तिनीनामुपासनाप्रतिपादकं कापालिकमतप्रदर्शकं च [28]चन्द्रज्ञानतन्त्रम् ।

समुद्रयानोपायप्रतिपादकं [29]मालिनीतन्त्रम् ।

जाग्रतामपि जनानां निद्रितकरणोपायप्रतिपादकं [30]महासंमोहनतन्त्रम् ।

[31]वामजुष्टं वामकेश्वरतन्त्रं तद्धि चतुःशतीत्यपि कथ्यते । अत्र सुरामांसाद्युपहारेणोपासनामार्गः प्रतिपाद्यते ।

कुलाचारप्रदर्शनपूर्वकबटुकादिसिद्ध्युपायप्रतिपादकं [32]महादेवतन्त्रम् ।

[33]वातुलं [34]वातुलोत्तरं [35]कामिकं चेति तन्त्रत्रयं क्षेत्रकर्षणादिविधिप्रतिपादकम् ।

[36]हृद्भेदतन्त्रं कापालिकाचारप्रतिपादकम् ।

[37]तन्त्रभेदगुह्य[38]तन्त्रयोः प्रकाशं रहस्यं वा परकृतमन्त्रतन्त्रप्रयोगाणां परावृत्त्युपायाः प्रतिपाद्यन्ते ।

[39]कलावादतन्त्रं कामशास्त्रम् ।

[40]कलासारतन्त्रं रूपादिवृद्ध्युपायप्रदर्शकम् ।

[41]कुण्डिकामततन्त्रं गुटिकासिद्धिप्रदर्शकम् ।

गुटिकेति पानपात्रस्य संज्ञा ।

[42]मत्तोत्तरतन्त्रं रससिद्धिप्रतिपादकम् ।

[43]वीणातन्त्रं हि वीणा नाम संभोगयक्षिणी तस्याः साधनोपायप्रदर्शकम् ।

[44]त्रोतलतन्त्रे गुटिकाऽञ्जनपादुकादिसिद्धयः प्रतिपादिताः ।

[45]त्रोतलोत्तरतन्त्रे चतुःषष्टिसहस्रयोगिनीनां दर्शनोपाया उक्ताः ।

[46]पञ्चामृततन्त्रे पृथिव्यादिभूतपञ्चकसाधनेनामरत्वसिद्धिः कापालिकसंमता प्रतिपाद्यते ।

रूपभेदादिषु पञ्चसु तन्त्रेषु जारणमारणमोहनोच्चाटनवशीकरणादिप्रयोगाः प्रतिपाद्यन्ते ।

सर्वज्ञानादितन्त्रपञ्चकं कापालिकसिद्धान्तैकदेशिदिगम्बरमताचारप्रदर्शकम् ।

पूर्वतन्त्रादिदेवीमतपर्यन्तं तन्त्राष्टकं दिगम्बरैकदेशिक्षपणकमताचारप्रदर्शकम् ।

इमानि तन्त्राणि शिवप्रोक्तानीत्याहुः ।

॥ इति तान्त्रिकमतसङ्ग्रहः ॥

---

अथोच्यन्ते मतानीह दर्शनानां समासतः ।
नास्तिकास्तिकगीतत्वात् द्विधा तानि प्रचक्षते ॥ १ ॥
नास्ति वेदोदितो लोक इति येषां मतिः स्थिरा ।
नास्तिकास्ते तथाऽस्तीति मतिर्येषां त आस्तिकाः ॥ २ ॥
अवैदिकप्रमाणानां सिद्धान्तानां प्रदर्शकाः ।
चार्वाकाद्याः षड्विधास्ते ख्याता लोकेषु नास्तिकाः ॥ ३ ॥
वेदप्रमाणकानीह प्रोचुर्ये दर्शनानि षट् ।
न्यायवैशेषिकादीनि स्मृतास्ते आस्तिकाभिधाः ॥ ४ ॥

( अथ चार्वाकदर्शनम् )

तत्र चार्वाक—माध्यमिक—योगाचार—सौत्रान्तिक—वैभाषिकार्हतभेदेन षड्विधा नास्तिकाः । यतः सर्वेऽप्येते वेदबाह्यानि दर्शनानि दर्शयामासुः । तत्र तावद्बृहस्पतिमतानुसारिणो नास्तिकशिरोमणेश्चार्वाकस्य मतं यथा—पृथिव्यादीनि चत्वारि तत्त्वानि तेभ्य एव देहाकारेण परिणतेभ्यो मदशक्तिवच्चैतन्यमुपजायते । तेषु विनष्टेषु स्वयं विनश्यति । तदिह ज्ञानघन[1] एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति । नहि प्रेत्य संज्ञाऽस्ति । तस्माच्चैतन्यविशिष्टदेह एवात्मा । देहातिरिक्तात्मनि प्रमाणाऽभावात् । प्रत्यक्षैकप्रमाणवादितया अनुमानादेरनङ्गीकारेण प्रमाणत्वाभावात् । एवं चाङ्गनालिङ्गनादिजनितं सुखमेव पुरुषार्थः । न चास्य दुःखसम्भिन्नत्वात्[2] पुरुषार्थत्वमेव नास्तीति

---

१ जीवः ।

२ दुःखेन सम्भिन्नं विमिश्रं तथाविधत्वात् ।

मन्तव्यम् । अवर्जनीयतया प्राप्तस्य दुःखस्य परिहारेण सुखमात्रस्यैव भोग्यत्वात् । तद्यथा धान्यार्थी क्षेत्रात् सपलालानि धान्यान्याहरति । ततः स यावत्तेभ्य आदेयं तावदादाय निवर्त्तते । यथा वा मत्स्यार्थी सशल्यान् सकण्टकान् मत्स्यानुपादत्ते । स यावदादेयं तावदादाय निवर्त्तते । तस्मात् दुःखभयेन नानुकूलवेदनीयं सुखं त्यक्तुमुचितम् । न हि मृगाः सन्तीति शालयो नोप्यन्ते । न हि वा भिक्षुकाः सन्तीति स्थाल्यो नाधिश्रियन्ते । यदि कश्चिद्भीरुर्दृष्टं सुखं परित्यजेत् तर्हि स पशुवन्मूर्खो भवेत् ।

ननु यदि पारलौकिकं दुःखा[३]सम्भिन्नं सुखं नास्त्येव तर्हि विद्यावृद्धा बहुवित्तव्ययशरीरायाससाध्येऽग्निहोत्रादौ कथं प्रवर्त्तन्त इति चेन्न । वेदत्रयस्य धूर्त्तप्रलापमात्रत्वेनाग्निहोत्रादेर्जीविकामात्रप्रयोजनकत्वात् । तस्मात् कण्टकादिजन्यं दुःखमेव नरकम् । लोकसिद्धो राजा परमेश्वरः । देहोच्छेदो मोक्षः । देहात्मवादे एव च कृशोऽहं कृष्णोऽहमिति सामानाधिकरण्योपपत्तिः । ममेदं शरीरमिति व्यवहारस्तु राहोः शिर इतिवदौपचारिकः ।

ननु प्रत्यक्षातिरिक्तस्य प्रमाणस्यानङ्गीकारेऽनुमानादिसिद्धस्यादृष्टस्याप्यनङ्गीकारापत्तौ जगद्वैचित्र्यं कथमुपपद्यतामिति चेत् । स्वभावादेव तदुपपत्तेः । तदुक्तम्—

अग्निरुष्णो जलं शीतं शीतस्पर्शस्तथाऽनिलः ।
केनेदं चित्रितं तस्मात् स्वभावात्तद्व्यवस्थितिः ॥ इति ॥

तदेतत् सर्वं बृहस्पतिनाप्युक्तम्—

न स्वर्गो नापवर्गो वा नैवात्मा पारलौकिकः ।
नैव वर्णाश्रमादीनां क्रियाश्च फलदायिकाः ॥ १ ॥
अग्निहोत्रं त्रयो वेदास्त्रिदण्डं भस्मगुण्ठनम् ।
प्रज्ञापौरुषहीनानां जीविकेति बृहस्पतिः ॥ २ ॥
पशुश्चेन्निहतः स्वर्गं ज्योतिष्टोमे गमिष्यति ।
स्वपिता यजमानेन तत्र कस्मान्न हन्यते ॥ ३ ॥
मृतानामपि जन्तूनां श्राद्धं चेत्तृप्तिकारणम् ।
गच्छतामिह जन्तूनां व्यर्थं पाथेयकल्पना ॥ ४ ॥

---

३ स्वल्पेनापि दुःखेन असंमिश्रम् ।

यदि गच्छेत् परं लोकं देहादेष विनिर्गतः।
कस्माद्भूयो न चायाति बन्धुस्नेहसमाकुलः ॥ ५ ॥
ततश्च जीवनोपायो ब्राह्मणैर्विहितस्त्विह।
मृतानां प्रेतकार्याणि न त्वन्यद्विद्यते क्वचित् ॥ ६ ॥ इति।

लोकाः प्रायेण दृष्टसुखानुरागिण एव सन्ति। ते हि नीतिकामशास्त्रानुसारेणार्थकामावेव पुरुषार्थौ मन्यमानाः पारलौकिकसुखमपह्नुवानाश्चार्वाकमतानुयायिनः प्रायशो भवन्ति। अत एवार्थकामानुगैर्लोकैरायतं विस्तृतं कोकायतमित्यन्वर्थमस्य मतस्यापरं नामधेयमिति दिक्।

॥ इति चार्वाकमतदर्शनम् ॥

---

अथ बौद्धमतानि प्रदर्श्यन्ते। माध्यमिकयोगाचारसौत्रान्तिकवैभाषिकसंज्ञाभिश्चतुर्विधा बौद्धाः पूर्वोक्तं चार्वाकमतमसहमानाः प्रत्यक्षवदनुमानमपि प्रमाणत्वेनाभ्युपगच्छन्ति। तथा हि–यद्यनुमानं प्रमाणं न भवेत्, तर्हि धूमोपलम्भानन्तरं धूमध्वजे[1] प्रेक्षावतां प्रवृत्तिरनुपपद्यमाना स्यात्। नद्यास्तीरे फलानि सन्तीति वाक्यश्रवणानन्तरं फलार्थिनां नदीतीरे प्रवृत्तिश्च न स्यात्। किं च सकलव्यवहारनिदानस्य सद्विचारस्यानुमानैकजीव्यत्वं सर्वानुभवसिद्धम्। नहि कश्चिदपि वस्तुदर्शनमात्रेण तत्र प्रवर्त्तते ततो वा निवर्त्तते। किन्तु इष्टसाधनत्वानिष्टसाधनत्वनिश्चयोत्तरमेव क्षीरादिपाने विषादिपरिवर्जने च यतते। किं च त्वमिदं विषं भक्षयेथा इति केनचिदभिनियुक्तो भवान् यदि ब्रूयात् 'विषभक्षणान्मनुष्या म्रियन्ते मनुष्यश्चाहमतो न भक्षयिष्ये' इति। तर्हि मनुष्यजातीयस्य ममेदं वस्तु मारकं विषजातीयत्वादित्याकारकं स्वीकृतमेव स्वभावानुमानमकामेनापि भवता। किंच 'न स्वर्गो नापवर्गश्च नैवात्मा पारलौकिकः' इति भवदुक्तः प्रतिषेधः कथं मन्तव्यः। स्वर्गादीनामनुपलम्भादिति चेदनुपलब्ध्या स्वर्गादीन् प्रतिषेधयता भवताऽनुपलब्धिलिङ्गकमनुमानं स्वीकृतमेवेत्येवं जितमत्र सूरिभिः।

माध्यमिकादयश्चत्वारोऽपि बौद्धाः सर्वं क्षणिकं क्षणिकं दुःखं दुःखं स्वलक्षणं स्वलक्षणं शून्यं शून्यमिति चतुर्विधया भावनया

---

१ धूमध्वजो वह्निः।

परमपुरुषार्थावाप्तिं कथयन्ति । किं च
माध्यमिकाः सर्वशून्यत्ववादं,
योगाचारा बाह्यार्थशून्यत्ववादं,
सौत्रान्तिका बाह्यार्थानुमेयत्ववादं,
वैभाषिकास्तु ज्ञानान्वितोभयार्थसत्त्ववादमातिष्ठन्ते ।

यत् सत्[1] तत् क्षणिकं यथा जलधरपटलम् । सन्तश्चामी भावास्[2]ततः सर्वे क्षणिका इति क्षणिकत्वं सर्वेषां भावानामर्थक्रियाकारित्व[3]लक्षणेन सत्त्वेनानुमिन्वन्ति । ननु चिरस्थायिनो भावस्यार्थक्रियाकारित्वं किं न स्यादिति चेन्मैवं वोचः । विकल्पासहत्वात् । तथा हि । वर्त्तमानार्थ[4]-क्रियाकरणकाले अतीतानागतयोरर्थक्रिययोः करणे सामर्थ्यमक्षणिकस्य[5] भावस्य विद्यते न वा । आद्ये, तयोरनिराकरणप्रसङ्गः समर्थस्य प्रतिबन्धायोगात् । यत् यदा यत्करणसमर्थं तत् तदा तत् करोत्येव । यथा सामग्री स्वकार्यम् । समर्थश्चायं भाव इति प्रसङ्गानुमानाच्च । द्वितीये, कदापि न कुर्यात् । अर्थक्रियाकारित्वस्य सामर्थ्यमात्रानुबन्धित्वात् । यत् यदा यन्न करोति तत् तदा तत्रासमर्थम् । यथा शिलाशकलमङ्कुरे । एष[6] च भावो वर्त्तमानक्रियाकरणकाले वृत्तवर्त्तिष्यमाणे अर्थक्रिये न करोतीति तद्विपर्ययाच्च । अयमाशयः—शिलाशकलं वर्त्तमानाङ्कुरोत्पादने यतः समर्थं न भवति ततोऽङ्कुरोत्पादनासमर्थं शिलाशकलमतश्च वृत्ते वर्त्तिष्यमाणे वाङ्कुरोत्पादनेऽपि नैव तस्य सामर्थ्यमस्ति । एवं चासमर्थो भावो न कदाप्यर्थक्रियां कर्त्तुमीष्टे इति ।

ननु क्रमवत्सलिलपवनादिसहकारिलाभेन चिरस्थायिनोऽपि बीजादेः सकाशात् क्रमेणैवाऽतीतानागतयोरर्थक्रिययोरङ्कुरपल्लवादिप्र-

---

१ अर्थक्रियाकारि वस्तु माध्यमिकैः सदिति परिभाष्यते ।

२ भावाः पदार्थाः ।

३ अर्थस्य क्रिया अर्थक्रिया तां करोत्येवंशीलमर्थक्रियाकारि तस्य भावस्तत्त्वम् । यथा घटो जलस्याहरणरूपां क्रियां करोतीत्यतोऽर्थक्रियाकारित्वात्सत्पदव्यपदेश्यः ।

४ चिरकालस्थायिनः ।

५ वर्त्तमाने भावे ।

६ भवदभिमतश्चिरस्थायी भावः ।

रोहोद्भेदरूपयोः क्रमणमुपपद्यते इति चेत्। तत्रेदं भवान् पृष्टो व्याचष्टाम्—स्थायित्वेन भवदभिमतस्य भावस्य किं सहकारिण उपकुर्वन्ति, न वा। न चेदुपकुर्वन्ति नापेक्षणीयास्ते। यद्युपकुर्वन्ति, तर्हि सोऽयमुपकारः किं भावाद्भिद्यते न वा। आद्ये, आगन्तुकस्यैवोपकारस्य कारणता स्यात्, न त्वक्षणिकस्य भावस्य। आगन्तुकातिशयस्यान्वयव्यतिरेकावनुरुध्यैव कार्यस्योत्पत्त्यनुत्पत्त्योर्व्यवस्थितत्वात्। अथ बीजादिरूपादक्षणिकभावादभिन्नोऽतिशयः सहकारिभिस्तत्र भावे आधीयत इति चेत्, तर्हि प्राचीनो भावोऽनतिशयात्मा निवृत्तः। अन्य एव चायमतिशयात्मा कुर्वद्रूपादिपदवेदनीय उपजायत इति फलितं ममापि मनोरथद्रुमेण। तस्मादक्षणिकस्य चिरस्थायिनो भावस्यार्थक्रियाकारित्वलक्षणं सत्त्वं दुर्घटम्।

न च कणभक्षाक्षचरणपक्षकक्षीकारेण सत्तासामान्ययोगित्वमेव सत्त्वमिति वाच्यम्। सामान्यविशेषसमवायानां सामान्यायोगिनामसत्त्वप्रसङ्गात्। किं च सामान्यं सर्वगतं स्वाश्रयगतं वा। नाद्यः, वृत्तवर्त्तमानवर्त्तिष्यमाणानां सङ्करप्रसङ्गात्। नान्त्यः, सर्षपमहीधरादीनां विद्यमानसर्ववस्तूनां सङ्करप्रसङ्गात्। किञ्च विद्यमाने घटे वर्त्तमानं यत् सामान्यं तदन्यत्र जायमानेन घटेन सम्बध्यमानं किं तस्मादागच्छत् सम्बध्यते अनागच्छद्वा। नाद्यः, गमनक्रियावत्त्वे सामान्यस्य द्रव्यत्वापत्तेः। न द्वितीयः, सम्बन्धानुपपत्तेः। किंच विनष्टे घटे पराभिमतं सामान्यमवतिष्ठते, विनश्यति, स्थानान्तरं वा गच्छति। प्रथमे निराधारत्वापत्तिः। द्वितीये नित्यत्वहानिः। तृतीये द्रव्यत्वप्रसक्तिरित्यादिदूषणग्रहग्रस्तत्वात्सामान्यमप्रामाणिकम्। चिरकालमनुवृत्तो घट इत्यादिरूपः प्रत्ययः किमालम्बन इति चेत्, अघटव्यावृत्तिरूपो योऽन्यापोहः तदालम्बन इति सन्तोष्टव्यमायुष्मता।

तस्मादर्थक्रियाकारित्वलक्षणसत्त्वेनानुविद्धत्वात् सर्वं क्षणिकं क्षणिकमिति विभावनीयम्।

तथा सर्वस्य संसारस्य दुःखरूपत्वमप्यस्ति। अन्यथा तन्निवृत्तिमभिकाङ्क्षमाणानां प्रेक्षावतां ज्ञानवृद्धानां तन्निवृत्त्युपाये प्रवृत्त्यनुपपत्तेः। अतः सर्वं दुःखं दुःखमिति विभावनीयम्।

तथा इदं वस्तु किंवदिति पृष्टे दृष्टान्तो नोपलभ्यते। समनन्तरोपदर्शितया दिशा सर्वेषां वस्तूनां क्षणिकत्वेन सालक्षण्याभावात्। किञ्च एतेन सदृशमिदमिति वक्तुमेव न शक्यते। सर्वथा विसदृशत्वा-

भावे सति एतत् इदमित्याकारकभेदस्यैवानिर्वाहात् । तस्मात् सर्वं स्वलक्षणं स्वलक्षणमिति विभावनीयम् ।

एवं सर्वं शून्यं शून्यमित्यपि विभावनीयम् । तथाहि । वस्तुतत्त्वं सदसदुभयानुभयरूपचतुष्कोणविनिर्मुक्तं शून्यमेव । कथमिति चेच्छ्रूयताम् । यदि घटादेः सत्त्वं[1] स्वभावस्तर्हि कारकव्यापारवैयर्थ्यम् । यदाप्यसत्त्वं स्वभावस्तदापि स एव दोषः प्रादुःष्यात् । विरोधादितरावपि पक्षौ नोपपद्येते । तदुक्तं भगवता बुद्धेन—

> न सतः कारणाऽपेक्षा व्योमादेरिव युज्यते ।
> कार्यस्यासम्भवी हेतुः खपुष्पादेरिवाऽसतः ॥
> बुद्ध्या विविच्यमानानां स्वभावो नावधार्यते ।
> अतो निरभिलिप्यास्ते निःस्वभावाश्च दर्शिताः ॥
> इदं वस्तुबलायातं यद्वदन्ति विपश्चितः ।
> यथा यथार्थाश्चिन्त्यन्ते विशीर्यन्ते तथा तथा ॥ इति ॥

तदेवं भावनाचतुष्टयवशान्निखिलवासनानिवृत्तौ परं निर्वाणं शून्यरूपं सेत्स्यतीति वयं कृतार्था नास्माकमुपदेश्यं किञ्चिदस्तीति सर्वशून्यत्ववादिनां माध्यमिकानां मतस्थितिः ।

शिष्यैस्तावद्योगश्चाचारश्चेति द्वयं करणीयम् । तत्राप्राप्तार्थस्य प्राप्तये[2] यः पर्यनुयोगः[3] स योगः । गुरूक्तस्याङ्गीकरणम् आचारः । गुरूक्तस्याङ्गीकरणात् पर्यनुयोगस्याकरणाच्चैतेषां माध्यमिका इति प्रसिद्धिः ।

॥ इति माध्यमिकमतदर्शनम् ॥

केषाञ्चिद्बौद्धानां योगाचारा इति प्रथा । यतस्तैर्गुरूक्तभावनाचतुष्टयं बाह्यार्थस्य शून्यत्वं चाङ्गीकृत्य आन्तरार्थस्य शून्यत्वं कथमिति पर्यनुयोगस्यापि कृतत्वात् । एषा हि तेषां परिभाषा । स्वयंवेदनं[4] तावदङ्गीकार्यम् । अन्यथा जगदान्ध्यं प्रसज्येत । एवं च स्वव्यतिरिक्तग्राह्यविरहात् तत्तदात्मिका बुद्धिः स्वयमेव स्वात्मरूपप्रकाशिका । प्रकाशवदिति । तथा चोक्तम्—

---

१ सत्तासंबद्धत्वं विद्यमानत्वमिति यावत् ।

२ याथातथ्येनावगतये ।

३ शङ्कोत्थापनम् ।

४ बुद्धितत्त्वम् ।

नान्योऽनुभाव्यो बुद्ध्यास्ति तस्या नानुभवोऽपरः ।
ग्राह्यग्राहकवैधुर्यात्[1] स्वयं सैव प्रकाशते ॥ इति ।

ग्राह्यग्राहकयोरभेदश्च अनुमातव्यः । यद्वेद्यते येन वेदनेन तत् ततो न भिद्यते । यथा ज्ञानेनात्मानस्तैश्च[2] नीलादयो वेद्यन्ते । भेदे हि सति वेदनेन सहार्थस्य सम्बन्धित्वं न स्यात् । तादात्म्यस्य सम्बन्धनियमहेतोरभावात् । यस्त्वयं ग्राह्यग्राहकसंवित्तीनां पृथगवभासः स तु एकस्मिंश्चन्द्रे द्वित्वाऽवभास इव भ्रमः । अत्राप्यनादिरविच्छिन्नप्रवाहाद्भेदवासनव निमित्तम् । नन्वेवमाशामोदकानामुपार्जितमोदकानां च रसवीर्यविपाकादि तुल्यं स्यादिति चेन्मैवम् । वस्तुतो वेद्यवेदकाकारविधुराया अपि बुद्धेर्व्यवहर्तृज्ञानानुरोधेन विभिन्नग्राह्यग्राहकाकारवत्तया तिमिराद्युपहतदृष्टीनां[3] केशादिज्ञानभेदवत् अनाद्युपप्लववासनासामर्थ्याद्व्यवस्थोपपत्तेः पर्यनुयोगायोगात् । तस्माद्बुद्धिरेवानादिवासनावशादनेकाकाराऽवभासते इति सिद्धम् । ततश्च पूर्वोक्तभावनाचतुष्टयाभ्यासबलान्निखिलवासनोच्छेदेन विगलितविविधविषयाकारोपप्लवे विशुद्धविज्ञानोदय एव महोदयः ।

॥ इति योगाचारमतदर्शनम् ॥

सौत्रान्तिकास्त्वेवं मन्यन्ते । यथोक्तं बाह्यं वस्तुजातं नास्तीति तदयुक्तम् । नीलाद्यर्थस्य ज्ञानाकारत्वेऽहमिति प्रतिभासः स्यान्न त्विदमिति प्रतिपत्तिः । प्रत्ययादव्यतिरेकात्[4] । अथोच्यते—ज्ञानस्वरूपोऽपि नीलाकारो भ्रान्त्या भेदेन बहिर्वदवभासते, तस्मान्न तत्राहमित्युल्लेख इति । तदयुक्तम् । बाह्यार्थस्य सर्वथाऽभावे तदुत्पत्तिविरहाद्बहिर्वदित्यनुमानोक्तेरसम्भवात् । न हि वसुमित्रो वन्ध्यापुत्रवदवभासते इति प्रेक्षावानाचक्षीत । किञ्च भेदप्रतिभासस्य भ्रान्तत्वे अभेदप्रतिभासस्य प्रामाण्यं, तत्प्रामाण्ये भेदप्रतिभासस्य भ्रान्तत्वमित्यन्योन्याश्रयप्रसङ्गाच्च । ततश्चाविसंवादान्नीलतादिकमेव संविदाना ज्ञानिनो बाह्यमेवार्थं जगत्युपाददते उपेक्षन्ते चान्तरमिति व्यवस्थादर्शनात् अनुमेय एव बाह्योऽर्थो नापह्नोतुं शक्यते । यथा—पुष्ट्या भोजनमनुमीयते, यथा

---

१ ग्राह्यस्य बाह्यविषयजातस्य ग्राहकं बुद्धितत्त्वं तयोर्वैधुर्यं नाम ग्राह्यत्वेन ग्राहकत्वेन च रूपेण भेदराहित्यम् ।

२ चक्षुरादीनि पञ्चेन्द्रियाणि ।

३ नेत्ररोगविशेषस्तिमिरपदाभिधेयः ।

४ ज्ञानात् ।

च भाषया देशो, यथा वा सम्भ्रमेण स्नेहः, तथा ज्ञानाकारेण ज्ञेयं बाह्य वस्तुजातमनुमेयमेव । तथा च बाह्यार्थसद्भावेऽनुमानप्रयोगः । यस्मिन् सत्यपि कादाचित्कास्ते ततो भिद्यन्ते यथा सत्यपि दीपे घटादयः । तथा विवादाध्यासिताः प्रवृत्तिप्रत्ययाः सत्यप्यालयविज्ञाने कदाचिदेव नीलाद्युल्लेखना इति । तत्रालयविज्ञानं नाम अहमास्पदं विज्ञानम् । यच्च नीलाद्युल्लेखि तत् प्रवृत्तिविज्ञानं वेदितव्यम् । तस्मादालयविज्ञानातिरिक्तः प्रवृत्तिविज्ञानहेतुर्बाह्योऽर्थोऽनुमेयोऽस्त्येवेति दिक् ।

अत्रेदं वेदितव्यम् । सर्वोऽप्ययं प्रपञ्चकल्पद्रुमश्चित्तचैत्यात्मकः । तस्य च रूप-विज्ञान-वेदना-संज्ञा-संस्काराभिधाः पञ्च स्कन्धाः । तत्र रूप्यन्त इति कर्म्मव्युत्पत्त्या रूप्यन्ते एभिरिति च करणव्युत्पत्त्या शब्दादयो विषयाः श्रोत्रादीनि इन्द्रियाणि च रूपस्कन्धः । पूर्वोक्तस्यालयविज्ञानस्य प्रवृत्तिविज्ञानस्य च प्रवाहो विज्ञानस्कन्धः । उक्तस्कन्धद्वयसम्बन्धजन्यः सुखदुःखादिप्रत्ययप्रवाहो वेदनास्कन्धः । वेदनास्कन्धनिबन्धना रागद्वेषादयः क्लेशा मदमानादयश्चोपक्लेशा धर्माधर्मौ च संस्कारस्कन्धः तदिदं सर्वं दुःखं दुःखायतनं दुःखसाधनं चेति भावयित्वा तन्निरोधोपायं तत्त्वज्ञानं सम्पादयेत् । तत्र दुःखायतनसमुदयमार्गसंज्ञकानि चत्वारि तत्त्वानि बुद्धाभिमतानि । तेषु समनन्तरोक्तं स्कन्धपञ्चकं संसारिणो दुःखम् । पञ्च ज्ञानेन्द्रियाणि पञ्च विषया मनो बुद्धिश्चेति द्वादशकमायतनं दुःखस्य । यो हि रागद्वेषमदमानदम्भादीनां गणो नृणां हृदये समुदेति सोयं समुदयः । अयं च दुःखसाधनभूतः । क्षणिकाः सर्वे संस्कारा इत्येवंरूपा या स्थिरा वासना स एव मार्गः । एवंविधविमलतत्त्वज्ञानान्मोक्षः सम्पद्यते । तदेतत् तत्त्वज्ञानं पूर्वोक्तभावनाचतुष्टयदार्ढ्येन भवतीत्येवंरूपं सूत्रस्यान्तं परमरहस्यं पृच्छतामेषां कथयित्वा भवन्तः सूत्रस्यान्तं यतः पृष्टवन्तस्ततः सौत्रान्तिका भवन्त्विति भगवता बुद्धेनाभिधानात् सौत्रान्तिकास्ते व्यपदिश्यन्ते ।

॥ इति सौत्रान्तिकमतदर्शनम् ॥

वैभाषिकास्त्वेवं मन्यन्ते । बाह्यार्थानुमेयत्ववादो न साधीयान् । प्रात्यक्षिकस्य कस्यचिदर्थस्यासत्त्वेऽनुमानप्रवृत्त्यनुपपत्तेः । सर्वलोकानुभवविरोधाच्च । तस्मात् पदार्थो द्विविधः—ग्राह्योऽध्यवसेयश्चेति

भेदात्। तत्र ग्रहणं नाम प्रत्यक्षज्ञानं[1] विकल्पविनिर्मुक्तं[2] प्रमाणम्। अध्यवसायो नामाविसंवादिकल्पनारूपमनुमानम्। एवं च प्रत्यक्ष-प्रमाणेन सिद्धोऽर्थो ग्राह्य इति, अनुमानप्रमाणेन सिद्धश्चार्थोऽध्यवसेय इत्युच्यते। तदुक्तम्—

कल्पनाऽपोढमभ्रान्तं प्रत्यक्षं निर्विकल्पकम्।
विकल्पो वस्तुनिर्भासादसंवादादुपप्लवः॥
ग्राह्यं वस्तुप्रमाणं हि ग्रहणं यदितोऽन्यथा।
न तद्वस्तु न तन्मानं शब्दलिङ्गेन्द्रियादिजम्॥ इति।

भगवान् बुद्धो हि बाह्येषु गन्धादिषु आभ्यन्तरेषु च रूपादि-स्कन्धेषु सत्स्वपि तेष्वनास्थामुत्पादयितुं सर्वं शून्यमिति प्राथमिकान् विनेयान्[3] अचकथत्। द्वितीयांस्तु विज्ञानमात्रग्रहाविष्टान् विज्ञानमेवैकं सदिति। तृतीयान् उभयं सत्यमित्यास्थितान् विज्ञेयमनुमेयमित्युपादिशत्। सेयं विरुद्धा भगवतो भाषेति वर्णयन्त इमे वैभाषिकाख्या प्रख्याताः। उक्तं चैतद्बौद्धचित्तविवरणे वैभाषिकैः—

देशना[4] लोकनाथानां सत्त्वाशयवशानुगाः।
भिद्यन्ते बहुधा लोके उपायैर्बहुभिः किल॥ इति।

तस्माद्विनेयाशयानुरोधेनोपदेशभेदः साम्प्रदायिको न भवतीति न भणितव्यम्।

॥ इति वैभाषिकमतदर्शनम्॥

माध्यमिकादीनां चतुर्णामेषां बोधयिता यद्यपि भगवान् बुद्ध एक एव तथापि बोद्धव्यानां चातुर्विध्यं बोद्धृबुद्धिभेदात् समभवत्। यथा 'गतोऽस्तमर्कः' इत्युक्ते चोरजारानूचाना[5]दयः स्वस्वभावानुसारेण परस्वहरणपराङ्गनाभिसरणधर्म्माचरणसमयानवगच्छन्ति।

तदिदं चतुर्विधमपि बौद्धमतं संगृहीतं विवेकविलासे—

बौद्धानां सुगतो देवो विश्वं च क्षणभङ्गुरम्।
आर्यसत्त्वाख्यया तत्त्वचतुष्टयमिदं क्रमात्॥

---

१ इन्द्रियाऽर्थसन्निकर्षजन्यमित्यर्थः।

२ विकल्पशब्दोऽत्र भ्रमपर्यायः।

३ शिष्यान्।

४ उपदेशः।

५ वेदस्यानुवचनं कृतवान् यः सोऽनूचान इत्युच्यते। वेदोक्तधर्मानुष्ठानशील इति यावत्।

दुःखमायतनं चैव ततः समुदयो मतः ।
मार्गश्चेत्यस्य च व्याख्या क्रमेण श्रूयतामियम् ॥
दुःखं संसारिणः स्कन्धास्ते च पञ्च प्रकीर्त्तिताः ।
विज्ञानं वेदना संज्ञा संस्कारो रूपमेव च ॥
पञ्चेन्द्रियाणि शब्दाद्या विषयाः पञ्च मानसम् ।
धर्म्मा[1]यतनमेतानि द्वादशाऽयतनानि हि ॥
रागादीनां गणो योऽसौ समुदेति नृणां हृदि ।
आ[2]त्मात्मीयस्वभावाख्यः स स्यात् समुदयः पुनः ॥
क्षणिकाः सर्वसंस्कारा इति या वासना स्थिरा ।
स मार्ग इति विज्ञेयः स च मोक्षोऽभिधीयते ॥
प्रत्यक्षमनुमानं च प्रमाणद्वितयं मतम् ।
चतुःप्रस्थानिका बौद्धाः ख्याता वैभाषिकादयः ॥
अर्थो ज्ञानान्वितो वैभाषिकेण बहु मन्यते ।
सौत्रान्तिकेन प्र[3]त्यक्षग्राह्योऽर्थो न बहिर्मतः ॥
आकारसहिता बुद्धिर्योगाचारेण संमता ।
केवलां संविदं स्वस्थां मन्यन्ते मध्यमाः पुनः ॥
रागादिज्ञानसन्तानवासनाच्छेदसम्भवा ।
चतुर्णामपि बौद्धानां मुक्तिरेषा प्रकीर्त्तिता ॥
कृत्तिः कमण्डलुर्मौण्ड्यं चीरं पूर्वाह्णभोजनम् ।
सङ्घो रक्ताम्बरत्वं च शिश्रिये बौद्धभिक्षुभिः ॥ इति ।

---

तदित्थं मुक्तकच्छानां बौद्धानां मतमसहमाना विवसना जैनाः कथंचित् स्थायित्वमास्थाय क्षणिकत्वपक्षं प्रतिक्षिपन्ति । तथाहि—यद्यात्मा कश्चित् स्थायी नास्थीयेत तर्हि लौकिकफलसाधनं विफलं भवेत् । न ह्येतत् सम्भविष्यति 'अन्यः करोत्यन्यो भुङ्क्ते' इति । तस्माद्योऽहं पुरा कर्म्माकरवं सोऽहं सम्प्रति तत्फलं भुञ्जे इति पूर्वापरकालानुयायिनः स्थायिन आत्मनः स्पष्टप्रमाणावसिततया पूर्वापराङ्गविकलकालकलाऽवस्थितिलक्षणा क्षणिकता परीक्षाविचक्षणैरर्हद्भिर्न परिग्राह्या ।

---

१ धर्मायतनं बुद्धिः ।

२ रागादिगणेऽहङ्कारो मानपदाभिलाप्य आत्मस्वरूपः अन्ये आत्मीयस्वभावाः ।

३ बाह्योऽर्थः प्रत्यक्षग्राह्यो न मतः किन्त्वनुमेय एवेति ।

यदि मन्येथाः-"प्रमाणवत्त्वादायातः प्रवाहः केन वार्यते" इति न्यायेन 'यत् सत् तत् क्षणिकं यथा जलधरपटलमि' त्यादि पूर्वोपपादितप्रमाणेन क्षणिकतायाः प्रमितत्वात्। तदनुसारेण समानसन्तानवर्त्तिनामेव प्राचीनः प्रत्ययः कर्म्मकर्त्ता, फलभोक्ता तूत्तरः प्रत्ययः। न चातिप्रसङ्गः। मधुरसभावितानामाम्रबीजानां कर्षितायां भूमावुप्तानामङ्कुरकाण्डस्कन्धशाखापल्लवादिषु तद्द्वारा परम्परया यथा फले माधुर्यनियमो, यथा वा लाक्षारसावसिक्तानां कार्पासबीजानामङ्कुरादिपारंपर्येण कार्पासादौ रक्तिमनियमस्तथैव कारणभूतस्य पूर्वपूर्वप्रत्ययस्य कर्म्मकर्त्तृत्वम्, कार्यभूतस्य तूत्तरप्रत्ययस्य पारम्पर्येण फलभोक्तृत्वनियम इति विश्वजनीनानुभवादिति। तर्हि तदेतत् कुशकाशावलम्बनकल्पम्। विकल्पासहत्वात्। तथाहि-जलधरादौ दृष्टान्ते क्षणिकत्वमनेन प्रमाणेन प्रमितं प्रमाणान्तरेण वा। नाद्यः, भवदुक्तस्य क्षणिकत्वस्य क्वचिदप्यदृष्टचरत्वेन दृष्टान्तासिद्धावस्यानुमानस्यानुत्थानात्। नान्त्यः,तेनैव प्रमाणान्तरेण सर्वत्र क्षणिकत्वसिद्धौ सत्त्वहेतुकानुमानवैफल्यापत्तेः। न चोत्पादविनाशविधुरत्वरूपं सत्त्वं नास्माभिरङ्गीक्रियते किन्त्वर्थक्रियाकारित्वरूपमिति वाच्यम्। मिथ्यासर्पदंशादेरपि भयगात्रकम्पादिरूपार्थक्रियाकारित्वदर्शनेन सत्त्वापातात्। यदपि कार्यकारणभावसंवलितकार्पासादिदृष्टान्तोपन्यसनम्, तदप्युक्तिमात्रं न प्रमाणम्। बहुशो व्यभिचारदर्शनात्। न ह्युपाध्यायबुद्ध्यनुभूतं शिष्यबुद्धिः स्मरेत्, तदुचितकर्म्मफलमनुभवेद्वा। किञ्च सन्तानिव्यतिरेकेण सन्तानो न प्रमाणपदवीमारोढुमीष्टे। तस्मादस्ति स्थायी नित्य आत्मा। यमादाय सर्वोऽप्ययं प्रपञ्चो निर्वहतीति। तथा चोक्तं वीतरागस्तुतौ—

कर्त्ताऽस्ति नित्यो जगतः स चैकः<br>
स सर्वगः स स्ववशः स नित्यः।<br>
इमास्तु हेयाः कुविडम्बनाः स्यु-<br>
स्तेषां न येषामनुशासकस्त्वम् ॥ इति ॥

तस्मात् पुरुषार्थाभिलाषुकैः सौगती गतिर्नानुगन्तव्या किन्त्वार्हत्येव।

अर्हत्स्वरूपं चाप्तनिश्चयालङ्कारे अर्ह( ? )चन्द्रसूरिभिर्निरटङ्कि—

सर्वज्ञो जितरागादिदोषस्त्रैलोक्यपूजितः।<br>
यथास्थितार्थवादी च देवोऽर्हन् परमेश्वरः॥ इति ॥

अत्र मते जीवाऽजीवाख्ये द्वे तत्त्वे। तत्र बोधात्मको जीवः। अबोधात्मकस्त्वजीवः। तदुक्तं पद्मनन्दिना—

चिदचित् द्वे परे तत्त्वे विवेकस्तद्विवेचनम्।
उपादेयमुपादेयं हेयं हेयं च सर्वतः॥
हेयं तु कर्त्तृरागादितत्कार्यमविवेकिनः।
उपादेयं परं ज्योतिरुपयोगैकलक्षणम् ॥ इति।

अपरे पुनर्जीवाकाशधर्म्माऽधर्म्मपुद्गलाऽस्तिकायभेदाज्जीवाजीवयोरपरं प्रपञ्चमाचक्षते। अस्तिकायशब्दो जैनपरिभाषायां तत्त्वपर्यायः। एवं च जीवास्तिकायादीनि पञ्च तत्त्वानि।

तत्र जीवा द्विविधाः—संसारिणो मुक्ताश्च।

भवाद्भवान्तरप्राप्तिमन्तः संसारिणः। तेऽपि द्विविधाः—समनस्का अमनस्काश्च। तत्र शिक्षाक्रियाऽऽलापादिसंज्ञा येषामस्ति ते संज्ञिनः समनस्काः। अमनस्का अपि त्रसस्थावरभेदात् द्विविधाः। तत्र द्वीन्द्रियाः शङ्खगण्डोल[1]प्रभृतयस्त्रसाः। पृथिवीजलतेजोवायुवनस्पतयः स्थावराः। एषु पञ्चसु स्थावरेषु वनस्पतीनामेवामनस्कजीवत्वम्। शिक्षाक्रियाऽऽलापादिरूपसंज्ञाशून्यत्वे सतीन्द्रियवत्वात्। ननु वनस्पतीनां किमस्तीन्द्रियमिति चेत्, स्पर्शनमित्यवेहि। भवान्तरप्राप्तिविधुरा मुक्ता जीवाः।

अथाकाशो धर्म्माधर्म्मौ पुद्गलाश्चेत्येते त्रयोऽस्ति[2]काया अजीवस्यैव प्रपञ्चभूताः। तत्राद्यास्त्रयोऽनुमेया एव न कदापि प्रत्यक्षा भवन्ति।

तथा हि—

अन्यवस्तुप्रदेशमध्ये योऽन्यवस्तुनः प्रवेशो भवति सोऽयमुपकार आकाशस्यानुमापकः।

आलोकेनावच्छिन्नं नभ आलोकाकाशपदेन व्यपदिश्यते। तत्राकुण्ठितगतिरूपेणोपकारेण धर्म्मोऽनुमेयः। तथा चोक्तम्—

---

१ शङ्खमध्यवर्त्ती जन्तुविशेषः। तस्य हि श्रोत्रं चक्षुर्घ्राणं च न विद्यते, तत्कर्तृकस्य शब्दादितत्तद्विषयग्रहणस्यानुपलब्धेः। त्वग्रसने तु विद्येते स्पर्शादितत्तद्विषयग्रहणस्य तत्कर्तृकस्योपलम्भात्। यत्रैवं स्वभाव उपलभ्यते तेषां क्षुद्रजन्तूनां प्रभृतिपदेन ग्रहणमिति प्राहुः।

२ तत्त्वानि।

गत्वा गत्वा निवर्त्तन्ते चन्द्रसूर्यादयो ग्रहाः।
अद्यापि न निवर्त्तन्ते आलोकाकाशमागताः॥ इति।

एवं च 'मुक्तिसाधनं धर्म्म' इति फलति। ननु मुक्तानां कथमूर्ध्वगतिर्भवतीति चेत्, इत्थम्—यथा मृत्तिकाविलिप्तमलाबुद्रव्यं जलेऽधः पतति पुनरपेतमृत्तिकाबन्धं सदूर्ध्वं गच्छति। तथा कर्म्मबन्धविनिर्मुक्त आत्माऽसङ्गत्वादूर्ध्वं गच्छतीति।

स्थित्यनुमेयस्त्वधर्म्मः।

स्पर्शरसवर्णवन्तः पुद्गलाः। ते च द्विविधाः—अणुस्कन्धभेदात्। भोक्तुमशक्या अणवः। द्व्यणुकादयः स्कन्धाः। तत्र द्व्यणुकादिस्कन्धानां भेदा[1]दणव उत्पद्यन्ते। अण्वादीनां सङ्घा[2]तात् द्व्यणुकादय उत्पद्यन्ते। क्वचिद्भेदसङ्घाताभ्यां स्कन्धोत्पत्तिः। अत एव पूरयन्ति गलन्ति इत्यन्वर्थं नामधेयं पुद्गला इति। ते च—पृथिवी जलं तेजो वायुरिति भेदाच्चतुर्विधा इति बोध्यम्।

केचिज्जैना जीवाऽजीवाऽऽस्रवबन्धसंवरनिर्जरामोक्षाख्यानि सप्त तत्त्वानि कथयन्ति। तत्र जीवः संसारिमुक्तभेदेन द्विविधः पूर्वं निरूपितः। आकाशादयो ह्यजीवा अपि पूर्वं निरूपिता एव।

आस्रवो निरूप्यते—

औदरिकाग्निकायादिचलनद्वारेणात्मनश्चलनं योगपदव्यपदेश्यमास्रवः। यथा सलिलावगाहि द्वारं नद्यास्रवणकारणत्वादास्रव इति निगद्यते, तथा योगप्रणालिकाऽपि कर्म्मास्रवणकारणं भवतीति योग आस्रवपदेन परिभाष्यते। यथा ह्यार्द्रं वस्त्रं समन्ताद्वातानीतं रेणुजातमुपादत्ते, तथा कषायजलार्द्र आत्मा योगवातानीतं कर्म्मलक्षणं रेणुजातमुपादत्ते। यथा वा—निष्टप्तायःपिण्डः स्वस्मिन् क्षिप्तमम्भः समन्ताद्गृह्णाति, तथैव कषायोष्णो जीवो योगानीतं कर्म्म समन्ताद्गृह्णातीति बोध्यम्। कषति हिनस्त्यात्मानं कुगतिप्रापणादिति कषायः क्रोधो मानो माया लोभश्च। सोऽयं योगपदवाच्य आस्रवो द्विविधः—शुभाशुभभेदात्। तत्राहिंसादिः शुभः काययोगः। सत्यमि-

१ भङ्गात्।
२ संयोगात्।

तभाषणादिः शुभो वाग्योगः । उक्तयोगद्वयाद्विरुद्धो हिंसाऽनृतभाषणादिरशुभः कायादियोगः । शुभयोगः पुण्यस्य मूलम्, अशुभयोगस्तु पापस्य ।

मिथ्यादर्शनाऽविरतिप्रमादकषायवशाद्योगवशाच्चात्मा सूक्ष्मैकप्रदेशावगाहिनामनन्तानन्तप्रदेशानां पुद्गलानामाश्लेषणं यत् करोति सोऽयं बन्धः। तत्र मिथ्यादर्शनं वस्तुतत्त्वानिश्चयः। तच्च द्विविधम्—मिथ्याकर्म्मोदयान्नैसर्गिकं[1] तत्त्वाश्रद्धानमेकम्। परोपदेशजन्यं द्वितीयम्। अविरतिर्नाम शब्दादिविषयेभ्य इन्द्रियाणामसंयमनम् । पुण्यकर्म्मस्वनुत्साहः प्रमादः। कषाया उक्ताः।

आस्रवलक्षणं भवप्रवाहद्वारं संवृणोतीति संवरः । स च गुप्तिसमित्यादिरूपो जीवे प्रविशत् कर्म्मजातं प्रतिषेधति । संसारकारणादात्मनो गोपनं गुप्तिः । सा चाशुभकर्म्मभ्यः कायवाङ्मनोनिग्रहरूपा । समितिस्तु प्राणिपीडापरिहारेण सम्यगयनं गमनं सम्यग्वर्त्तनम्।

अर्जितस्य कर्म्मणः केशोल्लुञ्चनादितपःप्रभृतिभिर्निर्जरणं निर्जरासंज्ञकं तत्त्वम्। सा च निर्जरा द्विविधेति प्रोच्यते। यथाऽऽहुस्तत्त्वविदः-

संसारबीजभूतानां कर्म्मणां जरणादिह ।
निर्जरा संस्मृता द्वेधा सकामा कामवर्जिता ॥
स्मृता सकामा यमिनाम्[2]अकामा त्वन्यदेहिनाम्[3]। इति ॥

निःशेषकर्म्मबन्धोच्छेदादसंगत्वेनावस्थानं मोक्षः । बन्धमोक्षयोः कारणमुक्तं तत्त्ववेदिभिः—

आस्रवो बन्धहेतुः स्यात् संवरो मोक्षकारणम् ।
इतीयमार्हती मु(? द )ष्टिरन्यदस्याः प्रपञ्चनम् ॥ इति ।

तथार्हत्प्रवचनसङ्ग्रहपरे आगमसारेऽप्युक्तम्—'सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः' इति। विवृतं चैतद्योगदेवेन—येन रूपेण जीवाद्यर्थो व्यवस्थितस्तेन रूपेणार्हतप्रतिपादितेऽर्थे विपरीताभिनिवेशराहि-

---

१ स्वाभाविकं परोपदेशानापेक्षमिति यावत् ।

२ यमिनो मुमुक्षवः ।

३ अन्यदेहिनो जीवन्मुक्ताः ।

गत्वा गत्वा निवर्त्तन्ते चन्द्रसूर्यादयो ग्रहाः ।
अद्यापि न निवर्त्तन्ते आलोकाकाशमागताः ॥ इति ।

एवं च 'मुक्तिसाधनं धर्म्मं' इति फलति । ननु मुक्तानां कथमूर्ध्वगतिर्भवतीति चेत्, इत्थम्—यथा मृत्तिकाविलिप्तमलाबुद्रव्यं जलेऽधः पतति पुनरपेतमृत्तिकाबन्धं सदूर्ध्वं गच्छति । तथा कर्म्मबन्धविनिर्मुक्त आत्माऽसङ्गत्वादूर्ध्वं गच्छतीति ।

स्थित्यनुमेयस्त्वधर्म्मः ।

स्पर्शरसवर्णवन्तः पुद्गलाः । ते च द्विविधाः—अणुस्कन्धभेदात् । भोक्तुमशक्या अणवः । द्व्यणुकादयः स्कन्धाः । तत्र द्व्यणुकादिस्कन्धानां भेदा[1]दणव उत्पद्यन्ते । अण्वादीनां सङ्घा[2]तात् द्व्यणुकादय उत्पद्यन्ते । कचिद्भेदसङ्घाताभ्यां स्कन्धोत्पत्तिः । अत एव पूरयन्ति गलन्ति इत्यन्वर्थं नामधेयं पुद्गला इति । ते च—पृथिवी जलं तेजो वायुरिति भेदाच्चतुर्विधा इति बोध्यम् ।

केचिज्जैना जीवाऽजीवाऽऽस्रवबन्धसंवरनिर्जरामोक्षाख्यानि सप्त तत्त्वानि कथयन्ति । तत्र जीवः संसारिमुक्तभेदेन द्विविधः पूर्वं निरूपितः । आकाशादयो ह्यजीवा अपि पूर्वं निरूपिता एव ।

आस्रवो निरूप्यते—

औदरिकाग्निकायादिचलनद्वारेणात्मनश्चलनं योगपदव्यपदेश्यमास्रवः । यथा सलिलावगाहि द्वारं नद्यास्रवणकारणत्वादास्रव इति निगद्यते, तथा योगप्रणालिकाऽपि कर्म्मास्रवणकारणं भवतीति योग आस्रवपदेन परिभाष्यते । यथा ह्यार्द्रं वस्त्रं समन्ताद्वातानीतं रेणुजातमुपादत्ते, तथा कषायजलार्द्र आत्मा योगवातानीतं कर्म्मलक्षणं रेणुजातमुपादत्ते । यथा वा—निष्टप्तायःपिण्डः स्वस्मिन् क्षिप्तमम्भः समन्ताद्गृह्णाति, तथैव कषायोष्णो जीवो योगानीतं कर्म्म समन्ताद्गृह्णातीति बोध्यम् । कषति हिनस्त्यात्मानं कुगतिप्रापणादिति कषायः क्रोधो मानो माया लोभश्च । सोऽयं योगपदवाच्य आस्रवो द्विविधः—शुभाशुभभेदात् । तत्राहिंसादिः शुभः काययोगः । सत्यमि-

---

१ भङ्गात् ।
२ संयोगात् ।

तभाषणादिः शुभो वाग्योगः । उक्तयोगद्वयाद्विरुद्धो हिंसाऽनृतभाषणादिरशुभः कायादियोगः । शुभयोगः पुण्यस्य मूलम्, अशुभयोगस्तु पापस्य ।

मिथ्यादर्शनाऽविरतिप्रमादकषायवशाद्योगवशाच्चात्मा सूक्ष्मैकप्रदेशावगाहिनामनन्तानन्तप्रदेशानां पुद्गलानामाश्लेषणं यत् करोति सोऽयं बन्धः। तत्र मिथ्यादर्शनं वस्तुतत्त्वानिश्चयः। तच्च द्विविधम्—मिथ्याकर्म्मोदयान्नैसर्गिकं[1] तत्त्वाश्रद्धानमेकम्। परोपदेशजन्यं द्वितीयम्। अविरतिर्नाम शब्दादिविषयेभ्य इन्द्रियाणामसंयमनम्। पुण्यकर्म्मस्वनुत्साहः प्रमादः। कषाया उक्ताः।

आस्रवलक्षणं भवप्रवाहद्वारं संवृणोतीति संवरः। स च गुप्तिसमित्यादिरूपो जीवे प्रविशत् कर्म्मजातं प्रतिषेधति। संसारकारणादात्मनो गोपनं गुप्तिः। सा चाशुभकर्म्मभ्यः कायवाङ्मनोनिग्रहरूपा। समितिस्तु प्राणिपीडापरिहारेण सम्यगयनं गमनं सम्यग्वर्त्तनम्।

अर्जितस्य कर्म्मणः केशोल्लुञ्चनादितपःप्रभृतिभिर्निर्जरणं निर्जरासंज्ञकं तत्त्वम्। सा च निर्जरा द्विविधेति प्रोच्यते। यथाऽऽहुस्तत्त्वविदः-

> संसारबीजभूतानां कर्म्मणां जरणादिह।
> निर्जरा संस्मृता द्वेधा सकामा कामवर्जिता॥
> स्मृता सकामा यमिनाम[2]कामा त्वन्यदेहिनाम्[3]। इति॥

निःशेषकर्म्मबन्धोच्छेदादसंगत्वेनावस्थानं मोक्षः। बन्धमोक्षयोः कारणमुक्तं तत्त्ववेदिभिः—

> आस्रवो बन्धहेतुः स्यात् संवरो मोक्षकारणम्।
> इतीयमार्हती मु(? द )ष्टिरन्यदस्याः प्रपञ्चनम्॥ इति।

तथार्हत्प्रवचनसङ्ग्रहपरे आगमसारेऽप्युक्तम्—'सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः' इति। विवृतं चैतद्योगदेवेन—येन रूपेण जीवाद्यर्थो व्यवस्थितस्तेन रूपेणार्हतप्रतिपादितेऽर्थे विपरीताभिनिवेशराहि-

---

१ स्वाभाविकं परोपदेशानापेक्षमिति यावत्।

२ यमिनो मुमुक्षवः।

३ अन्यदेहिनो जीवन्मुक्ताः।

स्वरूपं सम्यग्दर्शनम् । येन स्वभावेन जीवादयो व्यवस्थितास्तेनैव स्वभावेन संशयसंमोहरहितोऽवबोधः सम्यग्ज्ञानम् । तद्धि श्रद्धावतो जीवस्य गुरूपदिष्टश्रवणमननाद्यभ्यासपाटवेन ज्ञानावरकाणां पूर्वोपपादितमिथ्यादर्शनाविरतिप्रमादादीनामुपशमे सति स्वयमेव समुदेति। संसरणकर्म्मोच्छेदायोद्यतस्य श्रद्दधानस्य ज्ञानवतो जीवस्य पापकर्म्मभ्यो निवृत्तिः सम्यक्चारित्रम्। एतानि सम्यग्ज्ञानादीनि समुदितान्येव मोक्षकारणं न तु प्रत्येकम् । एतत्त्रयं चार्हतै रत्नत्रयपदेन व्यवह्रियते इति दिक् ।

॥ इति जैनमतदर्शनम् ॥

---

समनन्तरोक्तानां चार्वाकादिजैनान्तानां षड्विधनास्तिकानां सामान्यतो निर्देशः स्मृतिग्रन्थेषूपलभ्यते । यथाह मनुश्चतुर्थाध्याये—

पाखण्डिनो विकर्म्मस्थान् बैडालव्रतिकान् शठान् ।
हैतुकान् बकवृत्तींश्च वाङ्मात्रेणापि नार्चयेत् ॥

( मनु० ४।३० ) इति ।

पाखण्डिनो वेदबाह्यव्रतलिङ्गधारिणः शाक्यभिक्षुकादयः । हैतुका वेदविरोधितर्कव्यवहारिण इति कुल्लूकभट्टः । तृतीयेऽध्याये—

ये स्तेनपतितक्लीबा ये च नास्तिकवृत्तयः ।
तान् हव्यकव्ययोर्विप्राननर्हान् मनुरब्रवीत् ॥

( मनु० ३।१५० ) इति ।

तथा पाखण्डमतदर्शकनिबन्धानां सयुक्तिकमनर्थहेतुत्वं प्रोवाच स एव द्वादशेऽध्याये—

या वेदबाह्याः[1] स्मृतयो याश्च काश्च कुदृष्टयः ।
सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः ॥
उत्पद्यन्ते च्यवन्ते च यान्यतोऽन्यानि कानिचित् ॥
तान्यर्वाक्कालिकतया निष्फलान्यनृतानि च ॥

(मनु० १२।९५-९६) इति ।

---

१ याः स्मृतयो वेदबाह्या वेदमूला न सन्ति याश्च काश्च देवताऽपूर्वादिनिराकरणात्मिका असत्तर्कमूलाः कुदृष्टयः चार्वाकादिदर्शनानि ।

२ अतोऽस्माद्वेदात् अन्यानि अन्यमूलानि यानि कानि चिन्मतानि । तान्यर्वाक्कालिकतया पौरुषेयत्वात् यथोत्पद्यन्ते तथा च्यवन्ते नश्यन्त्यपि । स्पष्टमन्यत् ।

तथा वाल्मीकिरामायणेऽयोध्याकाण्डेऽपि पितृवचनाद्वनं गत्वा चित्रकूटमधितिष्ठतो रामभद्रस्य पुनरयोध्यां प्रत्यानयनाय कृतबहुविधप्रार्थने भरते जाबालिनामकेन केनचिन्मुनिना 'पितृशासनस्य परिपालने न किंचिद्दृष्टं पुण्यमुपजायते, नापि भङ्गे किंचित् पापम्। तस्मात् साकेतं गत्वा राज्यसुखानुभव एव कर्त्तुमुचित' इत्यर्थसमर्थनाय नास्तिकमतमुपन्यस्तमेकेनाध्यायेन। ततः प्रकुपितेन रामचन्द्रेणोक्तम्—

यथा हि चोरः स तथा हि बुद्धस्
तथागतं नास्तिकमत्र विद्धि।
(वा०रा०अयो०का० १०९।३४) इति।

अत्र बुद्धशब्दो नास्तिकविशेषवाची तत्पर्याय एव च तथागत[1]-शब्दः प्रयुज्यमानो दृश्यते। तथा चैवमादिप्राचीनस्मृत्यादिग्रन्थपर्यालोचनया युगान्तरेऽपि बुद्धादयो नास्तिका आसन्नित्यवगम्यते। परन्तु प्राक्तनयुगसमये सनातनं वैदिकाध्वानमनुसृतवन्तो महोदारचरित्राः पराक्रमशालिनो राजानस्तथा सदाचारनिरताः श्रुताध्ययनसम्पन्नाः कृतधियश्च विप्राः प्ररूढाङ्कुरमधर्म्ममुन्मूलयाञ्चक्रुस्तस्मान्न तदानीं नास्तिकमतं प्रचरितुमशकत्। तदेतदाह मनुर्नवमेऽध्याये—

कितवान् कुशीलवान् क्रूरान् पाखण्डस्थांश्च मानवान्।
विकर्म्मस्थान् शौण्डिकांश्च क्षिप्रं निर्वासयेत् पुरात्॥
एते राष्ट्रे वर्तमाना राज्ञः प्रच्छन्नतस्कराः।
विकर्म्मक्रियया नित्यं बाधन्ते भद्रिकाः प्रजाः॥
(मनु० ९।२२५-२२६) इति।

कलियुगे तु प्रमादालस्याज्ञानादिना निरुद्यमेषु विषयान्धतया सुप्तप्रायेषु क्षत्रियेषु विद्याशीलादिविहीनेषु च ब्राह्मणेषु निर्भयाश्चार्वाकबौद्धादयः श्रौतस्मार्त्तधर्म्ममुन्मूलयितुं बद्धपरिकरा बभूवुः।

पौराणिकास्त्वेवं मन्यन्ते—

तिष्ये[2] धर्म्मनृपस्य राज्यसमयात् काले व्यतीतेऽल्पके
श्रीविष्णोरवतार एष नवमो बुद्धाभिधानोऽभवत्।

---

१ "सर्वज्ञः सुगतो बुद्धो धर्मराजस्तथागतः" इत्यमरः।

२ कलौ।

नीचानामसतां विमोहजननं श्रौताध्वनिन्दामिषात्
भूताऽहिंसनमुख्यधर्म्ममतनोत् सर्वज्ञ एष प्रभुः ॥ इति।

अथात्र केचिदर्वाञ्चः शोधकास्त्वित्थं सम्प्रचक्षते—

आदौ लोकायतमतप्रकाशनमहापटुः।
वेदबद्धं महामार्गं खण्डितुं यत्नमातनोत् ॥
ततो बौद्धा मुक्तकच्छास्ततो जैना दिगम्बराः
श्वेताम्बराश्च ते[1] इति नास्तिका बहुरूपिणः ॥
पुराकाले बुद्धनाम्ना पुरुषेण प्रकाशितम्
बौद्धं मतमथैनं हि द्विजाः पाखण्डिनं जगुः ॥
निर्वासयामासुरमुं वर्णाः सर्वे स्वदेशतः।
ततः स सिंहलद्वीपं तिबेटं चीनभूमिकाम् ॥
ब्रह्मदेशं च गत्वाऽथ बौद्धधर्म्मं समातनोत्।
ततः कालेनात्र खण्डे भारते विक्रमात् पुरा ॥
खमुन्यम्भोधिविमिते वर्षे वीराह्वयो नरः।
प्राचारयज्जैनधर्म्मं बौद्धधर्म्मसमप्रभम् ॥
एतस्मिन्नेव समये नाना पाखण्डरूपिणः।
कापालिकाश्च नाथाश्च चार्वाकाद्याश्च जज्ञिरे ॥ इति।

जैनेषु विवसनाः सवसनाश्चेति भेदद्वयं प्रबन्धचिन्तामणिग्रन्थान्मेरुतुङ्गाचार्यविरचिताल्लभ्यते। तथा हि—श्रीकर्णराजपुत्रो मयणल्लदेवीसुतो गुर्जरधराधिपतिर्जयसिंहापरनामधेयः श्रीसिद्धराजो विक्रमार्कसमयात् अनन्तरं सार्द्धैकादशशती( ११५० )मितसंवत्सरे राज्यपदमधिरुह्यैकोनपञ्चाशद्वर्षपर्यन्तं राज्याधिकारं निर्वाहयामास। तदानीमेकदा श्रीदेवसूरिनामा जैनाचार्यः शिष्यवर्गसमेतः श्रीपत्तने चातुर्मास्यमुवास। तस्मिन्नवसरे कुमुदचन्द्रनामा दिगम्बरस्तेषु तेषु देशेषु चतुरशीतिवादैर्वादिनो विजित्य कर्णाटकदेशात् गुर्जरदेशं विजेतुं कर्णावतीं नगरीमाजगाम। ततः स कुमुदचन्द्रः—

हंहो श्वेतपटाः किमेष कपटाऽऽटोपोक्तिसंटङ्कितैः
संसाराऽवटकोटरेऽतिविकटे मुग्धो जनः पात्यते।

१ जैनाः।

तत्त्वाऽतत्त्वविचारणासु यदि वो हेवाक[1] आस्ते तदा
सत्यं कौमुदचन्द्रमङ्घ्रियुगलं रात्रिंदिवं ध्यायत ॥

इति विलिख्य देवसूरिं प्रति प्राहिणोत् । तदनु तच्चरणासक्तपरमाणुर्बुद्धिवैभवाऽगणितचाणक्यो माणिक्याह्वयपण्डितः—

कः कण्ठीरव[2]कण्ठकेसरसटाभारं स्पृशत्यङ्घ्रिणा
कः कुन्तेन शितेन नेत्रकुहरे कण्डूयनं काङ्क्षति ।
कः सन्नह्यति पन्नगेश्वरशिरोरत्नं वतंसश्रिये
यः श्वेताम्बरशासनस्य कुरुते वन्द्यस्य निन्दामिमाम् ॥

इति लिखित्वा कुमुदचन्द्रं प्रति प्राहिणोत् । ततः कस्मिंश्चिदहनि परिष्कृतायां सदसि बहूनां विद्वज्जनानां समाजे श्रीसिद्धराजसमक्षं कुमुदचन्द्रदेवसूरिनामधेययोर्दिगम्बरसिताम्बरयोः स्वस्वमतं समर्थयितुं विवदमानयोः सतोः श्रीदेवसूरिणा कुमुदचन्द्रः पराजितः । तदानीं जयप्रशस्तिपद्यमुदाजहारोदयप्रभदेवः—

भेजेऽवकीर्णितां[3] नग्नः कीर्त्तिकन्थां[4]मुपार्जयन् ।
तां देवसूरिरा[5]च्छिद्य पुनर्निर्ग्रन्थतां[6] व्यधात् ॥ इति ।

---

अथास्तिकानां षड् दर्शनानि निरूपणीयानि तत्रादौ न्यायमतं प्रदर्श्यते—

'पदार्थतत्त्वज्ञानान्निःश्रेयसाऽधिगमः' इति न्यायशास्त्रस्य सिद्धान्तः । तथा च पारमर्षं सूत्रम्—"प्रमाण-प्रमेय-संशय-प्रयोजन-दृष्टान्त-सिद्धान्ता-ऽवयव-तर्क-निर्णय-वाद-जल्प-वितण्डा – हेत्वा-

---

१ उत्कर्षविषयकोऽभिलाषविशेषः ।

२ कण्ठीरवः सिंहः ।

३ क्षतव्रतताम् ।

४ नानाविधवस्त्रखण्डविरचितां प्रावारपटीम् ।

५ आहृत्य ।

६ निर्गतो ग्रन्थो वसनावगुण्ठनं यस्मात् स तथाविधस्तस्य भावस्तत्ता तां नग्नताम् । अर्थान्तरे निर्ग्रन्थताम् अध्ययनशून्यतां मूर्खतामित्यर्थः ।

भास-च्छल-जाति-निग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाऽधिगमः" इति पञ्चाध्यायीरूपस्य गौतमप्रणीतन्यायसूत्रग्रन्थस्येदमादिमं सूत्रम्।

उद्देशलक्षणपरीक्षाभिरस्य शास्त्रस्य त्रिधा प्रवृत्तिः। उद्देशो हि नाममात्रेण वस्तुसङ्कीर्त्तनम्। तच्चोपदर्शिते सूत्रे एव कृतम्। लक्षणं त्वसाधारणधर्म्मवचनम्। यथा गोः सास्नाविषाणादिमत्त्वम्। एवं रीत्या लक्षितस्य वस्तुनो लक्षणमुपपद्यते नवेति विचारः परीक्षा।

अत्रोच्यन्ते हि वस्तूनां लक्षणानि यथायथम्।
प्रायेण गौरवभिया परीक्षा न प्रतन्यते॥

तत्र तावत् प्रथमोद्दिष्टस्य प्रमाणस्य लक्षणं प्रमाकरणमिति ॥ १॥ यथार्थानुभवो हि प्रमेत्यभिधीयते। यथा छिदाकरणस्य परशोश्छिदैव फलं तथा प्रमाकरणस्य प्रमाणस्यापि प्रमैव फलम्। तच्च प्रमाणं चतुर्विधम्—प्रत्यक्षाऽनुमानोपमानशब्दभेदात्।

तत्रेन्द्रियार्थसन्निकर्षजन्यं[1] ज्ञानं प्रत्यक्षम्। तच्च श्रावण-त्वाच—चाक्षुष-रासन-घ्राणज—मानसिकभेदात् षड्विधम्। षड्विधेऽपि प्रत्यक्षज्ञाने करणानि यथासङ्ख्येन श्रोत्र-त्वक्-चक्षू-रसना-घ्राण—मनांसि प्रमाणानि। श्रोत्रेण शब्दो गृह्यते। त्वचा स्पर्शास्तद्वन्ति द्रव्याणि च। चक्षुषा रूपं रूपवन्ति द्रव्याणि रूपिद्रव्याश्रिताः संयोग-विभाग-परिमाण[2]-सङ्ख्या-स्नेह-द्रवत्वादयो गुणाः स्पन्दनाद्याः क्रियाश्च गृह्यन्ते। रसनया रसः। घ्राणेन गन्धः। मनसा हि सुखं दुःखमिच्छा द्वेषः प्रयत्नो ज्ञानं च गृह्यते। येनेन्द्रियेण यद्गृह्यते तेनैवेन्द्रियेण तद्गतं सामान्यं[3] तदभावश्च[4] गृह्यते[5] इति दिक्।

---

१ आत्मा मनसा संयुज्यते मन इन्द्रियेणेन्द्रियमर्थेन ततः प्रत्यक्षज्ञानं तत्तत्पदार्थविषयकमुपजायते। यथा हि चरमभावी कुठारकाष्ठयोः सम्बन्धश्छिदां जनयति छिदायां च कुठारः करणं न काष्ठम्। तथैवेन्द्रियपदार्थयोश्चरमभावी सम्बन्धः साक्षात्कारं जनयति तत्र चेन्द्रियं करणं न पदार्थः।

२ अल्पमध्यममहदादिलक्षणम्।

३ गोत्वादिजातिरूपम्।

४ गवाद्यभावः।

५ प्रत्यक्षीक्रियते।

साध्यहेत्वोः साहचर्यनियमात्मकव्याप्तिग्रहरूपमनुमितेः करणम्—अनुमानम्। तच्च त्रिविधम्—अन्वयव्यतिरेकि, केवलान्वयि, केवलव्यतिरेकि चेतिभेदात्। यत्सत्त्वे यत्सत्त्वमन्वयः। यदभावे यदभावो व्यतिरेकः। आद्यस्यानुमानस्य प्रयोगो यथा 'पर्वतो वह्निमान् धूमात्' इति। अत्रोभयविधोऽपि दृष्टान्तः सम्भवति। यत्र धूमस्य सत्त्वं तत्र वह्नेरपि सत्त्वं यथा महानसे इत्यन्वयदृष्टान्तः। यत्र वह्निर्नास्ति तत्र धूमोऽपि नास्ति यथा ह्रदे इति व्यतिरेकदृष्टान्तः। द्वितीयस्य यथा 'सर्वमभिधेयम् प्रमेयत्वात्' इति। अत्र प्रमेयत्वाभावस्य क्वाप्यविद्यमानत्वाद्व्यतिरेकदृष्टान्तासम्भवः। तृतीयस्य यथा 'आत्मा इतरेभ्यो भिद्यते ज्ञानवत्त्वात्' इति। अत्रात्मव्यतिरिक्तस्य पदार्थमात्रस्य जडत्वेन ज्ञानशून्यत्वादन्वयदृष्टान्तासम्भव इति दिक्।

उपमितिकरणम्—उपमानम्। तच्च सादृश्यज्ञानरूपम्[1]। यथा गोसादृश्यज्ञानेन गवयविषयकमुपमितिज्ञानं जायत इत्यलम्।

शाब्दप्रमितिकरणं शब्दः। स चाप्तवाक्यात्मकः। आप्तस्तु यथार्थवक्ता। वाक्यं पदसमूहः। स्वार्थबोधने शक्तिमन्ति च पदानि। तत्रागृहीतशक्तिकपदनिचयाच्छाब्दप्रमितेरसम्भवाद् गृहीतशक्तिकपदसमूहात्मकः शब्दः शाब्दबोधे साधनं भूत्वा प्रमाणपदवीमारोहति। तथा च शब्देन शाब्द्यां प्रमायां जनयितव्यायां नियमेन सहकारी शक्तिग्रहोऽपेक्ष्यते। तत्र पदपदार्थयोः सम्बन्धः शक्तिः। स च सम्बन्धः—'अस्मात् पदादयमर्थो बोद्धव्यः' इतीच्छारूपः सनातन आधुनिको वा। शक्तिग्रहश्च कोशव्याकरणवृद्धव्यवहारादितो भवति। तत्र 'अग्निर्वैश्वानरो वह्निः' इत्यादिकोशाद्वैश्वानरादिपदानामग्न्यादौ शक्तिग्रहः। तथा धातुप्रातिपदिकादिप्रकृतीनां तिङ्सुप्कृत्तद्धितादिप्रत्ययानां च शक्तिग्रहो व्याकरणाद्भवति। एवं वृद्धव्यवहारादपि शक्तिग्रहः—यथा प्रयोजकवृद्धेन 'घटमानय' इत्युक्तं वाक्यं श्रुत्वा प्रयोज्यवृद्धेन घटमानीतमवधार्य[2] बालो 'घटानयनकार्यं घटमानयेति शब्दप्रयोज्यम्' इत्यवधारयति। ततश्च 'घटं नय' 'गामानय' इत्यादिवाक्यादावावापोद्वापाभ्यां[3] घटादौ घटादिपदानां शक्तिं गृह्णातीति दिक्।

---

१ तद्भिन्नत्वे सति तद्गतभूयोधर्म्मवत्त्वं हि सादृश्यम्।

२ निश्चित्य।

३ वाक्ये पदान्तरस्य प्रक्षेपे आवापः, कस्यचित् पदस्य उत्सर्गे उद्वापः।

स्वपक्षस्थापनया विहीनः कथाशेषो वितण्डा ॥ ॥ १२ ॥

वादिप्रतिवादिनोः पक्षप्रतिपक्षविचारः कथाशब्देनाभिधीयते ।

साध्यस्यासाधको हेतुर्हेत्वाभासः ॥ १३ ॥

शब्दवृत्तिव्यत्ययेन प्रतिषेधहेतुश्छलम् ॥ १४ ॥

स्वपक्षव्याघातकमुत्तरं जातिः ॥ १५ ॥

पराजयनिमित्तं निग्रहस्थानम् ॥ १६ ॥ तच्च द्वाविंशतिप्रकारकम् । प्रतिज्ञाहानिः, प्रतिज्ञान्तरम्, प्रतिज्ञाविरोधः, प्रतिज्ञासंन्यासो, हेत्वन्तरोक्तिः, अर्थान्तरोक्तिः, निरर्थकोक्तिः, अविज्ञातार्थकोक्तिः, अपार्थकोक्तिः, अप्राप्तकालोक्तिः, न्यूनोक्तिः, अधिकोक्तिः, पुनरुक्तिः, अननुभाषणम्, अज्ञानम्, अप्रतिभा, अविक्षेपो, मतानुज्ञा, पर्यनुयोज्योपेक्षणं, निरनुयोज्यानुयोगः, अपसिद्धान्तः, हेत्वाभासश्चेति भेदात् । अत्र सर्वत्रान्तर्गणिको विशेषो न्यायशास्त्रीयमहानिबन्धेभ्योऽवगन्तव्यः ।

ननु प्रमाणादिषोडशपदार्थप्रतिपादकमिदं शास्त्रं कथं न्यायशास्त्रमिति व्यपदिश्यते इति चेदुच्यते । परार्थानुमानपर्यायस्य न्यायस्य सकलविद्यानुग्राहकतया सर्वकर्म्मानुष्ठानसाधनतया चात्र शास्त्रे प्रधानत्वेन तथा व्यपदेशो युज्यते । प्राधान्येन व्यपदेशा भवन्तीति न्यायात् । तथा चाऽभाणि परार्थानुमानमुपक्रम्य सर्वज्ञेन बुद्धेन—'सोऽयं परमो न्यायो विप्रतिपन्नपुरुषप्रतिपादकत्वात् तथा प्रवृत्तिहेतुत्वाच्च' इति । पक्षिलस्वामिना चाभ्यधायि—'सेयमान्वीक्षिकी विद्या प्रमाणादिप्रकाशिका ।

प्रदीपः सर्वविद्यानामुपायः सर्वकर्म्मणाम् ।
आश्रयः सर्वधर्म्माणां विद्योद्देशे परीक्षिता ॥

( न्या० सू० वा० भा० १।१।१ ) इति ।

ननु तत्त्वज्ञानान्निःश्रेयसं भवतीत्युक्तं तत् किं तत्त्वज्ञानादनन्तरमेव सम्पद्यते । नेत्युच्यते । किन्तु तत्त्वज्ञानाद् दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये क्रमेण जाते सति निःश्रेयसं सम्पद्यते इति । तत्र मिथ्याज्ञानं नामाऽनात्मनि देहादावात्मबुद्धिः । ततश्च देहादीनामनुकूलेषु रागः, प्रतिकूलेषु च द्वेष इत्यादिर्दोषः । वस्तुतस्त्वात्मनोऽनुकूलं प्रतिकूलं वा न किञ्चिदस्ति रागादीनां परस्परानुबन्धित्वात् । तथा हि—मूढो रज्यति, रक्तो मुह्यति, मूढः कुप्यति, कुपितो मुह्यतीति ।

ततश्च तैस्तैर्दोषैः प्रेरितः प्राणी शरीरेण हिंसास्तेयादीनि, वाचाऽनृत-भाषणादीनि, मनसा परद्रोहादीनि प्रतिषिद्धकर्म्माणि आचरति। सेयं पापरूपा प्रवृत्तिरधर्म्ममावहति। किञ्च शरीरेण परपरित्राणादीनि, वाचा सत्यमितभाषणादीनि, मनसा भूतदयेन्द्रियनिग्रहादीनि[1] सत्कर्म्माण्याचरति। सेयं पुण्यरूपा प्रवृत्तिर्धर्म्ममावहति। उभयविधयाऽनया प्रवृत्त्या स्वानुरूपं प्रशस्तं निन्दितं वा जन्म पुनः शरीरादेः प्रादुर्भावः। तस्मिन् सति प्रतिकूलवेदनीयतया वासनात्मकं दुःखं भवति। त इमे मिथ्याज्ञानादयो दुःखान्ता अविच्छेदेन प्रवर्त्तमानाः संसारशब्दार्थो घटीचक्रवन्निरवधिरनुवर्त्तते। यदा कश्चित् पुरुषधौरेयः पुराकृतसुकृतपरिपाकवशादाचार्योपदेशेन सर्वमिदं दुःखायतनं दुःखानुषक्तं च पश्यति तदा तत् सर्वं हेयत्वेनाऽवगच्छति। ततस्तन्निर्वर्त्तकमविद्यादिकं निवर्तयितुमिच्छति। तन्निवृत्त्युपायश्च चतसृभिः प्रत्यक्षादिप्रमाणरूपाभिर्विद्याभिर्विविक्तं तत्तत् प्रमेयं भावयतः कस्य चिदेव पुरुषधौरेयस्य सम्यग्दर्शनपदव्यपदेश्यं तत्त्वज्ञानमुपजायते। तत्त्वज्ञानान्मिथ्याज्ञानमपैति। मिथ्याज्ञानापाये दोषा रागद्वेषादयोऽपयान्ति। दोषाऽपाये प्रवृत्तिरपैति। प्रवृत्त्यपाये जन्माऽपैति। जन्माऽपाये दुःखमत्यन्तं निवर्त्तते। सेयमात्यन्तिकी दुःखनिवृत्तिरपवर्गः। तथा च पारमर्षं सूत्रम् "दुःख-जन्म-प्रवृत्ति-दोष-मिथ्याज्ञानानामुत्तरोत्तराऽपाये तदनन्तराऽभावादपवर्गः" ( न्या० सू० १।१।२ ) इति॥

युक्तं चैतत्। सर्वेषां मोक्षवादिनामपवर्गदशायामात्यन्तिकी दुःखनिवृत्तिरस्तीत्यर्थः सर्वतन्त्रसिद्धो घण्टापथायते। न ह्यप्रवृत्तस्य पुंसो दुःखं सम्भवतीति कश्चित् प्रतिपद्यते। तथा हि—आत्मोच्छेदो मोक्षः इति माध्यमिकमते दुःखोच्छेदोऽस्तीत्येतावदविवादम्। अथ मन्येथाः शरीरादिवदात्मापि दुःखहेतुत्वादुच्छेद्य इति। तन्न सङ्गच्छते। विकल्पानुपपत्तेः। किमात्मा ज्ञानसन्तानो विवक्षितस्तदतिरिक्तो वा। प्रथमे नास्ति विवादः। कः खल्वनुकूलमाचरति जने प्रतिकूलमाचरेत्। परन्तु ज्ञानसन्तानरूपोऽयमात्मा किमनित्यो वा नित्यो वा त्वयाऽभ्युपेयते। आद्ये स्वभावत एव विनश्वरस्य क्षणभङ्गुरस्य तस्य महता प्रयत्नेन समुच्छेदाय प्रवृत्तिरनुपपन्नैव स्यात्। किञ्च न खलु कश्चिदपि प्रेक्षावान् आत्मनस्तु कामाय सर्वं प्रियं भवति इति सर्वतः

१ स्वस्वविषयलोलुपानां चक्षुरादीनां वशीकरणमिन्द्रियनिग्रहः।

प्रियतमस्यात्मनः समुच्छेदाय प्रयतते । द्वितीये तु तस्य नित्यत्वादेव नहि कथमपि समुच्छेदः कर्त्तुं पार्यते ।

अथ भावनाचतुष्टया[1]ऽभ्यासबलान्निखिलवासनोच्छेदेन विगलितविविधविषयाकारोपप्लवस्य विशुद्धविज्ञानस्योदय एव मोक्ष इति यो विज्ञानवादिनां नयः स त्वसङ्गतः । सोपप्लवज्ञानसन्तानस्य बद्धत्वे निरुपप्लवस्य च मुक्तत्वे यो बद्धः स मुक्त इति सामानाधिकरण्यानुपपत्तेः ।

आवरणमुक्तिर्मुक्तिः इति जैनाभिमतमार्गोऽपि न समीचीनः । कथमिति चेद्भवानेव किं नामाऽवरणमिति पृष्टो व्याचष्टाम् । धर्म्माऽधर्म्मौ भ्रान्तयश्चावरणम् इति चेत् । इष्टमेव । अथ देह एवावरणं तथा च तन्निवृत्तौ पञ्जरान्मुक्तस्य शुकस्येवात्मनः सततोर्ध्वगमनं मुक्तिः इति चेत् । तर्हि वक्तव्यं किममूर्त्तो मूर्त्तो वाऽयमात्मा इति । नाद्यः। अपरिच्छिन्नपरिमाणस्यामूर्त्तस्यात्मन आकाशादेरिव विभुत्वेन गमनानुपपत्तेः। नान्त्यः । मूर्तत्वेनाभिमतस्य तस्य सावयवत्वे यत्सावयवं तदनित्यम् इति नियमादनित्यत्वाऽऽपत्तौ कृतनाशाऽकृताभ्यागमप्रसङ्गात् । निरवयवत्वे तु निरवयवो मूर्त्तः परमाणुरिति परमाणुलक्षणापत्त्या परमाणुवदात्मधर्म्माणामतीन्द्रियत्वप्रसङ्गात् ।

अथ नित्यनिरतिशयसुखाभिव्यक्तिर्मुक्तिः इति भट्टसर्वज्ञाद्यभिमते जैमिनीयदर्शनेऽपि मोक्षदशायां दुःखनिवृत्तिरभिमतैव ।

तस्मात् परमेश्वराऽनुग्रहवशाच्छ्रवणादिक्रमेणात्मतत्त्वसाक्षात्कारवतः पुरुषधौरेयस्यात्यन्तिकदुःखध्वंसलक्षणं निःश्रेयसं सम्पद्यत इति स्थितम् ।

नन्वीश्वरसद्भावे किं प्रमाणं प्रत्यक्षमनुमानमागमो वा । न तावदत्र प्रत्यक्षं क्रमते रूपादिरहितत्वेनातीन्द्रियत्वात् । नाप्यनुमानम् । तद्व्याप्तिग्रहाद्यभावात् । न चाप्यागमः । विकल्पासहत्वात् । तथा हि किमीश्वरात् सम्भूत आगम[2] ईश्वरमवगमयति नित्यो वा । आद्ये परस्पराश्रयापातः । द्वितीयेऽपसिद्धान्तापातः । उपमानादिकमपि न प्रभवति । नियत[3]विषयत्वात् । तस्मादीश्वरः शशविषाणायते इति चेत् । मैवम् ।

---

१ बौद्धमतविचारे भावनाचतुष्टयमुक्तम् ।

२ वेदस्येश्वरात् सम्भूतत्वलक्षणं पौरुषेयत्वमस्तीति हि न्यायसिद्धान्तः ।

३ इन्द्रियगोचरस्यैव गवयादेरुपमानविषयत्वात् ।

विवादास्पदं नगसागरादिकं सकर्त्तृकं कार्यत्वात् कुम्भवत् इत्याद्यनुमानप्रमाणस्येश्वरसद्भावे समर्थत्वात् । न हि कुम्भस्य कुम्भकार इवापारचमत्कारनिधानस्य नगसागरदिवाकरनिशाकरादिमण्डलमण्डितस्यास्य ब्रह्माण्डभाण्डलक्षणविचित्रकार्यस्य कर्त्ता कश्चिच्छरीरी सम्भवति । तस्मादस्ति सर्वज्ञः सर्वशक्तिः स्वतन्त्रः परमेश्वरोऽस्य कर्त्तेत्यनुमीयत एव । न चात्र सकर्तृकत्वसाधकः कार्यत्वरूपो हेतुरसिद्ध इति वाच्यम् । विप्रतिपन्नं नगसागरादिकं कार्यम् सावयवत्वात् कुम्भादिवत् इति सावयवत्वहेतुकानुमानेन कार्यत्वस्य सुसाध्यत्वात् । ननु नगादिकमकर्तृजन्यं शरीराजन्यत्वाद्गगनवत् इति चेत् । न । नहि कठोरकण्ठीरवस्य मृगशावः प्रतिभटो भवति । अकर्तृजन्यत्वे साधनीये ह्यजन्यत्वमात्रस्य हेतोः समर्थतया तत्र शरीरविशेषणदानस्य वैयर्थ्यात् । तर्ह्यजन्यत्वमेव हेतुर्भवत्विति चेत् । न । नगसागरादिरूपे पक्षे सावयवत्वसमनियतकार्यत्वस्य विद्यमानत्वादजन्यत्वस्याऽसत्त्वेन स्वरूपाऽसिद्धेः । नापि सकर्तृकाऽनुमानस्य सोपाधिकत्वशङ्कासंस्पर्शः सम्भवति । अनुकूलतर्कसत्त्वात् । यदीदमकर्तृकं स्यात् तर्हि कार्यमपि न स्यात् । इह जगति नास्त्येव तत् कार्यं यत् कारकमन्तराऽप्यात्मानमासादयेदित्येतदविवादम् ।

ननु परमेश्वरस्य जगन्निर्माणप्रवृत्तिः किं स्वार्था, परार्था वा । नाद्यः । अवाप्तसकलकामस्य तस्य काम्यफलाभावात् । नापि द्वितीयः । प्रवृत्तेरेवाऽनुपपत्तेः । कः खलु केवलं परार्थं प्रवर्त्तमानं प्रेक्षावन्तमाचक्षीत । यदि कश्चिद् ब्रूयात् करुणया प्रवृत्तिरुपपद्यत इति स प्रतिवक्तव्यः । सर्वान् प्राणिनः सुखिनः सृजेदीश्वरो न दुःखशबलान् कारुण्यविरोधात् । स्वार्थमनपेक्ष्य परदुःखप्रहाणेच्छा हि कारुण्यम् । तस्मादीश्वरस्य जगत्सर्जनं न युज्यत इति चेत् । भो नास्तिकशिरोमणे भवांस्तावदीर्ष्याकलुषिते नेत्रे निमील्य हृदये विचारयतु करुणया प्रवृत्तिरस्त्येवेति । न च निसर्गतः सुखमयसर्गप्रसङ्गः । प्राणिकर्म्मवैचित्र्येण सुखदुःखवत्तावैचित्र्यव्यवस्थायाः करणात् । ननु प्राणिकर्म्मानुरोधेन सृष्टिवैचित्र्यं विधातुरीश्वरस्य स्वातन्त्र्यहानिरिति चेत् । न । 'स्वाङ्गं स्वव्यवधायकं न भवति' इति न्यायेन प्रत्युत विषमसर्जने एव स्वतन्त्रत्वनिर्वाहात् । नहि लोकेऽपि सतामनुग्रहं दुष्टानां च निग्रहमकुर्वाणो भूपतिः स्वतन्त्र इति गीयते विचक्षणैः । किन्तु केनापि निमित्तेनास्वतन्त्रीकृत इत्येवेत्यलम् ।

यथाऽनुमानं तथाऽऽगमोऽपीश्वरसद्भावमवगमयति-"ईशानः सर्वविद्यानामीश्वरः सर्वभूतानाम्" ( महाना० उ० १७।५ ) इत्यादिः। न च परस्पराश्रय इति वाच्यम्। किमुत्पत्तौ परस्पराश्रयः शङ्क्यते, ज्ञप्तौ वा। नाद्यः। आगमस्येश्वराधीनोत्पत्तिकत्वेऽपि नित्यत्वेनेश्वरस्योत्पत्तेरप्रसङ्गात्। नापि ज्ञप्तौ। ईश्वरस्यागमाधीनज्ञप्तिकत्वेऽपि आगमस्याऽन्यतोऽवगमादिति सर्वमवदातम्।

अथ वैशेषिकमतदर्शनं प्रायेण न्यायमतसदृशमेव। परन्तु प्रमाणादिषोडशपदार्थानां द्रव्य-गुण-कर्म्म-सामान्य-विशेष-समवाया-भावपदैः स्वयं परिभाषितेषु सप्तस्वेव पदार्थेष्वन्तर्भावमभिसन्धाय द्रव्यादिक्रमेण पदार्थपरिशोधनङ्कृतमिति विशेषः।

तत्र न्यायनयाचार्यो गौतमाख्यो महामुनिः।
वैशेषिकमताचार्यः कणादः परिकीर्त्तितः॥

॥ इति न्यायशास्त्रवैशेषिकशास्त्रयोर्मतदर्शनसङ्ग्रहः॥

---

अथात्र साङ्ख्यशास्त्रस्य संक्षिप्य मतमुच्यते।
मुख्यः कपिल आचार्यः शास्त्रस्याऽस्य प्रवर्त्तकः॥

अत्र हि शास्त्रे पदार्थानां चतस्रो विधाः प्रतिपाद्यन्ते। कश्चिदर्थः प्रकृतिरेव, कश्चिद्विकृतिरेव, कश्चिदुभयरूपः, कश्चिदनुभयरूप इति। तदुक्तम्—

मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त।
षोडशकस्तु विकारो न प्रकृतिर्नापि विकृतिः पुरुषः॥

( सां० का० ३ ) इति

अत्र केवला प्रकृतिः प्रधानपदवाच्या मूलप्रकृतिः। नासावन्यस्य कस्यचिद्विकृतिः। प्रकरोतीति प्रकृतिरिति व्युत्पत्त्या सत्त्वरजस्तमोगुणानां साम्यावस्थाया अभिधानात्। मूलं चासौ प्रकृतिश्च मूलप्रकृतिः। महत्तत्त्वादेः कार्यकलापस्येयमेव मूलं न त्वस्याः प्रधानभूताया मूलान्तरमस्ति। अनवस्थाऽऽपातात्। न च बीजाङ्कुरवत् प्रामाणिक्यनवस्था न दोषायेति वाच्यम्। प्रमाणाऽभावात्। प्रत्युत "प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि।" ( भ० गी० १३।१९ ) इत्यादिप्र-

माणवचनतः प्रकृतेः सादित्वाभावबोधनेन निखिलप्रपञ्चमूलकारणत्वस्य स्मरणात् ।

अत्र हि कार्यकारणभावे चतुर्द्धा विप्रतिपत्तिः सम्भवति । तथा हि–असतः सज्जायत इति सौगताः सङ्गिरन्ते । सतोऽसज्जायत इति नैयायिकादयः । सतो विवर्त्तः कार्यजातं न तु वस्तुसत् इति वेदान्तिनः । साङ्ख्यास्तु सतः सज्जायत इति स्वीकुर्वन्ति । तत्राद्यः पक्षो न प्रामाणिकः, असतोऽलीकस्य शशविषाणवत् कारणत्वाऽनुपपत्तेः । तुच्छातुच्छयोः कार्यकारणभावायोगात् । नापि द्वितीयः । कारकव्यापारात् प्रागसतो घटादेः शशविषाणवत् सत्तासम्बन्धलक्षणोत्पत्त्यनुपपत्तेः । न हि निपुणतमेनापि असति गगनारविन्दे सत्तासम्बन्धं विधातुं पार्यते । तस्मात् कारकव्यापारात् प्रागपि कार्यं सदेव । सत एवानभिव्यक्तस्य कारकव्यापारेणाभिव्यक्तिरुपपद्यते । नापि सतो ब्रह्मतत्त्वस्य विवर्त्तः प्रपञ्च इति वेदान्तिभिर्दर्शितोऽपि मार्गो निर्दोषः । अधिष्ठानारोप्ययोश्चिज्जडयोः कलधौतरूप्यादिवत् सारूप्याभावेनारोपासम्भवात् । बाधानुपलम्भाच्च । तस्मात् सुखदुःखमोहात्मकस्य विश्वप्रपञ्चस्य तथाविधमेव कारणमवधारणीयम् । तथा चानुमानप्रयोगः–विमतं कार्यजातं सुखदुःखमोहात्मकवस्तुकारणकम्, तदन्वितत्वात् । यद्येनान्वितं तत् तत्कारणकं यथा रुचकादिकं सुवर्णान्वितम् । तथा चेदम् । तस्मात् तथा इति ।

तत्र येयं सुखात्मकता तत् सत्त्वम् । या दुःखात्मकता तद्रजः । या च मोहात्मकता तत् तमः । एवञ्च सर्वस्य त्रिगुणात्मकता वेदितव्या । तथाहि–प्रत्येकं भावास्त्रैगुण्यवन्तोऽनुभूयन्ते । यथा मैत्रदारेषु सत्यवत्यां मैत्रस्य सुखमाविरस्तीति तं प्रति तस्याः सत्त्वगुणप्रादुर्भावः । तत्सपत्नीनां दुःखमिति ताः प्रति रजोगुणप्रादुर्भावः । तामलभमानस्य चैत्रस्य मोह इति तं प्रति तमोगुणप्रादुर्भावः । एवमन्यदपि घटादिकं लभ्यमानं सुखाकरोति । परैरपह्रियमाणं दुःखाकरोति, उदासीनस्य च उपेक्षाविषयत्वेनाऽवतिष्ठते । उपेक्षाविषयत्वं च मोह एव । उपेक्षणीयेषु चित्तवृत्त्यनुदयात् । 'मुह वैचित्त्ये' इत्यस्माद्धातोर्मोहशब्दनिष्पत्तेश्च । तस्मात् सुखदुःखमोहात्मकत्वेन त्रैगुण्यवतः सर्वस्य कार्यजातस्य त्रिगुणात्मिका मूलप्रकृतिः प्रधानपदवेदनीयैव कारणमिति स्थितम् ।

तदेतत्सकलं मनसि निधायाभिहितं 'मूलप्रकृतिरविकृतिः' इति ।

एतेन कश्चिदर्थः प्रकृतिरेवेति प्रथमं प्रकारमुपदिश्य द्वितीयं प्रकारमाह–'महदाद्याः प्रकृतिविकृतयः सप्त' इति । महत्तत्त्वमहङ्कारः शब्दस्पर्शरूपरसगन्धाश्चैते सप्त पदार्थाः प्रकृतिविकृतय उभयरूपाः सन्तीत्यर्थः । तत्रान्तःकरणपदवेदनीयं महत्तत्त्वमहङ्कारस्य प्रकृतिः, मूलप्रकृतेस्तु विकृतिः । एवमहङ्कारोऽपि शब्दादिपञ्चकस्य श्रोत्रादीन्द्रियैकादशकस्य च प्रकृतिः, महत्तत्त्वस्य तु विकृतिः । शब्दादिपञ्चकं हि यथाक्रमं व्योमवायुतेजोजलपृथिवीनां प्रकृतिः, अहङ्कारस्य तु विकृतिरिति बोध्यम् ।

तृतीयं प्रकारमाह–'षोडशकस्तु विकार' इति । श्रोत्र–त्वक्–चक्षु-र्जिह्वा-घ्राणाभिधानि पञ्च ज्ञानेन्द्रियाणि, वाक्पाणिपादपायूपस्थाभिधानि पञ्च कर्मेन्द्रियाणि, उभयात्मकं मनश्चेत्येकादश । तथा व्योमादीनि पञ्च महाभूतानीत्येषां षोडशानां गणः षोडशकः । स तु विकार एव विकृतिरेव । न कस्यापि प्रकृतिरित्यर्थः । यद्यपि पृथिव्यादीनां गोवृक्षादयो विकाराः, गवादीनामपि पयोबीजादयः, तेषां च दध्यङ्कुरादयः, तथापि गवादयो न पृथिव्यपेक्षया तत्त्वान्तरम्[1] । तेषां पार्थिवत्वात् । तत्त्वान्तरोपादानकारणस्यैवात्र प्रकृतिपदेन विवक्षितत्वाच्च ।

चतुर्थं प्रकारमाह—'न प्रकृतिर्नापि विकृतिः पुरुष' इति । कस्यापि तत्त्वस्येति शेषः ।

इदमत्र वेदितव्यम्–प्रकृतेर्महान् । महतोऽहङ्कारः । स च सात्त्विकराजसतामसभेदात् त्रिविधः । तत्र सात्त्विकादहङ्कारादेकादशेन्द्रियाणि, तामसात् तन्मात्राभिधं शब्दादिपञ्चकम्, राजसात्तूभयम् । ननु सत्त्वतमोभ्यामेवोभयस्येन्द्रियतन्मात्रात्मककार्यस्य सिद्धौ व्यर्थं रज इति चेत् । उच्यते—सत्त्वतमसी स्वयमक्रिये, न स्वकार्यं घटयितुं प्रवर्त्तेते । रजस्तु चलतया यदा ते चालयति तदैव ते स्वकार्यं कुरुतः । तस्मादुभयत्रापि कार्ये सत्त्वतमसोः क्रियोत्पादनद्वारेणास्ति रजसः कारणत्वमिति न व्यर्थं रज इति । शब्दादिभ्यो महाभूतानि व्यजायन्त । प्राणास्तु न तत्त्वान्तरम्, किंत्विन्द्रियाणां साधारणवृत्तय एव । एवं कालोऽपि न तत्त्वान्तरम् । भूतवद्भविष्यदितिव्यवह्रियमाणवस्तुव्यतिरेकेण स्वतन्त्रस्य तत्स्वरूपस्याऽनिरूपणीयत्वात् ।

एतानि चतुर्विंशतिस्तत्त्वानि, पुरुषः पञ्चविंशतितमः । स च नैकः,

---

१ अन्यदीयस्वरूपाभिज्ञानविषयताशून्यत्वं हि तत्त्वान्तरत्वम् ।

किन्त्वनेकः प्रतिशरीरं भिन्न एव। अन्यथा कस्मिंश्चिदेकस्मिन् म्रियमाणे सर्वे म्रियेरन्, जायमाने जायेरन्, पण्डिते वा पण्डिताः स्युरित्यनवस्थाऽऽपद्येत। स चायं पुरुषः प्रकृतिप्रसूते प्रपञ्चे वर्त्तमानोऽपि स्वयं निर्गुणत्वात् पयसि वर्त्तमानपुष्करपलाशवन्निर्लेपः साक्षीवाऽवतिष्ठते। पुरुषो हि नियमेन निस्त्रैगुण्यस्वभाव एव। यतः प्रकृतिप्रसूतप्रपञ्चस्य सर्वस्यापि सुखदुःखमोहात्मकत्वेन भोग्यत्वाज्जडत्वाच्च स्वविलक्षणस्त्रैगुण्याऽतीतः परश्चेतनो भोक्ता कश्चिदस्त्येव। स एवात्मेति पुरुष इति वा व्यपदिश्यते।

अथ पुरुषसान्निध्यवशाज्जडा अपि प्राकृता भावाश्चेतनवदवभासन्ते। प्रकृतिसान्निध्यवशाच्चासङ्गोऽपि पुरुषः कर्त्तेव सुखादिमानिव चावभासते। एवं च प्रकृतिपुरुषसंयोग एवाखिलं संसारप्रपञ्चं निर्वाहयति। भोक्तृत्वयोग्यता हि पुरुषस्य चैतन्यं, भोग्यत्वयोग्यता हि प्रकृतेर्जडत्वम्। प्रोक्तयोग्यतावतोरनयोरन्धपङ्गुन्यायेन संयोगः समभवत्। यथा कश्चिदन्धः स्वयं जङ्गालोपि स्खलनं परिजिहीर्षुः कञ्चिच्चक्षुष्मन्तं पङ्गुमपि स्कन्धेनोद्वहति। पङ्गुस्तु स्वयं चक्षुष्मानपि यथेष्टविहारमभीप्सुः कञ्चिज्जङ्गालमन्धमपि समधितिष्ठति। तथैवाचेतना प्रकृतिः स्वप्रवृत्तिनिर्वाहाय चेतनमधिष्ठातारमुद्वहति। चेतनोऽपि पुरुष स्वयमप्रसवधर्म्मा स्वभोग्यप्रसवित्रीं प्रकृतिमधितिष्ठति। ततश्च भोग्येन प्रधानेन सम्भिन्नः पुरुषो भोग्यधर्मभूतं सुखदुःखमोहजातं स्वात्मन्यभिमन्यमानः कदाचिदपि दुःखत्रयोपघातं प्रार्थयते। तं चास्य प्रधानभूता प्रकृतिः सेधयति[1]।

ननु नित्यायाः प्रवृत्तिशीलायाश्च प्रकृतेरनुपरमात् सदैव सर्गः स्यादिति न कश्चिदपि दुःखत्रयान्मुच्येतेति चेत्। मैवम्। प्रकृतेरुपरमस्यापि सम्भवात्। यथा हि नृत्यावलोकनोत्सुकान् रङ्गस्थान् निजनृत्यकौशलं दर्शयित्वा तेषामौत्सुक्योपशमे सति नर्त्तकी नृत्यक्रियातो निवर्त्तते, न पुनरनुत्सुकांस्तान्निजनृत्यं प्रदर्शयितुं प्रवर्त्तते। तथा प्रकृतिरपि स्वसृष्टविषयभोगोत्सुकान् प्रत्येकं पुरुषान् भोजयितुं प्रवृत्तापि यं पुरुषं विगलितविषयवासनं पश्यति तं प्रति न पुनः प्रवर्त्तते।

---

१ निष्पादयतीत्यर्थः। न चात्रान्नं साधयतीतिवत् प्रयोक्तुमुचितमिति वाच्यम्। दुःखत्रयोपघातस्य कैवल्यमुक्तिरूपत्वेन पारलौकिकतया 'सिध्यतेरपारलौकिके' इत्यात्वविधायकसूत्राप्रवृत्तेः।

ननु स्वार्थं वा परार्थं वा चेतनः प्रवर्त्तमानो दृश्यते, परन्त्वचेतना प्रकृतिः कथं प्रवर्त्तते निवर्तते वेति साम्प्रतम् । न चाचेतनस्य स्यन्दनादेरिव चेतनाधिष्ठितायास्तस्या अचेतनाया अपि प्रवृत्तिरुपपद्यत इति वाच्यम् । जीवपुरुषाणां प्रकृतिस्वरूपाऽनभिज्ञतयाऽधिष्ठातृत्वाऽसम्भवात् । तस्मादस्ति सर्वार्थदर्शी परमेश्वरः प्रकृतेरधिष्ठातेति चेत् । न । अचेतनस्य क्षीरादेर्वत्सादिविवृद्ध्यर्थमिवाचेतनायाः प्रकृतेरपि पुरुषार्थं प्रवृत्तेः सुसम्भाव्यमानत्वात् । प्रकृतिमधिष्ठाय परमेश्वर एव जगत् सृजतीत्यत्र पृष्टो भवान् परमेश्वरभक्तो व्याचष्टां तत् किं परमेश्वरः स्वार्थं सृजति परार्थं वेति । नाद्यः । पूर्णकामस्य तस्य जगत्सर्जने प्राप्तव्यार्थस्याभावात् । नान्त्यः । प्रेक्षावतः केवलपरार्थप्रवृत्तेरनुदयात् । न च कारुण्यात् तथाविधप्रवृत्तेः सम्भव इति वाच्यम् । सृष्टेः प्राक् कारुण्यस्य वक्तुमशक्यत्वात् । स्वार्थमनपेक्ष्य परदुःखप्रहाणेच्छालक्षणकारुण्यस्य तदानीं प्राणिवर्गाभावप्रयुक्तदुःखानुत्पादेन निर्विषयत्वाच्च । किञ्च करुणया प्रेरित ईश्वरः सुखिन एव सर्वान् प्राणिनः सृजेन्न विचित्रान् । कर्म्मवैचित्र्यात्प्राणिवैचित्र्यमिति चेत्, कर्म्मपराधीनेश्वरेणाजागलस्तनकल्पेन न कोऽप्यर्थं इति परिभाव्यताम् । प्रकृतेस्तु प्रवृत्तिर्न स्वार्थमपेक्ष्य न वा कारुण्येन किन्तु परार्थैवेति नोक्तदोषप्रसङ्गः, अचेतनानां रथादीनां व्यापारस्य तथैव लोकेऽनुभूयमानत्वात् ।

ननु भोक्तृत्वयोग्यता हि पुरुषस्य चैतन्यम् इत्युक्तम्, तथा सति चैतन्यधर्म्मा पुरुषः कथं विगलितभोग्यवासनो भवेदिति चेत् । उच्यते । न ह्युक्तलक्षणं चैतन्यं वासनां प्रसूते, किन्तु क्लेशसलिलावसिक्तायां बुद्धिभूमौ निपतितानि कर्म्मबीजानि वासनाङ्कुरान् प्रसुवते । यदा तु नाहं सुखादिमान् किन्तु त्रैगुण्यातीतोऽप्राकृतत्वात् इति प्रकृतिपुरुषविवेकज्ञानमुत्पद्यते[1], तदा तु तत्त्वज्ञाननिदाघनिपीतसकलक्लेशसलिलायामूषरायां तस्यां दग्धाना कर्म्मबीजानां कुतः पुनर्वासनाङ्कुरप्रसव इति ।

उत्पन्नतत्त्वसाक्षात्कारोऽपि पुरुषः प्रारब्धकर्म्मसंस्कारवशात् स्वदेह एव कञ्चित् कालं तिष्ठति । यथोपरतेऽपि कुलालव्यापारे चक्रं वेगाख्यसंस्कारवशाद्भ्रमदेव तिष्ठति । यथा च कालकलाक्रमेण सति

---

१ प्रकृतिपुरुषयोर्विवेकेन यत् ज्ञानं साक्षात्कारस्तदेवात्र शास्त्रे प्रकृतिपुरुषान्यताख्यातिपदेन व्यवह्रियते । इदमेव चास्य शास्त्रस्य परमं प्रयोजनम् ।

संस्कारोपशमे चक्रं परिभ्रमणविनिर्मुक्तं सत् स्वभावेनावतिष्ठते। एवं कृतप्रयोजनत्वादुपरतायां प्रकृतौ भोगेन प्रारब्धसंस्कारोपशमे सति विमुक्तदेहबन्धनः पुरुषो निजेन कैवल्यस्वभावेन सम्पद्यते। तथा च श्रूयते—'भोगेन त्वितरे क्षपयित्वाऽथ सम्पद्यते' इति।

एतच्छास्त्रस्य मूलभूतं सूत्रग्रन्थं ( अथ त्रिविधदुःखात्यन्तनिवृत्ति-रत्यन्तपुरुषार्थ इत्यादिषडध्यायात्मकं ) भगवान् कपिलमुनिः प्रणिनाय। तत्र प्रथमेऽध्याये विषयाः निरूपिताः, द्वितीये प्रधानकार्याणि, तृतीये विषयेभ्यो वैराग्यं, चतुर्थे विरक्तानां पिङ्गलाकुररादीनामाख्यायिकाः, पञ्चमे परपक्षविनिर्णयः, षष्ठे सर्वार्थसंक्षेप इत्येवमर्था निरूपिताः इति दिक्।

॥ इति साङ्ख्यमतदर्शनम् ॥

---

अथ सेश्वरसाङ्ख्यापरनामधेयस्य योगशास्त्रस्य मतमुच्यते। एतच्छास्त्रस्य मूलभूतम् 'अथ योगानुशासनम्' इत्यादि पादचतुष्टयप्रमाणकं सूत्रग्रन्थं भगवान् पतञ्जलिः प्रणिनाय।

## पातञ्जलदर्शनम्।

तत्र प्रथमेऽध्याये (=पादे) सप्रपञ्चं चित्तवृत्तिनिरोधात्मकं योगलक्षणं वैराग्यादिसाधनसहितं समाधिं चोपादिक्षत्। द्वितीये तपःस्वाध्यायेश्वरप्रणिधानादिरूपं क्रियायोगं यमनियमाऽऽदीनि च बहिरङ्ग

---

१ अधुना तु नोपलभ्यते तत् कापिलं साङ्ख्यसूत्रजातम्। अत एव प्रामाणिकैरीश्वरकृष्णीयकारिका एव प्रमाणत्वेनाङ्गीकृताः षट्शास्त्रव्याख्याकृद् वाचस्पतिमिश्रं व्याख्यातवान्। कापिलसाङ्ख्यसूत्राणां भाष्यमपि पातञ्जलदर्शनभाष्यकारेण भगवता व्यासेनैव कृतं भवेत्। परंतु सभाष्यं मूलसूत्रं वाचस्पतिनाऽपि नोपलब्धम् भगवता शङ्कराचार्येणापि नोपलब्धमिति प्रतीमः। इति दाधिमथाः।

२ अस्यैव भगवतः पतञ्जलेर्गोत्र एव पाणिनीयव्याकरणमहाभाष्यकर्ता गोनर्दे प्रादुर्भूत इति बोध्यम्। अत एव पाणिनीयसूत्रसुगृहीतनामधेये पाराशर्यभिक्षुसूत्रे 'एतेन योगः प्रत्युक्तः' इत्युपादानं सङ्गच्छते। इति दाधिमथाः।

३ एषां पातञ्जलसूत्राणां भाष्यं भगवान् व्यासदेवो रचयामास। एतस्य भाष्यस्य व्याख्यानं योगवाचस्पत्याभिधानं सकलदर्शनटीकाकारो वाचस्पतिः प्रणिनाय।

साधनानि । तृतीये संयमपदवाच्यमन्तरङ्गसाधनं तत्रावान्तरफलभूतं विभूतिजातं च । तथा चतुर्थेऽध्याये (=पादे) जन्मौषधिमन्त्रतपःसमाधिजाः सिद्धीः परमं च प्रयोजनं कैवल्यमुपादिक्षत् ।

अत्रापि तन्त्रे पञ्चविंशतिस्तत्त्वानि पूर्वोक्तान्येव । परं षड्विंशः परमेश्वरः संसाराङ्गारशय्यायां परितप्यमानानां प्राणभृतामनुग्राहकः सङ्ख्यायते । तदित्थम्—प्रकृतिपदवेद्यायां मायायामधिष्ठातुरीश्वरचैतन्यस्य संक्रममहिम्ना महत्तत्त्वं, कालः, पुमानिति त्रयः पदार्था अजायन्त । तत्र बीजेऽङ्कुरवत् प्रकृतौ स्थितानां सत्त्वरजस्तमोगुणानां क्षोभकरः कालः । अयं ब्रह्म[1]चैतन्यस्यैवावस्थाविशेषः । ततश्च नासौ तत्त्वान्तरम् । पुमान् संसारी कार्योपाधि[2]र्जीवः । स च स्वतन्त्रोऽनादिरपि प्रकृतेः प्रथमविकारमन्तःकरणपदवेदनीयं महत्तत्वमवष्टभ्य भोक्तृत्वेनोत्थितः । महत्तत्त्वादहङ्कार इत्यादिप्रक्रिया पूर्ववदेवेति विशेषः ।

नन्वत्र पुष्करपलाशवन्निर्लेपस्य पुरुषस्य तापः कथमुपपद्यते येन परमेश्वरोऽनुग्राहकतया कक्षीक्रियत इति चेत् । अत्रोच्यते—तापकस्य रजोगुणस्य तप्यः सत्त्वगुणः । स एव च बुद्ध्या[3]त्मना परिणमते । सत्त्वे हि परितप्यमाने तमोगुणावेशेन सत्त्वपरिणामबुद्ध्यभेदमवगाहमानः पुरुषस्तप्यत इति । यदाह भगवान् पतञ्जलिः—'अपरिणामिनी[4] हि भोक्तृशक्तिरप्रतिसङ्क्रमा च परिणाम्यर्थे प्रतिसंक्रान्ते च तद्वृत्तिमनुभवति' (यो० भा० २।२०) इति । भोक्तृशक्तिर्जीवचैतन्यलक्षणा यद्यपि न रूपान्तरापत्तिलक्षणं परिणामं नाप्यन्यदीयधर्माक्रान्तत्वलक्षणं प्रतिसंक्रमं वा स्वरूपतो भजते तथापि परिणाम्यर्थे बुद्ध्यादौ प्रतिसंक्रान्तेऽविवेकतः स्वाभेदेनावगते सति तद्वृत्तिं तस्या बुद्धेर्वृत्तिविशेषरूपं सुखदुःखादिकमनुभवतीति सूत्रार्थः ।

ननु स्वयमेव पुमान् बुद्ध्यादिभ्यो विविक्तमात्मानं निश्चित्य विगत-

---

१ मायोपाधिकपरमेश्वरस्येत्यर्थः ।

२ मायाया कार्यमविद्या उपाधिर्यस्य स तथेत्यर्थः ।

३ अन्तःकरणरूपेण ।

४. अपरिणामिनीत्यादि वचनं नहि योगसूत्रेषु विद्यते । योगसूत्रीयव्यासभाष्ये (२।२०) तु उद्धृतं दृश्यते । पञ्चशिखाचार्यस्य वचनमेतदिति तु तद्भाष्यव्याख्यायां वाचस्पतिमिश्रेणोक्तम् । ( मं० दे० शा० )

तापो भवतु मा भूदनुग्राहकः परमेश्वर इति चेत्। मैवं वोचः। विविक्तमात्मानं स्वयमेव निश्चेतुं जीवस्यानीशत्वात्। यथा तिमिरोपहतदृष्टिः पदेपदेऽनुभूयमानं प्रस्खलनादिक्लेशं न स्वयमुन्मूलयितुमीष्टे, किन्तु भिषग्वरस्य तिमिररोगप्रणाशनपटोरनुग्रहेणैव सञ्जातविमलदृष्टिर्मुक्तक्लेशो भवति, तथा जीवोऽपीश्वरानुग्रहेणैव निरस्ताज्ञानतिमिरो भूत्वा बुद्ध्यादिभ्यो विलक्षणं विविक्तमात्मानमवगत्य कैवल्यामृतसागरमवगाह्य समस्तपरितापान्मुच्यते इति शिवम्।

॥ इति योगशास्त्रमतदर्शनम् ॥

---

अथात्र धर्म्ममीमांसाशास्त्रस्य मतमुच्यते।
धर्म्मो द्वादशलक्षण्या व्युत्पाद्यत इह क्रमात्॥
महर्षिणा जैमिनिना श्रुतिसिद्धान्तमौक्तिकैः।
समाश्लिष्टः सूत्रसङ्घो धर्म्मबोधाय निर्मितः॥

वेदेन प्रयोजनमुद्दिश्य विधीयमानोऽर्थो धर्म्मः। यथा 'यजेत स्वर्गकाम' इत्यादिवाक्यैः स्वर्गमुद्दिश्य विधीयमानो यागादिः। सोऽत्र शास्त्रे द्वादशभिरध्यायैर्व्युत्पाद्यते।

तत्र प्रथमेऽध्याये स्वतःप्रमाणभूतो वेदो विध्यर्थवादमन्त्रनामधेयभेदेन चातुर्विध्यमापन्नो धर्म्मे प्रमाणमिति प्रतिपाद्यते। अबाधिताऽज्ञातज्ञापकत्वं हि प्रामाण्यम्। तच्च वेदस्य स्वतः सिद्धं न तु परतः, अपौरुषेयत्वात्। यथा हि वेदस्याऽपौरुषेयत्वमार्या वर्णयन्ति तथा सप्रपञ्चमुपपादितं प्रथमप्रकाशे। वेदस्य ये विध्यादयश्चत्वारो भेदास्त इदानीं निरूप्यन्ते।

तत्र तावत् 'शब्दभावना विधिः' इति भट्टाः। 'नियोगो विधिः' इति प्राभाकराः। उभयथाप्यप्राप्तार्थविषयकप्रवर्त्तनाऽवबोधकत्वं विधिर्नातिक्रामति। यतः 'स्वर्गकामो यजेत' इत्यादिविधिवाक्यं यागादिकरणक—स्वर्गादिफलक—भावनायां स्वर्गादिफलहेतुयागादिगोचरनियोगे वा पुरुषं प्रवर्त्तयदेवावबोधयति। एवं च भावनावाचिनो यजेत जुहुयादित्यादिपदस्य प्रयोगो विधिवाक्यपरिचायकः।

---

१ नेत्ररोगविशेषः।

तत्राख्यातत्व-लिङ्त्वेतिधर्मद्वयावच्छिन्नेन धातूत्तरप्रत्ययेनाऽऽर्थी शाब्दी चेति भावनाद्वयमभिधीयते। एवं च यजेतेत्यत्राख्यातस्य भावयेदित्यर्थो भवति। ततश्च किं भावयेत्, केन भावयेत्, कथं भावयेदिति भाव्यस्य करणस्येतिकर्त्तव्यतायाश्चाकाङ्क्षायां स्वर्गं भावयेत्, यागेन भावयेत्, अग्न्यन्वाधानप्रयाजावघातादिभिरुपकारं सम्पाद्य भावयेदित्येवं भाव्य—करणेतिकर्त्तव्यता—समर्पणेनाकाङ्क्षापूरणात् प्रकरणाम्नातः सकलः शब्दसन्दर्भो भावनावाचिन आख्यातस्यैव प्रपञ्चः। तस्यां च भावनायां स्वर्गस्य भाव्यत्वं कमियोगात्, प्रकृत्यर्थस्य च करणत्वं तृतीयाश्रुत्याऽवगम्यते। तथा च श्रूयते 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति। अग्न्यन्वाधानप्रयाजादीनामितिकर्त्तव्यतात्वं तु दर्शपूर्णमासप्रकरणे तेषां समाम्नानादवगम्यते। सेयं साध्यसाधनेतिकर्त्तव्यतारूपांशत्रयवती भावना आर्थीत्युच्यते।

अथ शाब्दी भावना लिङ्प्रत्ययेनोपस्थाप्यते। यतो लिङ्लोट्तव्यादिश्रवणोत्तरम् अयं मामनेन शब्देनास्मिन्नर्थे प्रवर्त्तयति इति मत्प्रवर्त्तनाविषयकाभिप्रायवानयम् इति च नियमेन प्रतीयते। स चाभिप्रायविशेषो लोके प्रयोक्तृपुरुषनिष्ठः। वेदे तु पुरुषाभावाच्छब्दनिष्ठ एव सः। अत एव लिङादिभिरुपस्थापिता भावना शाब्दीति व्यपदिश्यते। अस्याश्च भावनायाः पूर्वोक्तांशत्रयवती सर्वाप्यर्थभावना साध्या भवति। साधनं तु लिङादिज्ञानम्। शब्दभावनाया अपेक्षितमितिकर्त्तव्यतांशं त्वर्थवादवाक्यसंपादिता स्तुतिः पूरयतीति दिक्।

ननु स्वर्गकामो यजेतेत्यादिभिर्वाक्यैः स्वर्गादिफलसाधनत्वेन यागादिर्यद्यपि विधीयते, तथापि क्रियाकलापात्मकस्य तस्य क्षणिकत्वेन कालान्तरभाविस्वर्गादिफलसाधनत्वं कथं घटताम्। नहि दग्धेन दण्डेन घटोत्पादना सम्भवतीति चेत्। सत्यम्। यागादेः क्षणिकत्वाद्यावत्फलोत्पत्तिमवस्थानासम्भव इति। परन्तु यागादिजनिता काचिदपूर्वनामधेया[1] शक्तिरक्षतैवावतिष्ठत इति तद्द्वारा यागादेः स्वर्गादिफलसाधनत्वमुपपद्यते। न च शक्तिरूपस्यापूर्वस्य कल्पनायामव्यवहितस्य तस्यैव स्वर्गादिफलसाधनत्वापत्त्या यागादेः साधनत्वबोधकश्रुतिवाक्यानि विरुध्येरन्निति वाच्यम्, वह्निना घृतं विलापयतीत्यादौ

---

१ पुण्यशब्देन या व्यवह्रियते।

काष्ठव्यवहितस्यापि वह्नेः साधनत्वस्य सम्प्रतिपन्नत्वात्। किञ्चाङ्गारजन्यमौष्ण्यं प्रशान्तेष्वप्यङ्गारेषु यथा घृतेऽनुवर्त्तते यथा वा कालान्तरभाविन्याः स्मृतेर्जनकोऽनुभवाहितः संस्कारोऽनुभवकर्त्तर्यात्मन्यनुवर्तते, तथा कालान्तरभाविस्वर्गादिफलजननक्षमं यागादिभिराहितमपूर्वं विनष्टेऽपि यागादौ तत्कर्त्तर्यात्मनि सम्यगनुवर्त्तत एवेति न काप्यनुपपत्तिः। नन्वेवं तर्ह्यपूर्वस्यैव धर्म्मत्वं स्यान्न यागादेरिति चेत्। सत्यम् अपूर्वस्यैव धर्म्मत्वमिति तथाप्यायुर्घृतमित्यादावायुःकारणस्य घृतस्य यथा आयुःपदेन व्यवहारस्तथैव धर्म्मकारणस्यापि यागादेर्धर्म्मपदेन व्यवहारो युक्त एव। किञ्च धर्म्मस्यादृष्टपदवाच्यत्वं सर्वतन्त्रप्रसिद्धमप्यपूर्वस्यैव मुख्यधर्म्मत्वे सङ्गच्छते न त्वन्यथा, यागदानादेः प्रत्यक्षत्वाददृष्टपदशक्यत्वासम्भवात्। यदाहुः—

क्रिया जातिर्योग्यवृत्तिः समवायश्च तादृशः।
गृह्णाति चक्षुः सम्बन्धादालोकोद्भूतरूपयोः॥ (भाषा० ५५) इति।

योग्यवृत्तिरित्यस्य उद्भूतरूपवद्द्रव्यवृत्तिरित्यर्थः।

ननु धर्म्मस्यात्यन्तादृष्टत्वे तस्य चक्षुरादिगम्येन लौकिकाकारेण हीनत्वात् कथं स लक्षयितुं शक्येतेति चेत्। अत्रोच्यते—मा भूच्चक्षुरादिगम्यो लौकिक आकारस्तथापि चोदनागम्यः स्वर्गफलसाधनत्वादिरूप आकारोऽस्त्येव। तथा च चोदनागम्यत्वे सति अर्थत्वमिति धर्म्मस्य लक्षणं सम्पद्यते। अर्थत्वमात्रं घटादीनामप्यस्तीति तत्रातिव्याप्तिवारणाय सत्यन्तदलम्। तावन्मात्रोक्तौ 'श्येनेनाभिचरन् यजेत' इतिविधिगम्येऽप्यनर्थफलत्वेनानर्थरूपे श्येनाद्यभिचारकर्म्मण्यतिव्याप्तिः स्यात् तद्वारणायार्थत्वमित्युक्तम्। यद्यपि श्येनयागस्य शत्रुवधः फलं कथ्यते न तु नरकः, तथापि तत्फलभूतस्य प्राणिवधस्य नरकलक्षणानर्थहेतुत्वात् प्राणिवधफलकं श्येनयागाद्यभिचारकर्म्माप्यनर्थात्मकमेव। न चैवमग्नीषोमीयपशुहिंसाया अपि वधत्वेन नरकहेतुत्वं स्यादिति शङ्कनीयम्। तस्याः क्रत्वङ्गत्वेन परतन्त्रत्वात् क्रतुफलस्वर्गव्यतिरेकेण फलान्तरजनने स्वातन्त्र्याभावाच्च। एवं च गम्ये धर्म्मे गमकं विधिवाक्यं साक्षादेव प्रमाणम्।

सोऽयं विधिश्चतुर्विधः—उत्पत्ति-विनियोगा-धिकार-प्रयोगभेदात्।

तत्र कर्म्मस्वरूपमात्रबोधको विधिरुत्पत्तिविधिः। यथाऽग्निहोत्रं जुहोतीत्यादिः।

अङ्गसम्बन्धबोधको विधिर्विनियोगविधिः। यथा व्रीहिभिर्यजेत,

दध्ना जुहोतीत्यादिः। अयं हि तृतीयाप्रतिपन्नाङ्गभावस्य व्रीह्यादिद्रव्यस्य यागहोमादिना सम्बन्धं विधत्ते व्रीहिभिर्यागं भावयेदित्यादि।

फलस्वाम्यबोधको विधिरधिकारविधिः। यथा 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत'इत्यादिः। अनेन हि स्वर्गमुद्दिश्य दर्शपौर्णमासयागं विदधता स्वर्गकामस्य यागजन्यफलभोक्तृत्वं बोध्यते।

उक्तविधित्रयसंमेलनरूपो विधिः प्रयोगविधिः। स च श्रौत इत्येके। कल्प इत्यपरे। अनेन हि प्रयोगविधिना साङ्गस्य प्रधानस्य नियतक्रमेणानुष्ठानं ज्ञाप्यते।

यदन्यार्थं तदङ्गम्। यत्त्वनन्यार्थं तत् प्रधानम्। अङ्गं द्विविधम्-सिद्धरूपं क्रियारूपं चेति। आद्यं जातिद्रव्यसंख्यादिरूपम्। द्वितीयं तु सन्निपत्योपकारकमाराडुपकारकं चेति भेदात् द्विविधम्। तत्र यत् कर्म्म द्रव्याद्युद्देशेन विधीयते तत् सन्निपत्योपकारकम्। यथा व्रीहीनवहन्ति सोममभिषुणोतीत्यादिना व्रीहिसोमादिद्रव्योद्देशेन विधीयमानमवघाताभिषवादि। यत्तु द्रव्यादिकमनुद्दिश्य केवलं विधीयते तत् कर्म्माराडुपकारकम्। यथा प्रयाजादि। सन्निपत्योपकारके कर्म्मणि उपकार्योपकारकयोः सम्बन्धो वाक्यगम्यः। आराडुपकारकस्थले तूपकार्योपकारकयोर्दर्शपूर्णमासयोः सम्बन्धः प्रकरणबलाडुन्नेयः। सर्वेषामप्यङ्गानामन्यार्थत्वाविशेषः। तदेवं प्रयोगविधिबोधितेन साङ्गप्रधानानुष्ठानप्रकारेण स्वर्गादिफलकं परमापूर्वं सिध्यतीति दिक्।

प्राशस्त्यनिन्दान्यतरलक्षणया विधिशेषभूतं वाक्यमर्थवादः। स च त्रिविधः। गुणवादोऽनुवादो भूतार्थवादश्चेति भेदात्।

तत्र प्रमाणान्तरविरुद्धार्थबोधकं वाक्यं गुणवादः। यथा 'आदित्यो यूपः' इत्यादिः। अत्र हि प्रत्यक्षविरुद्धं यूपादावादित्यत्वादि। तस्मादादित्यादिवद्यागनिर्वाहकत्वरूपो गुण आदित्यादिशब्दैरुपलक्ष्यत इति तस्य गुणवादत्वम्।

प्रमाणान्तरसिद्धार्थबोधकोऽनुवादः। यथा 'वायुर्वै क्षेपिष्ठा देवता। वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयति' इत्यादिः। अत्र हि क्षिप्रगामी वायुरित्यर्थो लोकानुभवसिद्धः। स वायुः स्वोचितेन भागेन तोषितः सन्नैश्वर्यं प्रयच्छतीत्यर्थस्तु 'वायव्यं श्वेतमालभेत भूतिकामः' इति विधिवाक्येनैव सिद्धः। तस्मादस्यानुवादत्वम्।

अविरुद्धाप्राप्तार्थबोधको भूतार्थवादः। 'इन्द्रो वृत्राय वज्रमुदयच्छत्' इत्यादिः। अत्र भारतरामायणादाविव वृत्तान्तः कश्चिदविरुद्धः प्रमाणान्तरेणाप्राप्तश्च प्रतीयते नत्वनुष्ठेयं किञ्चित्। ततश्चायं भूतार्थवादः।

त्रिविधा अप्येतेऽर्थवादाः स्वार्थप्रतिपादने प्रयोजनमलभमानाः प्रयोजनवदर्थपर्यवसायिविध्यपेक्षितं प्राशस्त्यं लक्षणावृत्त्या समर्प्य विधिवाक्येन सहैकवाक्यतां भजन्ते। त्रिविधानामेषां विधिस्तुतिपरत्वे समानेऽपि गुणवादानुवादयोर्बाधितविषयत्वात् ज्ञातज्ञापकत्वाच्च स्वार्थे प्रामाण्याभावः। प्रामाण्यं नामाबाधिताज्ञातज्ञापकत्वमित्युक्तम्। भूतार्थवादस्य तु स्वार्थे प्रामाण्यं न वारयितुं शक्यते, स्वतः प्रामाण्यवादे तस्यौत्सर्गिकत्वात्।

अथ मन्त्रा अनुष्ठानकारकद्रव्यदेवतादिप्रकाशका ऋग्यजुःसामभेदात् त्रिविधाः। तेषां च प्रयोगे उच्चारणं प्रयोगसमवेतार्थस्मरणार्थं, न त्वदृष्टार्थम्। दृष्टे सम्भवति केवलादृष्टस्य कल्पयितुमशक्यत्वात्। न चार्थानुस्मरणस्य ब्राह्मणवाक्यतोऽपि सम्भवे मन्त्राम्नानमनर्थकं स्यादिति वाच्यम्, मन्त्रैरेवार्थोऽनुस्मरणीय इति नियमविधेराश्रयणात्। नियमस्य च दृष्टफलासम्भवाददृष्टप्रयोजनमस्तु। एवं च मन्त्राणां प्रयोगविधिना सहैकवाक्यतया प्रामाण्यम्।

अथ 'उद्भिदा यजेत पशुकामः' इति 'विश्वजिता यजेत' इत्यादि च समाम्नायते। तत्रोद्भिदादिपदानां प्रमाणत्वेनाभिमतेषु विध्यादिष्वनन्तर्भावान्न प्रामाण्यम्। तथा हि। न तावदुद्भिदादिपदानि विधावन्तर्भवन्ति, विध्यर्थरूपाया भावनाया आकाङ्क्षितानां भाव्यकरणेतिकर्त्तव्यतारूपाणामंशानामन्यतमस्य कस्याप्यंशस्यावाचकत्वात्। नाप्यर्थवादत्वं तेषाम्, स्तुतिबोधकत्वाभावात्। नापि मन्त्रत्वम्, उत्तमपुरुषादीनां मन्त्रलिङ्गानामभावात्। ततश्च कथमेवमादीनां प्रामाण्यमिति चेत्। उच्यते। उद्भिदादिपदं कर्म्मविशेषस्य नामधेयम्। तथा च तस्य विध्यंशे करणे धातूपस्थाप्ये यागादौ सामानाधिकरण्येनान्वयात् यागविशेषबोधकत्वेनार्थवत्त्वात् प्रामाण्यं सुस्थितमेव।

तदेवं विध्यर्थवादमन्त्रनामधेयभेदाच्चतुर्विधोऽपि वेदो धर्म्मे प्रमाणमिति प्रथमेऽध्याये निरूपितम्।

द्वितीये तु यागादिकर्म्मणां भेदः।

तृतीये प्रयाजादीनां दर्शपूर्णमासार्थत्वात् तच्छेषत्वमित्येवं शेषशेषिभावो निरूपितः।

चतुर्थेऽध्याये त्वयं क्रत्वर्थोऽयं पुरुषार्थ इति विवेकेन साक्षात् परम्परया वा प्रयोज्यप्रयोजकभाव उपपाद्यते। ये क्रतुस्वरूपपौष्कल्यायैव विधीयन्ते ते क्रत्वर्थाः। यथा प्रयाजादयः। तैर्हि दर्शपूर्णमासादिक्रतूनां फलजननसामर्थ्यलक्षणं पौष्कल्यमुत्पाद्यते, न तु पुरुषस्य कश्चित् प्रीतिविशेषः। तस्मादेवंविधाः क्रत्वर्था एव भवन्ति, न पुरुषार्थाः। ये तु पुरुषप्रीतये विधीयन्ते ते पुरुषार्थाः। यथा दर्शपूर्णमासाद्याः क्रतवः। न हि दर्शपूर्णमासाभ्यां कस्यचित् क्रतोः पौष्कल्यं भवति, तयोरेव क्रतुत्वात्। किन्तु क्रतुजन्यस्वर्गविषया प्रीतिस्तु सम्पद्यतेऽतस्ते पुरुषार्था इत्यलम्।

पञ्चमेऽध्यायेऽनुष्ठीयमानकर्म्मणां क्रमादिविचारः।

षष्ठे योग्यस्य कर्म्मण्यधिकारो नान्धादेरित्यधिकारनिर्णयः।

सप्तमे सामान्यातिदेशविचारः।

अष्टमे विशेषातिदेशविचारः।

नवमे ऊहविचारः।

दशमे कृष्णलेषु[1] चोदकप्राप्तावघातस्य वितुषीकरणासम्भवाल्लोप इत्येवं बाधः।

एकादशे च बहूनां प्रधानानां सकृदनुष्ठितेन प्रयाजाद्यङ्गेनोपकार इत्यादि तन्त्रस्वरूपम्।

द्वादशेऽध्याये प्रधानस्य पशोरुपकारायानुष्ठितेन प्रयाजाद्यङ्गेन पश्वङ्गपुरोडाशेऽप्युपकार इत्यादिरूपः प्रसङ्गो निरूपित इति दिक्।

संवर्द्धितुमुपक्रान्तो दृष्ट्वा विद्यासुधाकरम्।
अपि नात्येति मर्यादां मीमांसाशास्त्रवारिधिः॥

॥ इति धर्म्ममीमांसामतदर्शनम्॥

---

अथात्र ब्रह्ममीमांसाशास्त्रस्य मतमुच्यते।
तदेतत् सूत्रयामास भगवान् बादरायणः॥
यत् सत्तया जगत् सत्यं भाति यद्भानतोऽखिलम्।
तदेकं शाश्वतं ब्रह्म सच्चिदानन्दमाश्रये॥

इह खलु परमकारुणिको मुनिर्बादरायणः कर्म्मकाण्डोदितयज्ञदान-

---

१ धान्यविशेषेषु।

तपःस्वाध्यायादिकर्म्मभिर्विशुद्धाशयानां शमदमादिमतां नित्यानित्यवस्तुविवेकेन इहामुत्रफलभोगविरागिणां मुमुक्षूणां मोक्षोपायमध्यात्मविद्यामुपदिदिक्षुः 'अथातो ब्रह्मजिज्ञासा' इत्यादिभिर्ब्रह्मसूत्रैरखिलवेदान्तश्रुतिवाक्यानि संग्रथयामास। सोऽयं सूत्रग्रन्थश्चतुर्भिरध्यायैर्विततो वेदान्तशास्त्रमिति ब्रह्ममीमांसेति वा व्यपदिश्यते। तत्र प्रथमेऽध्याये सर्वेषां वेदान्तश्रुतिवाक्यानां तात्पर्यतो ब्रह्मणि पर्यवसानलक्षणः समन्वयः, द्वितीये सम्भावितविरोधपरिहारः, तृतीयेऽध्यात्मविद्यासाधननिर्णयः, चतुर्थे विद्याफलविचारः सूत्रित इति वेदितव्यम्।

तत्र तावत् 'ब्रह्मविदाप्नोति परम्' ( तै० उ० २।१।१ ) इति 'तरति शोकमात्मविद्' ( छा० उ० ७।१।३ ) इत्यादिश्रुतिवाक्यैर्बोधितस्य सफलस्य ब्रह्मज्ञानस्य साधनं श्रवणमिति 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' ( बृ० उ० २।४।५ ) इति श्रुतिर्बोधयति। श्रवणं च वेदान्तवाक्यानां ब्रह्मणि तात्पर्यावधारणानुकूलविचाररूपम्। तेन निर्विचिकित्सं ब्रह्मज्ञानं सम्पद्यते। तदेव च समस्तदुःखोपशामकमानन्दैकरसं परमं प्रयोजनं सूचितमस्य शास्त्रस्य 'अथातो ब्रह्मजिज्ञासा' इति प्रथमसूत्रेण। ब्रह्मजिज्ञासापदोपस्थाप्यस्य ब्रह्मज्ञानस्यैव साक्षादिच्छाव्याप्यत्वावगमात्। कर्मज्ञानोत्तरमनुष्ठानस्येव ब्रह्मज्ञानोत्तरभाविनः कस्यचिदवशिष्टार्थस्याभावाच्च। तदेतद्ब्रह्मज्ञानं वस्तुतः प्राप्तमप्यनाद्यविद्यावशादप्राप्तकल्पम्। अतः प्रेप्सितं भवति। यथा स्वग्रीवागतमपि ग्रैवेयकं कुतश्चिद्भ्रमान्नास्तीति मन्यमानः परेण प्रतिबोधितमप्राप्तमिव प्राप्नोति।

ननु वेदान्तश्रवणं न ब्रह्मसाक्षात्कारहेतुः। लोके कृतश्रवणस्यापि बहुशस्तदनुत्पत्तिदर्शनादकृतश्रवणस्यापि वामदेवादेर्गर्भवासे एव तदुत्पत्तिदर्शनाच्चान्वयव्यतिरेकव्यभिचारादिति चेत्। मैवम्। सहकारिवैकल्येनान्वयव्यभिचारस्य दोषत्वाभावात्। जातिस्मरस्य वामदेवादेर्जन्मान्तरीयश्रवणात् फलसम्भवेन व्यतिरेकव्यभिचारायोगाच्च। ननु कृतश्रवणस्य प्रथमतः शाब्दं परोक्षज्ञानमेवोपजायताम्। शब्दस्य परोक्षज्ञानजननस्वाभाव्यात्। ततो मनननिदिध्यासनाभ्यामपरोक्षानुभवो भवतु। तथा च समुदितानामेषां त्रयाणां ब्रह्मसाक्षात्कारहेतुत्वमुदाहृता श्रुतिर्बोधयति, न तु प्रत्येकम्। तत्कथमेकस्य श्रवणस्य ब्रह्मसाक्षात्कारहेतुत्वमुच्यत इति चेत्। मैवम्। सन्निकृष्टयोग्यवस्तुविषयकस्य यावत्प्रमाणजन्यज्ञानस्य प्रत्यक्षत्वाभ्युपगमात्। चक्षुःसन्निकृष्टस्य

वह्नेः सत्यामनुमित्सायामनुमानजन्यज्ञानस्य प्रत्यक्षत्वाव्यभिचारात्। केनचिन्निमित्तेन व्याधकुलसंवर्द्धितस्य राजकुमारस्य स्वीययथार्थस्वरूपानभिज्ञस्य कदाचित् प्राप्तेऽवसरे राजकुमारस्त्वमसीत्याप्तवाक्यात् स्वरूपसाक्षात्कारोदयदर्शनाच्च शब्दानामप्यपरोक्षज्ञानजननक्षमत्वमस्त्येवेति शब्दापरोक्षवादे सिद्धान्तितमाकरे। तस्माच्छ्रुतिविहितानां श्रवणादीनां तृणारणिमणिन्यायेन प्रत्येकं ब्रह्मसाक्षात्कारहेतुत्वमिति दिक्।

श्रुतिबोधितश्चायं श्रवणविधिर्नियमविधिर्दृष्टार्थत्वात्। तथा चोक्तम् 'आवृत्तिरसकृदुपदेशात्' ( वे० सू० ४।१।१ ) इति सूत्रभाष्ये श्रीमच्छङ्कराचार्यैः—'दर्शनपर्यवसानानि हि श्रवणादीनि आवर्त्तमानानि दृष्टार्थानि भवन्ति। यथावघातादीनि तण्डुलनिष्पत्तिपर्यवसानानि' इति। श्रवणस्य ब्रह्मदर्शनार्थस्य[1] दृष्टार्थतया दर्शपौर्णमासिकावघातन्यायप्राप्त्याऽऽवृत्त्युपदेशः। अपूर्वविधित्वे तु स नोपयुज्येतेति बोध्यम्।

ननु सन्दिग्धं हि वस्तु विचारस्य विषयो भवेत्, ब्रह्म तु न सन्दिग्धम्। बृहत्त्वाद्बृंहणत्वाद्वा आत्मैव ब्रह्मेति गीयते। स चायमात्मा सर्वेषां प्राणिनामहमस्मीत्यहंप्रत्ययेनासंदिग्धापरोक्षानुभवसिद्ध एवेति विफलोऽयमुपक्रम इति चेत्। अत्रोच्यते—यद्यहंप्रत्ययेनानुभूयमानमात्मवस्तु नियताकारं स्यात् तदा त्वसन्दिग्धं स्यात्। न चैतदस्ति। तथा हि स्थूलोऽहं कृशोऽहमित्यहंप्रत्ययो देहाकारेणात्मानं गृह्णाति स्थूलत्वादेर्देहधर्म्मत्वात्। तथा बधिरोऽहमन्धोऽहमित्यहंप्रत्यय इन्द्रियाकारेणात्मानं गृह्णाति बधिरत्वादेरिन्द्रियधर्म्मत्वात्। तस्मादनियताकारस्यैवात्मवस्तुनोऽहंप्रत्ययेनाऽवगतत्वात्सन्दिग्धता सुस्थैव। किञ्च

एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा।
कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च॥
( श्वे० उ० ६।११ )

इति 'अयमात्मा ब्रह्म' ( बृ० उ० ४।४।५ ) इति चैवमाद्याः श्रुतयः समस्तोपाधिशून्यमद्वितीयं ब्रह्मवस्त्वात्मत्वेनोपदिशन्ति, अहंप्रत्ययस्तु प्रादेशिकमनेकविधदुःखशोकादिप्रपञ्चोपप्लुतमात्मानं प्रत्याययति। तथा चात्मवस्तु सन्दिग्धमेवेति भवत्येव विचारस्य विषय इति तत्रा-

१ दर्शनमपरोक्षानुभवः।

पौरुषेयतया निरस्तसमस्तदोषाशङ्केन स्वतःसिद्धप्रमाणभावेन श्रुतिवचनेन विरुद्धत्वादप्रामाण्यं मनुष्योऽहमित्यादिरूपस्याहंप्रत्ययस्येत्यवसीयते। एवं च देहादितादात्म्याध्यासेन स्थूलोऽहमित्यादिरूपोऽहंप्रत्ययो भ्रान्तिविलसितः सोपप्लवमात्मानमव्यवस्थितमवगमयतीति विभावनीयम्।

नन्वपुरोवर्त्तिनि निरवयवे नीरूपे च चिदात्मनि देहादिविषयस्य तद्धर्माणां चाध्यासो न घटते। सर्वो हि पुरोवर्त्तिनि सावयवे रूपवति च विषये विषयान्तरमध्यस्यतीति चेत्। मैवम्। अध्यासहेतोर्दोषस्य निरर्गलत्वात्। न चायमस्ति नियमः पुरोवर्त्तित्वादिविशिष्टे एव विषये विषयान्तरमध्यसितव्यमिति, अतादृशेप्याकाशे यतो बालास्तलमलिनताद्यध्यस्यन्ति। एवमविरुद्धः प्रत्यगात्मन्यप्यनात्मदेहादितादात्म्याध्यास इति।

अथ कोऽसावध्यास इति चेत् अतस्मिंस्तद्बुद्धिरूप इति गृहाण। किमेतस्य लक्षणं निर्वचनीयमिति चेत्—अनेकविधवादिविप्रतिपत्तिभिरध्यासलक्षणनिर्णयस्य सन्देहसागरे निमग्नत्वान्न शक्यते तन्निर्वक्तुम्। तथा हि मिहिरमरीचिनिकरे मिथ्याज्ञानेन प्रतीतं सलिलं किं सत्, किमुताऽसत्, आहोस्विदुभयात्मकम्।

न तावदाद्यः—सद्वस्तुनो ज्ञानान्तरसहस्रेणापि बाधितुमशक्यत्वेन निवृत्त्यभावप्रसङ्गात्। तथा सति गङ्गासलिलस्येवाध्यस्तसलिलस्यापि पिपासोपशामकत्वमापद्येत। न चेष्टापत्तिः। अनुभवविरोधात्। न हि कश्चिल्लोके गङ्गासलिलमिव मरीचिसलिलं निपीय वीततृष्णः संवृत्तो दृश्यते।

न द्वितीयः। निरस्तसमस्तस्वरूपस्यात्यन्तासतो बन्ध्यापुत्रस्येवाध्यस्तसलिलादेरनुभवविषयत्वानुपपत्तेः।

नापि तृतीयः। परस्परविरोधात्।

तस्मान्न मरीचिसलिलादिकं सदसदुभयात्मकं वा निर्वक्तुं शक्यते, किन्तु परमार्थसलिलादेर्भिन्नं किमप्यनिर्वचनीयमपूर्वमेवोपजायते। तथा चोक्तं वार्त्तिककारैः—

युक्तिहीनप्रकाशत्वान्न भ्रान्तेरस्ति लक्षणम्।
यदि स्याल्लक्षणं किञ्चिद्भ्रान्तिरेव न सिध्यति॥ इति।

आरोप्यस्य च न सत्त्वमध्यासेऽपेक्षितं किन्त्वप्रतीतस्यारोपायोगात्

प्रतीतिमात्रम् । एवं च कूटकार्षापणादिना व्यवहारदर्शनात् पूर्वपूर्वमिथ्याज्ञानोपस्थापितदेहादिप्रपञ्चस्य प्रतीतिरुत्तरोत्तराध्यासे उपयोक्ष्यते ।

यद्यपि देहादिप्रपञ्चस्य कथञ्चित् प्रतीतौ सत्यामध्यासः, सति चाध्यासे देहादिप्रपञ्चस्य प्रतीतिरित्यन्योन्याश्रय आपतति । तथापि नायं दोषः बीजाङ्कुरवत् संसारप्रवाहस्यानादित्वेन तत्कारणस्याध्यासस्याप्यनादित्वात् ।

तदेवमपरिच्छिन्ने चैतन्यैकरसेऽद्वितीये प्रत्यगात्मन्यध्यस्तो निखिलोऽन्तःकरणादिर्जडवर्गश्चेतनवत् सद्रूपेणावभासते । प्रत्यगात्मा चान्तःकरणादिष्वध्यस्तोऽन्तःकरणाद्यवच्छिन्नः प्रादेशिको जडवदवभासमानः सन् कर्त्ता च भोक्ता चाहंकारास्पदमुपजायते । सोऽयमनिर्वचनीयो मिथ्याज्ञानविलासोऽनादिरपार इतरेतराध्यासः सर्वानर्थमूलकारणं न शक्यते तत्त्वज्ञानमन्तरा समूलघातं हन्तुम् । तस्मादादरनैरन्तर्यदीर्घकालाभ्यासजन्मना तत्त्वज्ञानसंस्कारेणानन्तजन्मान्तरप्रणालिकाऽऽगतः सुदृढोऽपि मिथ्याज्ञानसंस्कारः समूलघातं हन्यत इत्युपदिशति मातेव हितकारिणी श्रुतिः—'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' (बृ० उ० २।४।५) इति । 'शान्तो दान्त उपरतस्तितिक्षुः श्रद्धावित्तो भूत्वाऽऽत्मन्येवात्मानं पश्येत् सर्वमात्मनि पश्यति' इति च ।

अथ विचारणीयस्य ब्रह्मणो जगत्कारणत्वरूपं लक्षणं श्रुतिरावेदयति-'यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत् प्रयन्त्यभिसंविशन्तीति तद्विजिज्ञासस्व तद्ब्रह्मेति' ( तै० उ० ३।१।१ ) इति ।

तत्र ब्रह्मणो जगत्कारणत्वं न परमाणूनामिवारम्भकत्वरूपम्, न वा प्रकृतेरिव परिणामित्वरूपम् । किन्तु मायया व्योमादिरूपेण विवर्त्तमानत्वलक्षणम् । तथा चेन्द्रजालस्येव जगतो मायिकत्वेन तात्त्विकसत्ताशून्यत्वान्नेयं श्रुतिर्जगद्ब्रह्मणोर्वास्तविकं कार्यकारणभावमभिधत्ते किन्त्वौपचारिकमेव । अत एव श्वेताश्वतरोपनिषदि—

अस्मान्मायी सृजते विश्वमेतत्
तस्मिंश्चान्यो मायया सन्निरुद्धः ।
(श्वे० उ० ४।९) इति,

न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते ।
परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च ॥
( श्वे० उ० ६।८ )

इति समाम्नातं सङ्गच्छते।

यथा हि लोकप्रसिद्ध ऐन्द्रजालिको मायावी मणिमन्त्रादिप्रयोगसंक्षुभ्यमाणया मायया प्रेक्षकाणां विस्मापनमिन्द्रजालं सृजति तथा महामायावी महेश्वरोऽनन्तशक्तिर्निर्व्यापार एव स्वेच्छामात्रेणाखिलं जगत् सृजति। तदुक्तं मानसोल्लासे सुरेश्वराचार्यैः—

ईश्वरोऽनन्तशक्तित्वात् स्वतन्त्रोऽन्यानपेक्षकः।
स्वेच्छामात्रेण सकलं सृजत्यवति हन्ति च॥
न कारकाणां[1] व्यापारात् कर्त्ता स्यान्नित्य ईश्वरः।
नापि प्रमाण[2]व्यापारात् ज्ञातासौ स्वप्रकाशकः॥
ज्ञातृत्वमपि कर्तृत्वं स्वातन्त्र्यं तस्य केवलम्।
या चेच्छाशक्तिवैचित्री सास्य स्वच्छन्दकारिता॥
यथा कर्तुं न वा कर्तुमन्यथा कर्तुमर्हति।
स्वतन्त्रामीश्वरेच्छां के परिच्छेत्तुमिहेशते।
श्रुतिश्च सोऽकामयतेतीच्छया सृष्टिमीशितुः।
तस्मादात्मन आकाशः सम्भूत इति चाब्रवीत्॥ इति।

या हीच्छाशक्तिः सैव मायेति बोध्यम्।

अथ सकलस्य विश्वस्य मायाविलसितत्वाविशेषे कथं जीवेश्वरविभाग इति चेत्। श्रूयताम्—एकाऽपि गुणत्रयवतीच्छाशक्ती रजस्तमोऽनभिभूतशुद्धसत्त्वगुणप्रधाना सती मायेति, रजस्तमोऽभिभूतमलिनसत्त्वप्रधाना च सत्यविद्येत्यभिधीयते। ततश्च मायोपाधिकं चैतन्यमीश्वर इत्यविद्योपाधिकं तु चैतन्यं जीव इति व्यपदिश्यते। विशुद्धेरेकविधत्वाच्छुद्धसत्त्वप्रधानमायाया एकत्वेन मायाविन ईश्वरस्याप्येकत्वम्। मालिन्यस्य तारतम्येन मलिनसत्त्वप्रधानाया अविद्याया नानात्वात् तदुपाधिकस्य जीवस्यापि देवमनुष्यतिर्यगादिप्रभेदेन नानात्वम्।

तत्रेश्वरः सर्वज्ञः स्वतन्त्रः सर्वस्य नियन्ताऽस्ति। तदुपाधेर्मायायाः शुद्धसत्त्वप्रधानत्वात्। जीवस्तु न तथा। मलिनसत्त्वप्रधानयाऽविद्ययोपहितत्वात्। एवं च कौन्तेयस्यैव राधेयत्ववदविकृतस्यैवात्मनः स्वाविद्यया जीवभावः। तथा च व्याधकुलसंवर्द्धितराजकुमारदृष्टान्तेन जीवः स्वाविद्यया संसरति स्वविद्यया च मुच्यते इति बृहदा-

१ कारकाणां क्रियानिष्पादकानां करणादीनाम्।

२ प्रमाणानां चक्षुरादीनाम्।

रण्यकभाष्ये निर्णीतमाचार्यैः। अविकृतस्यैव चात्मनो मायाकल्पितैरेव सर्वनियन्तृत्वादिधर्म्मविशेषैरीश्वरभाव इति तत्त्वम्। ततश्च सदसद्भ्यामनिर्वचनीयं ज्ञानविरोधिभावरूपं मूलाज्ञानमेव मूलप्रकृतिरिति मायेत्यविद्येति मिथ्याज्ञानमित्यादिशब्दैरभिलप्यते। तदेव च मूलाज्ञानं सकलद्वैतप्रपञ्चस्य मूलं जीवेश्वरभेदेऽपि कारणं भवति। तद्यथा स्वभावेनानवच्छिन्ने आकाशे घटमुपाधिं निमित्तीकृत्य तत्क्रोडीकृतत्वेनांशं कल्पयित्वा घटाकाश इत्येको विभागः। घटाद्बहिरिति शब्दमात्रनिबन्धनो महाकाश इत्यपरो विभागः। परमार्थतस्तु नासौ विभागः सम्भवति। अमूर्त्तस्याकाशस्य केनचित् परिच्छेदायोगात्। तथा देहेनाहं मनुष्य इत्यादिप्रकारेण विशेष्यमाणो यो जीवात्मेत्युच्यते स एव तेनाविशेष्यमाणः परमात्मेतीश्वर इति च गीयते। निरंशे चिदात्मन्यवच्छेदस्य परमार्थतोऽनुपपत्तेर्जीवेश्वरयोर्न वास्तवो भेदोऽस्ति। तथा चोक्तं विद्यारण्यमुनिना-

मायाख्यायाः कामधेनोर्वत्सौ जीवेश्वरावुभौ।
यथेच्छं पिबतां द्वैतं तत्त्वं त्वद्वैतमेव हि॥ इति।

अथ घटोऽस्ति घटः स्फुरतीत्यादिना घटादिसत्त्वस्फुरणग्राहकेण प्रत्यक्षानुभवेन विरोधादागमशतैरपि गीतं द्वैतप्रपञ्चस्य मिथ्यात्वं नावधारयितुं शक्यते। ज्येष्ठत्वाच्छ्रेष्ठत्वाच्च प्रत्यक्षस्य प्राबल्यात्। अत एव दीर्घकालं देशान्तरे गुरुकुले वसतः पुत्रादेः परोक्षस्य विद्यानैपुण्यं जनाच्छृण्वन्नपि पित्रादिर्न यावत् तत् साक्षात्करोति तावन्न श्रद्दधातीति चेत्। मैवम्। प्रत्यक्षदृष्टस्य वस्तुस्वरूपस्य बहुशो व्यभिचारदर्शनात्। तथा हि—

तलवत् दृश्यते व्योम खद्योतो हव्यवाडिव।
न तलं विद्यते व्योम्नि न खद्योतो हुताशनः॥

वितस्तिमात्रं गगने प्रत्यक्षेणेन्दुमण्डलम्।
दृश्यतां बालिशैस्तन्न प्रमाणं शास्त्रदृष्टितः॥

किञ्च नभसि नैल्यं सोमतेजसि शैत्यमित्येवं संकीर्णतया प्रतीयमानानां मध्ये नैल्यं पृथिव्या एव गुणो, नभस्तु शब्दमात्रगुणकम्, शैत्यमपां गुणस्तेजस्तूष्णस्पर्शगुणकमित्येवं व्यवस्थाया आगमं विना

केवलं प्रत्यक्षमवलम्ब्यास्मदादिभिः कर्त्तुमशक्यत्वादागमस्यैव निर्विशङ्कं प्राबल्यमास्थेयम्।

ननु पृथिव्यादीनां भूतानां प्रायः परस्परं संसृष्टतयाऽन्यगुणस्यान्यत्राप्यवभासः सम्भवतीति शङ्कितदोषं प्रत्यक्षं तत्रागमेन बाध्यतामिति चेत्, प्रकृतेऽपि ब्रह्मप्रपञ्चयोरुपादानोपादेयभावेन परस्परं संसृष्टत्वाद्ब्रह्मसत्यत्वस्य प्रपञ्चेऽवभासः सम्भाव्यत एवेति शङ्कितदोषं घटादिसत्यत्वग्राहकं प्रत्यक्षं 'सत्यं ज्ञानमनन्तं ब्रह्म' 'सर्वं खल्विदं ब्रह्म', 'नेह नानास्ति किञ्चन' इत्यादिभिरागमैर्बाध्यत एवेति तुल्यम्।

यत्तु घटादेः सत्त्वं प्रकाशमानत्वं वा प्रत्यक्षेण गृह्यते, तत्तु सच्चिदात्मब्रह्मनिष्ठमित्यवधारयितुं शक्यते। आगमसिद्धेऽस्मिन्नर्थे प्रमाणमनुमानमप्यस्ति। तथा हि। विमता घटादयो भावा न स्वतः सत्तावन्तः कदाचिदेवोपलभ्यमानत्वात् मृगजलादिवत्। तथा विमता घटादयो न स्वतः प्रकाशमाना अन्याधीनसत्ताकत्वात् शुक्तिरजतवत् इति। एवं चारोपितस्य मृगजलादेरधिष्ठानभूतमिहिरमरीचिव्यतिरेकेण स्वरूपाभावाद्यथा नातिरिक्तौ सत्ताप्रकाशौ तथैवारोपितस्य द्वैतप्रपञ्चस्याधिष्ठानभूतब्रह्मव्यतिरेकेण स्वरूपाभावान्नातिरिक्तौ सत्त्वप्रकाशौ किन्तु सच्चिदात्मन्यध्यस्तान्तःकरणसम्बद्धेन्द्रियप्रणालिकया सच्चिदात्मन एव सत्ताप्रकाशौ जडान् विषयान्[1] व्याप्नुतः।

यदि मन्यसे—विषयाः स्वयमेव सन्तः प्रकाशन्त इति, तदाऽहं जानामीति ज्ञानाश्रयत्वेन विषयाऽनुसन्धातुः स्फुरणमनर्थकं भवेत्। मा भूत् तत्स्फुरणमिति चेत्, सुषुप्ताविव जागृतावपि जगदस्फुरणं स्यात्। तथा सति सर्वव्यवहारलोपः प्रसज्येतेति दुर्निवारं विषममुपस्थितं तव। तस्माज्जगतः स्फुरणमन्याधीनमित्यनिच्छताप्यच्छमतिना त्वयाऽभ्युपगन्तव्यम्। ततश्च यद्यदधीनसत्तास्फूर्त्तिकं तत् तस्मिन् कल्पितं यथा जलाधीनसत्तास्फूर्त्तिकं तरङ्गबुद्बुदादिकं जले परिकल्पितं तथेदं विश्वमपि सच्चिदात्माधीनसत्तास्फूर्तिमत्त्वात् सच्चिदात्मन्येव कल्पितमिति कृतबुद्धयो विदाङ्कुर्वन्तु। तथा च श्रूयते—

न तत्र सूर्यो भाति न चन्द्रतारकं
नेमा विद्युतो भान्ति कुतोऽयमग्निः।
तमेव भान्तमनुभाति सर्वं

१ घटपटादीन्।

तस्य भासा सर्वमिदं विभाति ॥ (कठोप० ५।१५) इति ।

अहमिदं जानामीति स्वगतेन निरपेक्षप्रकाशेन विषयानवभासयन् यः स्वयं भाति तमेव भान्तं प्रकाशमानमनु अनुसृत्य सर्वं सूर्यचन्द्राद्युपलक्षितं सकलं जगत् भाति प्रकाशते न तु स्वत इति श्रुत्यर्थः । तस्माद्यदधीनोऽस्य विश्वस्य प्रकाशः स एक एव नित्यः स्वयंप्रकाशः परमात्मा वरीवर्त्ति । तस्याऽपि प्रकाश्यत्वेऽनवस्था प्रसज्येतेति विभावनीयं विमलाशयैः ।

अथ यदि सत्यं परमात्मवस्तु, द्वैतप्रपञ्चस्तु न वास्तविकस्तर्हि तथैव सर्वे जनाः कुतो न प्रतियन्ति इति चेत् । सहजदोषवशादेवेत्युक्तं मानसोल्लासे विश्वरूपाचार्यैः--

स्वगतेनैव कालिम्ना दर्पणं मलिनं यथा ।
अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः ।। इति ।

यथा दर्पणगतेन कालिम्ना दर्पणस्वभाव आच्छाद्यते तथा स्वगतेनानाद्यनिर्वचनीयेनाज्ञानेन ज्ञानमात्मयाथात्म्यमाच्छाद्यते तेन हेतुना जन्तवो मुह्यन्तीति तदर्थः ।

इदमत्र विवेचनीयम्—आकाशवद्विभुत्वादनवच्छिन्नः स्वयंप्रकाशश्चिदात्मा मूलाज्ञानलक्षणसहजदोषवशात् स्वस्मिन्नुत्थितमहमस्मीत्यहंकारमभेदेन प्रतिपद्यते । अयमेव स्वाभेदेन गृहीतोऽहंकार आत्मचैतन्यखचितो भूत्वा निखिलं प्रपञ्चचमत्कारमवभासयन्नात्मानमानन्दयति तस्मादानन्दमयकोश इति वेदान्तश्रुतिषु कीर्त्यते । ततश्चाहं विजानामीति बुद्धिं विवर्त्तयन् विज्ञानमयं कोशमधितिष्ठति । ततश्चाहं मन्ये इति मननं भावयन् सङ्कल्पविकल्पाद्यात्मकेन मनोमयकोशेनाव्रियते । ततश्चाहं जीवामीति दर्शनश्रवणादीन्द्रियधर्म्मविशिष्टमशनायापिपासाद्युपेतं जीवनमभिमन्यमानः प्राणमयकोशेनाव्रियते । ततः परं मनुष्योऽहमित्याद्यभिमन्यमानो बाल्यतारुण्याद्यनेकधर्म्मवताऽन्नमयकोशेन देहापरनाम्नोपहितो भूत्वा नानाविधान् पुत्रकलत्रधनागारादिरूपान् देहतोऽपि बाह्यान् विषयान् विचरंस्तत्र तत्राभेदेनोपरज्यते । तद्यथा भार्यापुत्रादिषु सकलेषु विकलेषु वा अहमेव सकलो विकलो वेत्यभिमन्यते । एवं मिथ्याज्ञानेन मोहमुपगतो देहाद्यभिन्नमात्मानं गृह्णन् स्वस्य प्रादेशिकत्वमभिमन्यते अहमिहास्मि सदने इति । तदेवमखण्डानन्दे स्वप्रकाशे चिदात्मनि अहं-

कारेण प्रसञ्जितं कर्तृत्वभोक्तृत्वसुखदुःखमोहादिस्वभावं देहाद्युपाधिनिबन्धनं भेदप्रतिभासमपवदितुं जीवात्मपरमात्मनोरभेदं प्रत्याययन्ति 'तत् त्वमसि' ( छा० उ० ६।८।७ ), 'अयमात्मा ब्रह्म' (बृ० उ० ४।४।५) इत्यादिश्रुतिवाक्यानि ।

अथात्र 'तत् त्वमसि' इति वाक्यात् कीदृशोऽर्थोऽवबुध्यते इति विचार्यते—तत्र वाक्यार्थज्ञानस्य पदार्थज्ञानोत्तरभावित्वनियमात् पदार्थजिज्ञासायां सत्यां तच्छब्दस्य पूर्वप्रक्रान्ते परोक्षार्थे शक्तत्वात् सर्वज्ञत्वादिधर्म्मकं जगत्कारणत्वेन प्रक्रान्तं परोक्षमीश्वरचैतन्यं तत्पदस्य वाच्योऽर्थः । अपरोक्षे सम्बोध्यार्थे युष्मच्छब्दस्य शक्तत्वादल्पज्ञत्वादिधर्म्मकं सम्बोध्यत्वेन विवक्षितमपरोक्षं जीवचैतन्यं त्वंपदस्य वाच्योऽर्थः । समानविभक्तिकपदोपस्थितत्वादनयोः पदार्थयोरभेदान्वयेन भाव्यम् । जीवेश्वरयोरभेदस्तु खद्योतदिवाकरयोरिव न सम्भवतीति शक्यार्थबाध उपस्थिते लक्षणावृत्त्या पदार्थं लक्षयित्वा वाक्यार्थो बोद्धव्यः । पदशक्यार्थमादायान्वयानुपपत्तेस्तात्पर्यानुपपत्तेर्वा लक्षणाबीजत्वात् । तत्र गङ्गायां घोष इत्यादौ गङ्गापदशक्यस्य प्रवाहरूपार्थस्य घोषाधिकरणत्वाऽसम्भवादशेषं शक्यार्थं परित्यज्य तत्सम्बद्धं तीरं लक्षयन्ती या जहल्लक्षणा सात्र न सम्भवति , अशेषस्योपाधिविशिष्टचैतन्यरूपशक्यार्थस्य परित्यागे तत्सम्बन्धिनः कस्यापि लक्षणीयार्थस्याप्रसिद्धेः प्रकृतवाक्यस्य शून्यपर्यवसायित्वापत्तेः । न चेष्टापत्तिः । असिपदेन सन्मात्रवाचिना समभिव्याहारविरोधात् । नाप्यजहल्लक्षणात्र सम्भवति । यतः सा शक्यार्थमपरित्यजन्ती सत्येव तत्सम्बद्धमन्यार्थं लक्षयति । यथा 'वायव्यं श्वेतमालभेत भूतिकामः' इत्यादौ गुणवाचिना श्वेतशब्देन स्वशक्यार्थं गुणमपरित्यज्य श्वेतगुणविशिष्टं पशुद्रव्यमालभनक्रियाकर्म्मत्वयोग्यं लक्ष्यते । प्रकृते तु न तथा सम्भवति । चिज्जडातिरिक्तस्य लक्ष्यार्थस्य बन्ध्यासुतसमत्वात् । तस्माज्जहदजहल्लक्षणैवात्र स्वीकर्त्तुमुचिता । सा हि शक्यार्थस्य कञ्चिद्विरुद्धांशं परित्यजन्ती सत्यविरुद्धभागं रूपान्तरेण लक्षयति । इयमेव भागलक्षणेत्युच्यते । यथा गौर्नित्य इत्यादौ शब्दशक्त्युपस्थितायां गोत्वविशिष्टव्यक्तौ नित्यत्वान्वयविरोधाद्विशेष्यांशपरित्यागेन विशेषणभागो गोत्वमेव लक्षणावृत्त्या विशेष्याकारेण लक्ष्यते इति गोत्वं नित्यमिति वाक्यार्थबोधः सम्पद्यते । तथा 'तत् त्वमसी'ति वाक्ये पदशक्त्युपस्थापितयोर्जीवचैतन्ययोरभेदा-

ऽन्वयासम्भवाद्विरुद्धयोर्जीवत्वेश्वरत्वरूपविशेषणांशयोः परित्यागेनाविरुद्धौ चैतन्यरूपविशेष्यभागावेवाखण्डाकारेण लक्ष्येते । ततश्च विगलिताऽखिलविकल्पमखण्डचैतन्यमिति वाक्यार्थबोधः सम्पद्यते ।

ननु यत्र शक्तिजन्योपस्थितिविषये परस्यान्वयो न सम्भवति यथा गङ्गायां घोष इत्यादौ गङ्गापदादुपस्थिते प्रवाहे आभीरपल्लीरूपस्य घोषस्याधेयतयाऽन्वयः । तत्रागत्या तीरोपस्थितये लक्षणाश्रयणीयैव । प्रकृते त्वभेदान्वययोग्यचैतन्योपस्थितिरपि पदशक्त्यैवेति न लक्षणायाः प्रयोजनमस्ति । जीवत्वेश्वरत्वरूपवैशिष्ट्यांशस्य तु विशिष्टयोरभेदान्वयो न सम्भवतीत्यनुपपत्त्या पराहतत्वादनन्वय एवेति तत्परित्यागस्याप्यर्थत एव सिद्धत्वान्न तदर्थमपि लक्षणाश्रयणप्रयासः समुचित इति चेत् । अत्रोच्यते–विशेष्यांशमात्रोपस्थितये लक्षणाश्रयणमावश्यकम् । शक्तिजन्योपस्थितेर्विशेष्यांशविषयत्वेऽपि नासौ विशेष्यांशः शुद्धः किन्तु संसृष्ट एवेति । न च शक्त्युपस्थापितयोः पदार्थयोरभेदान्वये विरुद्धो यः प्रकारांशस्तं परित्यज्याविरुद्धयोर्विशेष्यांशयोरभेदान्वयो बुध्यतामिति वाच्यम् । तथा सति गौर्नित्य इत्यादावपि पराभिमता भागलक्षणा न स्यात् । नित्यत्वान्वयायोग्यस्य व्यक्तिरूपविशेष्यांशस्य परित्यागेन शक्तिजन्योपस्थितिविषये प्रकारीभूतगोत्वांशे नित्यत्वान्वयसम्भवात् । अथ गौर्नित्य इत्यत्र व्यक्तिरूपविशेष्यभागस्य त्यागमात्रेण न निर्वाहो भवति । व्यक्तिविशेषणत्वेनोपस्थितस्य गोत्वस्य नित्यत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वाभावात् । तस्माद्विशेष्यत्वेन गोत्वस्योपस्थितये तत्र युज्यत एव लक्षणाश्रयणम् । प्रकृते तु चैतन्यरूपार्थस्य विशेष्यतयैवोपस्थितत्वाद्विफलो लक्षणाश्रयणप्रयास इति चेत् । मैवम् । अखण्डचैतन्यरूपलक्ष्यार्थस्योपस्थितये लक्षणाया अवश्यापेक्षणीयत्वात् । शक्त्युपस्थितपदार्थानां शाब्दबोधे संसर्गविधया भाननियमाद्विशेष्यतयोपस्थितयोरपि चैतन्यरूपयोस्तत्त्वंपदार्थयोरभेदो भासमानः संसर्गविधयैव भासेत । न चैतदिष्यते । प्रकृतवाक्यादखण्डार्थबोधस्य सिद्धान्ते इष्टत्वात् । अर्थस्याखण्डत्वं नाम प्रकारताविशेष्यतादिविषयताशून्यत्वम् । प्रकृतवाक्यार्थभूतमखण्डं चैतन्यं हि न पराभिमतसंसर्गवत् प्रकारतया विशेष्यतया वा भासते । किन्तु विगलिताशेषविशेषं विशुद्धचैतन्यमेव । अतः शक्तिजन्यां विशेष्यतयोपस्थितिं त्यक्त्वा लक्षणाजन्यां शुद्धवस्तूपस्थितिमूरीकुर्वन्ति वेदान्तिनः । अत एवायं वाक्यार्थबोधो निर्विकल्पः सम्पद्यते ।

शुद्धपदार्थस्यैव वाक्यार्थत्वादिति रहस्यम्। न चैवं वाक्यप्रयोगवैयर्थ्यं स्यादिति वाच्यम्। केनापि निमित्तेनास्तमितनिजयाथात्म्यज्ञानस्य सम्बोध्यस्य स्वयाथात्म्यप्रत्यभिज्ञापनाय त्वंपदघटितवाक्यप्रयोगस्यावश्यकत्वात्। तथाविधवाक्योत्थबोधमन्तरेण भ्रमानिवृत्तेश्च। यदाह वार्त्तिककृत् सुरेश्वराचार्यः—

राजसूनोः स्मृतिप्राप्तौ व्याधभावो निवर्त्तते।
यथैवमात्मनोऽज्ञस्य तत्त्वमस्यादिवाक्यतः॥ इति।

स्यादेतत्। यथाऽग्रमात्रावयवेऽवयवित्वारोपेण प्रयुक्ते अग्रहस्त इतिसमासपदेऽवयवावयविनोः सामानाधिकरण्यम्, यथा वा राजकीयेऽपि सचिवे राजत्वारोपेण प्रयुक्ते राजा त्वमसि इतिवाक्ये स्वस्वामिनोः सामानाधिकरण्यं दृश्यते, तथा प्रकृतेऽपि वाक्ये जीवेश्वरयोरंशांशिभावापन्नयोः स्वस्वामिभावापन्नयोर्वा सामानाधिकरण्यमवगम्यताम्। 'यथाऽग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्ति एवमेवास्मादात्मनः सर्वे आत्मानो व्युच्चरन्ति' (बृ० उ० २।१।२०) इति श्रुतेः, 'ममैवांशो जीवलोके जीवभूतः सनातनः' (भ० गी० १५।७) इति स्मृतेश्च जीवेश्वरयोरंशांशिभावस्य, तथा 'ईशानः सर्वविद्यानामीश्वरः सर्वभूतानाम्' (महाना० उ० १।३।५) इति 'सर्वस्य वशी सर्वस्येशानः' (बृ० उ० ४।४।२२) इत्यादिश्रुतिभ्यो जीवेश्वरयोः स्वस्वामिभावसम्बन्धस्याप्यवबोधनादिति चेत्। नैतत् सारम्। परमात्मन ईश्वरस्य विभुत्वादाकाशस्येवांशायोगात्। जीवात्मन ईश्वरावयवत्वे सावयवत्वमीश्वरस्यापद्येत। तथा सति तस्यान्यपूर्वकत्वनियमात् सृज्यकोटिप्रविष्टत्वेन जगत्कर्तृत्वं व्याहन्येत सर्वज्ञत्वसर्वशक्तित्वाद्ययोगाच्चानीश्वरत्वं प्रसज्येत। किञ्च जीवात्मपरमात्मनोर्भेदघटितः स्वस्वामिभावादिर्न कोपि सम्बन्धो घटते। 'सदेव सौम्येदमग्र आसीत्' (छा० उ० ६।२।१), 'एकमेवाद्वितीयम्' (छा० उ० ६।२।१), 'ऐतदात्म्यमिदं सर्वम्' (छा० उ० ६।८।७) इत्युपक्रमोपसंहारयोः पठितेन श्रुतिकदम्बेन स्फुटमेवानयोरखण्डत्वापरपर्यायं यदद्वितीयत्वं समाम्नातं तदेव प्रत्याययितुं प्रवृत्तानां 'तत् त्वमसि', 'अहं ब्रह्मास्मि,' 'अय—

---

१ केनापि निमित्तेन व्याधकुलसंवर्धितस्य राजसूनोः कालविशेषे राजकुमारस्त्वमसीत्याप्तवाक्याद्व्याधभावो यथा निवर्त्तते तथा तत्त्वमसीत्यादिवाक्यतो जीवात्मनो बुद्धात्मयथार्थरूपस्य जीवभावो निवर्त्तत इत्यर्थः।

मात्मा ब्रह्म' इत्यादिश्रुतिवाक्यानां भेदघटितस्वस्वामिभावादौ लेशतोऽपि तात्पर्याभावात् । 'तत् सृष्ट्वा तदेवानुप्राविशत्' (तै० उ०२।६।१), 'स एष इह प्रविष्ट आनखाग्रेभ्यः' ( बृ० उ० १।४।७ ) इत्याद्यनेकश्रुतिभिः स्रष्टुरीश्वरस्य स्वसृष्टेषु सङ्घातेष्वविकृतस्यैव प्रवेशबोधनात् । यत्तु क्वचिदंशांशिभावादिश्रवणम् , तत्तूपाधिकल्पितभेदमाश्रित्यौपचारिकमेव बोध्यम् । अत एव—

निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम् ।
नित्यं विभुं सर्वगतं सुसूक्ष्मं च तदव्ययम् ॥
( श्वे० उ०६।१९ )

इत्यादिश्रुतयः,

अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च ।
नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः ॥
( भ० गी० २।२४ )

इत्याद्याः स्मृतयश्च सङ्गच्छन्ते । तस्मादौपाधिकत्वेनातात्त्विक एव सर्वोऽपि द्वैतप्रपञ्चः सत्यं परमद्वितीयं ब्रह्मैवेति वेदान्तश्रुतीनां हृदयमिति शिवम् ।

अप्राप्य यस्य महिमानमचिन्त्यपारं
वाचो भवन्ति मनसापि समं निवृत्ताः ।
तं सत्यमौपनिषदं पुरुषं महान्त-
मानन्दकन्दमनिशं शरणं प्रपद्ये ॥

॥ इति ब्रह्ममीमांसामतदर्शनम् ॥

---

सेयमध्यात्मविद्या कलिकालवशात् कृशत्वमापन्नापि श्रीमच्छङ्कराचार्यैर्ब्रह्मसूत्रोपनिषद्भगवद्गीताप्रमुखेषु ब्रह्मविद्याप्रतिपादकग्रन्थेषु भाष्यादीन् प्रसन्नगम्भीरान् महानिबन्धान् विरच्य समुपबृंहिता । तदनु विश्वरूपाचार्यवाचस्पतिमिश्रप्रभृतिभिराचार्यशिष्यप्रशिष्यादिभिर्वार्त्तिकविवरणभामतीप्रमुखानुदारनिबन्धनिचयानाबध्य सुप्रतिष्ठापितेति ज्ञेयम् ।

शङ्कराचार्यप्रादुर्भावस्तु विक्रमार्कसमयादतीते ८४५ पञ्चचत्वारिंशदधिकाष्टशतीमिते संवत्सरे केरळदेशे कालपीग्रामे शिवगुरुशर्मणो भार्यायां समभवत् । तथा च सम्प्रदायविद आहुः—

निधिनागेभवह्न्यब्दे विभवे मासि माधवे।
शुक्ले तिथौ दशम्यां तु शङ्करार्योदयः स्मृतः॥ इति।

निधिनागेभवह्न्यब्दे ३८८९ नवाशीत्युत्तराष्टशत्यधिकत्रिसहस्री-मिते वर्षे इत्यर्थः। कलियुगस्येति शेषः। तथा शङ्करमन्दारसौरभे नीलकण्ठभट्टा अप्येवमेवाहुः—

प्रासूत तिष्यशरदामतियातवत्या-
मेकादशाधिकशतोनचतुःसहस्र्याम्। इत्यादि।

तिष्यशरदां कलियुगवर्षाणामित्यर्थः। किञ्च विक्रमार्कसमयात् ११५० पञ्चाशदधिकैकादशशतीमिते संवत्सरे गुर्जरधराधिपो जयसिंहनामा बभूव। तदानीं श्रीपत्तनेऽधिवसतो देवसूरिनामकजैनाचार्यस्य शिष्यो माणिक्यनामा कश्चित् पण्डित आसीदिति मेरुतुङ्गाचार्यकृतप्रबन्धचिन्तामणिग्रन्थाल्लभ्यते। स च माणिक्यपण्डितः स्वकृतायां काव्यप्रकाशग्रन्थस्य सङ्केताभिधटीकायां द्वितीयोल्लासे लक्षणावृत्तिनिरूपणप्रसङ्गे—"यदाह भट्टकुमारिलः-निरूढा लक्षणाः काश्चित् सामर्थ्यादभिधानवत्" इत्यादिना कुमारिलभट्टाचार्यमतं स्वव्याख्यातार्थे प्रमाणत्वेनोपन्यस्तवान्। चिरकालेन प्रसिद्धिमागतं सर्वमान्यमेव हि मतं प्रमाणत्वेनोपन्यस्यते ग्रन्थकारैः। एवं च कुमारिलभट्टाचार्यकालाद्भूयसा कालपर्ययेण माणिक्यपण्डितो जज्ञे इति गम्यत एव। तेन कुमारिलभट्टाचार्येण सह प्रयागक्षेत्रे शङ्कराचार्याणां समागमः समजनीति शङ्करदिग्विजये प्रसिद्धम्। ततश्च शङ्कराचार्यप्रादुर्भावो यथोक्तकाले समभवदित्यध्यसीयते।

अयं च शिवावतार इत्यानन्दगिरिकृते माधवाचार्यकृते च शङ्करदिग्विजये उक्तम्। तथा च कूर्मपुराणे त्रिंशत्तमेऽध्याये युगवंशानुकीर्त्तने पठ्यते—

कलौ रुद्रो महादेवो लोकानामीश्वरः परः।
करिष्यत्यवतारं स्वं शङ्करो नीललोहितः॥
श्रौतस्मार्त्तप्रतिष्ठार्थं भक्तानां हितकाम्यया।
उपदेक्ष्यति तज्ज्ञानं शिष्याणां ब्रह्मसंमितम्।
सर्ववेदान्तसारं च धर्मान् वेदनिदर्शनान्॥ इति।

एवं षण्णामास्तिकानां दर्शनानि न्यायशास्त्रप्रभृतीनि संगृहीतानि।

---

अथात्र वैष्णवमतानि सङ्गृह्यन्ते।

तत्र नारदपञ्चरात्राद्यागमोक्तप्रकारेण वैष्णवमन्त्रदीक्षासंस्कृता वैष्णवाः। तथा च वैष्णवलक्षणमुक्तं निर्णयसिंधावेकादशीनिर्णयप्रकरणे स्कन्दपुराणे—

परमापदमापन्नो हर्षे वा समुपस्थिते।
नैकादशीं त्यजेद्यस्तु यस्य दीक्षास्ति वैष्णवी॥
विष्णवर्पिताखिलाचारः स हि वैष्णव उच्यते। इति।

त एते वैष्णवाः प्राचीनार्वाचीनभेदेन बहुविधाः सन्ति। तत्राभिनववैष्णवसम्प्रदायप्रवर्त्तका विष्णुस्वामि-रामानुज-मध्व-वल्लभ-प्रभृतयः प्रख्याताः कतिचिदाचार्या बभूवुः। तत्र विष्णुस्वामिसम्मत-सम्प्रदायस्तु प्रवृत्त्युत्तरमचिरेणैव विलुप्तः। ततश्चेदं मतं भूयसा कालेन श्रीवल्लभाचार्यैः समुद्धृत्य पुष्टिमार्गापरनामधेयोऽपूर्वः सम्प्रदायः प्रवर्त्तयाञ्चक्रे।

विष्णुस्वामिन इतिहासो वल्लभाचार्यमार्गीयग्रन्थेषु प्रसिद्धे सम्प्रदायप्रदीपे कथ्यते। यथा दिल्लीनगरे राज्यपदाधिरूढस्य कस्यचिन्महाराजस्य सामन्तो द्रविडदेशीयः कश्चन भूपतिरासीत्। तस्य प्रधानामात्याद्विष्णुस्वामी समजायत। स चाद्वैतसिद्धान्तं खण्डयित्वा साकारसिद्धिलक्षणं वैष्णवसम्प्रदायं प्रवर्त्तयामास। ततस्त्रिदण्डी संन्यासी भूत्वा सिद्धिं गत इति। अयं च शङ्कराचार्यादर्वाचीन इति भाति। यतोऽनेनाद्वितीयनिराकारब्रह्मप्रतिपादकं शङ्करसम्मतवेदान्तसिद्धान्तं प्रतिक्षिप्य साकारब्रह्मप्रतिपादकं स्वमतं प्रवर्त्तितमिति माधवीयसर्वदर्शनसंग्रहाभिधग्रन्थाल्लभ्यते। तत्र हि रसेश्वरमतनिरूपणप्रसङ्गे उक्तं यथा-"विष्णुस्वामिमतानुसारिभिर्नृपञ्चास्यशरीरस्य नित्यत्वोपपादनाय साकारसिद्धौ तैरुक्तम्—

सच्चिन्नित्यनिजाचिन्त्यपूर्णानन्दैकविग्रहम्।
नृपञ्चास्यमहं वन्दे श्रीविष्णुस्वामिसंमतम्॥ इति।

नन्वेतत् सावयवरूपवदवभासमानं नृकण्ठीरवाख्यं सदिति न सङ्गच्छत इति चेत्। मैवम्। सनकादिप्रत्यक्षं 'तमद्भुतं बालकमम्बुजेक्षणम्' इति पुराणप्रसिद्धं 'सहस्रशीर्षा-' इत्यादिश्रुतिसिद्धमित्येवं प्रमाणत्रितयसिद्धं नृपञ्चाननाङ्गं कथमसत् स्यादिति गर्भश्रीकान्तमिश्रैर्विष्णुस्वामिचरणप्रवणान्तःकरणैः प्रतिपादितत्वात्" इति।

अथ रामानुजाचार्यस्य मतमुच्यते ।

अत्र मते चिदचिदीश्वरभेदेन भोक्तृभोग्यनियामकभेदेन वा व्यवस्थितास्त्रयः पदार्थाः सन्ति । तदुक्तम्—

ईश्वरश्चिदचिच्चेति पदार्थत्रितयं हरिः ।
ईश्वरश्चित इत्युक्ता जीवा दृश्यमचित् पुनः ॥ इति ।

तत्र चिच्छब्दवाच्या जीवात्मानः परमात्मनः सकाशाद्भिन्ना नित्या अणुपरिमाणाश्च । तथा च श्रुतयः—'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।' ( ऋ० १।१६४।२० ) इति, 'न जायते म्रियते वा विपश्चित्' ( क० उ०२।१८ ) इति ।

'वालाग्रशतभागस्य शतधाकल्पितस्य च ।
भागो जीव इति प्रोक्तः स चानन्त्याय कल्पते ॥
( श्वे० उ०५।९ ) इति,

'अराग्रमात्रः पुरुषोऽणुरात्मा चेतसा वेदितव्य' इति च ।

अचिच्छब्दवाच्यं दृश्यं जडं जगत् त्रिविधम्—भोग्यभोगोपकरण-भोगायतनभेदात् ।

तस्य जगतः कर्त्तोपादानं चेश्वरः पुरुषोत्तमो वासुदेवादिपद-वेदनीयः । स च परमकारुणिको भक्तवत्सलः स्वोपासकानुगुणतत्त-त्फलप्रदानाय स्वलीलावशादर्चाविभवव्यूहसूक्ष्मान्तर्यामिभेदेन पञ्च-धाऽवतिष्ठते । तत्र पूर्वपूर्वमूर्त्युपासनया पुरुषार्थप्रतिपन्थिदुरितनिच-यक्षये सति उत्तरोत्तरमूर्त्युपासनायामधिकारः सम्पद्यते । तदुक्त-माचार्येण—

वासुदेवः स्वभक्तेषु वात्सल्यात्तत्तदीहितम् ।
अधिकार्यानुगुण्येन प्रयच्छति फलं बहु ॥
तदर्थं लीलया स्वीयाः पञ्चमूर्त्तीः करोति वै ।
प्रतिमादिकमर्चा स्यादवतारास्तु वैभवाः ॥
सङ्कर्षणो वासुदेवः प्रद्युम्नश्चानिरुद्धकः ।
व्यूहश्चतुर्विधो ज्ञेयः सूक्ष्मं सम्पूर्णषड्गुणम् ॥
तदेव वासुदेवाख्यं परं ब्रह्म निगद्यते ।
अन्तर्यामी जीवसंस्थो जीवप्रेरक ईरितः ॥
अर्चोपासनया क्षिप्ते कल्मषेऽधिकृतो भवेत् ।

विभवोपासने पश्चाद् व्यूहोपास्तौ ततः परम् ।
सूक्ष्मे तदनु शक्तः स्यादन्तर्यामिणमीक्षितुम् ॥ इति ।

उपासनं च पञ्चविधम्–अभिगमनमुपादानमिज्या स्वाध्यायो योग इति श्रीपञ्चरात्रेऽभिहितम् । तत्राऽभिगमनं नाम-देवतास्थानमार्गस्य संमार्जनोपलेपनादि । उपादानं गन्धपुष्पादिपूजासाहित्यसम्पादनम् ॥ इज्या नाम–देवतापूजनम् । स्वाध्यायो नामार्थानुसन्धानपूर्वको मन्त्रजपो वैष्णवसूक्तस्तोत्रादिपाठो नामसङ्कीर्त्तनतत्त्वप्रतिपादकशास्त्राभ्यासश्च । योगो नाम देवताऽनुसन्धानम् । एवमुपासनाकर्म्मसमुच्चितेन विज्ञानेन द्रष्टृदर्शने नष्टे भगवद्भक्तस्य भक्तवत्सलः परमकारुणिकः पुरुषोत्तमः स्वयाथात्म्यानुगुणं स्वपदं प्रयच्छति । तथा च स्मृतिः—

मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् ।
नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः ॥
( भ० गी० ८।१५ ) इति ।

स्वभक्तं वासुदेवोऽपि सम्प्राप्यानन्दमक्षयम् ।
पुनरावृत्तिरहितं स्वीयं धाम प्रयच्छति ॥ इति च ।

तदेतत् सर्वं मनसि निधाय ब्रह्मसूत्रवृत्तिं भगवद्बोधायनाचार्यकृतां विस्तीर्णामालक्ष्य महोपनिषन्मतावलम्बनेन ब्रह्मसूत्रभाष्यं रामानुजोऽकार्षीत् । तत्र 'अथातो ब्रह्मजिज्ञासा' इति सूत्रव्याख्यानशेषे उपसंहृतम् । तद्यथा–तस्मात् तापत्रयातुरैरमृतत्वाय पुरुषोत्तमादिपदवेदनीयं ब्रह्म जिज्ञासितव्यमित्युक्तं भवति । अत्र प्रधानत्वादिष्यमाणं ज्ञानमिह विधेयम् । तच्च ध्यानोपासनादिशब्दवाच्यं वेदनमेव । न तु वाक्यजन्यमापातज्ञानम् । पदसन्दर्भश्राविणो व्युत्पन्नस्य विधानमन्तरेणापि प्राप्तत्वात् । तथा च श्रुतिः—

नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन ।
यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा वृणुते तनूं स्वाम् ॥
( क० उ० २।२३ ) । इति ।

स्मृतिरपि—

तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥
( भ० गी० १०।१० ) इति ।

पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया ।

( भ० गी० ११।५४ ) इति च ।

भक्तिस्तु निरतिशयानन्दप्रियानन्यप्रयोजनकसकलेतरवैतृष्ण्यवान् ज्ञानविशेष एव । तत्सिद्धिश्च विवेकादिभ्यो भवति । विवेको नामादुष्टादन्नात् सत्त्वशुद्धिः । अत्र निर्वचनम्—आहारशुद्धेः सत्त्वशुद्धिः, सत्त्वशुद्ध्या विमुक्तिरिति । एतन्मूलक एव रामानुजमतानुसारिभिः पक्के पच्यमाने वान्ने दृष्टिदोषोऽभ्युपेयते । इति । दिङ्मात्रमिह दर्शितम् । विस्तरस्तु तत्सम्प्रदायग्रन्थेभ्योऽवगन्तव्यः ।

॥ इति रामानुजाचार्यंतम् ॥

---

रामानुजाचार्यस्येतिहासः सम्प्रदायप्रदीपे प्रदर्शितो यथा—अस्ति कश्चित् द्रविडदेशे भूतपुरीनामको ग्रामो यः सम्प्रति प्रेमधुलेत्यभिधीयते । तत्र निवसतः केशवाभिधविप्रस्य भार्यायां मतिनामिकायां रामानुजः समजनि । ततः शङ्करमतानुयायिना यादवनाम्ना मातुलेनाध्यापितोऽयं रामानुजोऽभिनववैष्णवसम्प्रदायप्रवर्त्तको बभूव । अयमाचार्यो विष्णुस्वामिशिष्यसन्ताने गृहीतजन्मनो बिल्वमङ्गलस्य पश्चान्मध्वाचार्यस्य च पुरस्तात् समभवदिति ।

अथात्र मध्वाचार्यस्य मतमुच्यते ।

आनन्दतीर्थाभिधः पूर्णप्रज्ञावान्तरनामधेयो मध्वाचार्यः सम्प्रदायान्तरं प्रवर्त्तयाञ्चकार । तन्मते जीवाणुत्वदासत्ववेदापौरुषेयत्वपञ्चरात्रोपजीव्यत्वप्रपञ्चभेदसत्यत्वादि यद्यपि रामानुजमततुल्यमेव, तथापि रामानुजकल्पितस्तत्त्वविभागो न युक्तः परस्परविरुद्धत्वादिति स्थापयित्वा स्वतन्त्रास्वतन्त्रभेदेन तत्त्वद्वैविध्यं व्यवस्थापितम् । यथोक्तं तत्त्वविवेके—

स्वतन्त्रमस्वतन्त्रं च द्विविधं तत्त्वमिष्यते ।
स्वतन्त्रो भगवान् विष्णुर्निर्दोषोऽशेषसद्गुणः । इति ।

ननु सजातीयविजातीयस्वगतभेदशून्यं ब्रह्मैव तत्त्वमिति प्रतिपादकेषु वेदान्तेषु जाग्रत्सु कथमशेषसद्गुणत्वं तस्य कथ्यत इति चेत् । मैवम् । भेदप्रमाणविरोधेन तेषां वेदान्तवाक्यानां तत्र प्रामाण्याऽनुपपत्तेः । प्रत्यक्षं तावत् इदमस्माद्भिन्नमिति नीलपीतादिभेदमध्यक्षयति ।

अत एव गवार्थिनो न गवयदर्शनात् प्रवर्त्तन्ते, न च गोशब्दं स्मरन्ति। अनुमानेनापि भेदोऽवसीयते। परमेश्वरो जीवाद्भिन्नस्तं प्रति सेव्यत्वात्। यो यं प्रति सेव्यः स तस्माद्भिन्नो यथा भृत्याद्राजेति। किञ्च सुखं मे भूयान्न मनागपि दुःखमिति पुरुषार्थमर्थयमानाः पुरुषाः स्थपतिपदं कामयमानाः सन्तो न सत्कारभाजो भवन्ति, किन्तु सर्वानर्थभाजनम्। यस्तु स्वस्य हीनत्वं स्वामिनस्तु गुणोत्कर्षं वर्णयति तस्मै स्तावकाय प्रीतः स्तुत्योऽभीष्टं प्रयच्छति। तदाह—

घातयन्ति हि राजानो राजाहमिति वादिनः।
ददत्यखिलमिष्टं च स्वगुणोत्कर्षवादिनाम्॥ इति।

एवं च परमेश्वराभेदतृष्णया विष्णोर्गुणोत्कर्षस्य मृगतृष्णिकायमानत्वाभिधानं विपुलकदलीलाभेच्छया जिह्वाच्छेदनमनुहरति। एतादृशविष्णुद्वेषिणामन्धतमसप्रवेशः प्रसज्यते। तदेतत् प्रतिपादितं मध्यमन्दिरेण महाभारततात्पर्यनिर्णये—

अनादिद्वेषिणो दैत्या विष्णोर्द्वेषविवर्धिनः।
तमस्यन्धे पातयन्ति दैत्यानन्ते विनिश्चयात्॥ इति।

तस्मात् सेवकैरस्वतन्त्रैर्जीवैः सेव्यस्य भगवतः स्वतन्त्रस्य विष्णोः सेवैव कार्या। सा चाङ्कननामकरणभजनभेदात् त्रिविधा। तत्राङ्कनं नारायणायुधानां चक्रादीनाम्। तच्च तद्रूपस्मरणार्थमपेक्षितार्थसिद्ध्यर्थं च। तथा च शाकल्यसंहितापरिशिष्टम्—

चक्रं बिभर्ति पुरुषोऽभितप्तं बलं देवानाममृतस्य विष्णोः।
स याति नाकं दुरितावधूय विशन्ति यद्यतयो वीतरागाः॥
देवासो येन विधृतेन बाहुना सुदर्शनेन प्रयातास्तमायन्।
येनाङ्किता मनवो लोकसृष्टिं वितन्वन्ति ब्राह्मणास्तद्वहन्ति॥ इति।
अतप्ततनूर्न तदामो अश्नुते श्रितास इद्वहन्तस्तत् समासत॥

इति तैत्तिरीयोपनिषच्च।

नामकरणं च पुत्रादीनां केशवादिनाम्ना व्यवहारः, सर्वदा तन्नामानुस्मरणार्थः। भजनं दशविधम्—तत्र मनसा—दया स्पृहा श्रद्धा चेति त्रिविधम्। वाचा—सत्यं हितं प्रियं स्वाध्यायश्चेति चतुर्विधम्। कायेन—दानं परपरित्राणं देवपूजनं चेति त्रिविधमिति। ततो नापरं कर्त्तव्यमवशिष्यते। प्रसादश्च गुणोत्कर्षज्ञानादेव नाभेदज्ञानादित्यु-

कम्। न च तादात्म्यबोधकस्य 'तत् त्वमसि' इति वाक्यस्य व्याकोप इति वाच्यम्। श्रुतितात्पर्यापरिज्ञानात्। यदाहुः—

आह नित्यपरोक्षं तु तच्छब्दो ह्यविशेषतः।
त्वच्छब्दश्चापरोक्षार्थं तयोरैक्यं कथं भवेत्॥
आदित्यो यूप इति वत् सादृश्यार्था तु सा श्रुतिः।
अतत् त्वमिति वा छेदस्तेनैक्यं सुनिराकृतम्॥ इति।

तथा च परमा श्रुतिः—

जीवस्य परमैक्यं च बुद्धं सारूप्यमेव वा।
एकस्थाननिवेशो वा व्यक्तिस्थानमपेक्ष्य वा॥
न स्वरूपैकता तस्य मुक्तस्यापि विरूपतः।
स्वातन्त्र्यपूर्णतेऽल्पत्वपारतन्त्र्ये विरूपते॥ इति।

अथवा स एवात्मा स्वातन्त्र्यादिगुणोपेतत्वादतत् त्वमसि त्वं तन्न भवसि तद्रहितत्वादित्येकत्वमतिशयेन निराकृतम्। तस्माज्जीवेश्वरयोर्भेद एवेति तत्त्ववादरहस्यम्। तथा च महोपनिषत्—

यथा पक्षी च सूत्रं च नानावृक्षरसा यथा।
यथा चोरापहार्यौ वा यथा पुंविषयावपि॥
तथा जीवेश्वरौ भिन्नौ सर्वदैव विलक्षणौ।
वैलक्षण्यं तयोर्ज्ञात्वा मुच्यते बध्यतेऽन्यथा॥
ब्रह्मा शिवः सुराद्याश्च शरीरक्षरणात् क्षराः।
लक्ष्मीरक्षरदेहत्वादक्षराऽतः परो हरिः॥
स्वातन्त्र्यशक्तिविज्ञानसुखाद्यैरखिलैर्गुणैः।
निःसीमत्वेन ते सर्वे तद्वशाः सर्वदेवताः॥
विष्णुं सर्वगुणैः पूर्णं ज्ञात्वा संसारवर्जितः।
निर्दुःखानन्दभुङ् नित्यं तत्समीपे स मोदते॥ इति।

एतच्च रहस्यं पूर्णप्रज्ञेन वायोस्तृतीयावतारंमन्येन मध्वाचार्येण निरूपितं यथा—

प्रथमस्तु[1] हनूमान् स्यात् द्वितीयो भीम एव च।
पूर्णप्रज्ञस्तृतीयः स्याद्भगवत्कार्यसाधकः॥ इति।

॥ इति मध्वमतसंग्रहः॥

---

१ भगवतः श्रीविष्णोः कार्यसाधको वायोः प्रथमोऽवतारः। पूर्णप्रज्ञो मध्वः।

क्रमशककालस्य त्रयोदशे शतके मध्वाचार्यः समभवत्। गुर्ज-
धेपतेः कुमारपालाभिधस्य राज्ञो राज्यसमये सम्प्रदायप्रदीपकृता
ार्यस्य समुद्भववर्णनात्। विक्रमार्कसमयात् प्रगतेषु ११९९
त्यधिकैकादशशतीमितेषु संवत्सरेषु कार्त्तिकशुक्लदशम्यां कुमार-
र राज्याभिषेको बभूवेति प्रबन्धचिन्तामणिग्रन्थे मेरुतुङ्गाचार्येण
त्वाच्च।

म्प्रदायप्रदीपे मध्वाचार्यसम्प्रदायप्रवृत्तिकथा, यथा—गुर्जरदेशे
हापरनामधेयस्य सिद्धराजस्यानन्तरं कुमारपालाभिधो राजा
द्राभिधेन जैनाचार्येण जैनधर्मं ग्राहितः। ततः स्वीकृतधर्माभि-
स राजा स्वराष्ट्रवर्त्तिनीभिः प्रजाभिर्बलात्कारेण जैनधर्मं
रयामास। अथास्य राज्ञः काचित् प्रियवधूर्वैष्णवसम्प्रदायवर्त्ति-
त्। सा प्रत्यहं कदाचित् समयविशेषे निजभवनवातायनं
ानकटालङ्कृतमासेवमाना घण्टापथे संचरतः शुभ्रपटावगुण्ठित-
यतीन् बकानिवान्तःकुटिलान् बहिरुपदर्शितविनयसौजन्यान्
ोच्य सोद्वेगमिदं पद्यार्द्धं पठति स्म 'किं करोमि क्व गच्छामि को
द्धरिष्यति' इति। अथैकदा गौडदेशीयो वेदप्रबोधनामा कश्चि-
ाराणसीमागतः शुश्राव यथा गुर्जरदेशे जैनानामतीव प्राबल्य-
ति। ततः स भट्टाचार्यः केनचिद्विदुषा मित्रेण सह कुमार-
पते राजधानीमागत्य जैनमुनिवेषेण नगरचर्यावलोकनाय संच-
राजवधूसौधसविधमाजगाम। ततस्तया राजवध्वा पठ्यमानं
रोमि क्व गच्छामि को वेदानुद्धरिष्यति।' इति पद्यार्द्धं श्रुत्वा
रेणोदीरयामास 'मा विषीद वरारोहे भट्टाचार्योऽस्ति भूतले'
एतदाकर्ण्य तया समाहूतस्य भट्टाचार्यस्य सङ्गतं बभूव। ततो-
देव प्रमाणवादयुक्त्यनुभवदृष्टान्तैः स कुमारपालो भट्टाचार्येणो-
पुनर्वैदिकमार्गमनुससार। तस्मिन्नेव काले कश्चिच्छङ्कराचार्य-
ंशीय आचार्यो दक्षिणदेशे गोकर्णक्षेत्रमधिष्ठितो निजान् विद्व-
शिष्यानाज्ञापयामास यथा भवन्तः(?)श्रीमच्छङ्कराचार्यप्रतिष्ठा-
नातनधर्म्मं समर्थयन्तः सर्वासु दिक्षु सञ्चरतेति (?)। एवमाज्ञ-
शिष्याणामन्यतमो मध्वाभिधः पण्डितो निजचेतसि विचारया-
थाहं नव्यं कमपि सम्प्रदायं प्रवर्त्तयिष्यामीति। तादृशो मध्वा-
ुर्वाज्ञाव्यतिक्रमादिभिर्लिङ्गैस्तदानीमेव कैश्चिदुन्नीतः। ततोऽसौ
रं गत्वा वैष्णवसम्प्रदायं रामानुजसम्प्रदायाद्भिन्नं समुद्भावित-

वान्। कालेन सम्प्राप्तप्रतिष्ठो भूत्वा दक्षिणदेशे उडुपीप्रस्थाभिधग्रामे स्वधर्म्मसंस्थानं चक्रे इति।

---

अथात्र वल्लभाचार्यमतं प्रदर्श्यते।

कश्चिदान्ध्रदेशे कांकरवाभिधग्रामे निवसन् कृष्णयजुर्वेदीयापस्तम्बशाखाध्यायी लक्ष्मणभट्टनामा ब्राह्मण आसीत्। स कदाचित् निजपत्न्या सह वाराणसीं प्रतस्थे। तस्य पत्नी एलमागारनाम्नी मार्गे एव विक्रमार्कसमयात् शरवह्निबाणेन्दुमिते १५३५ संवत्सरे वैशाखकृष्णैकादश्यां पुत्रं प्रासूत। ततः प्रोक्तकाले कृतोपनयनोऽयं वल्लभाचार्यो विष्णुस्वामिमतानुसारेण पुष्टिमार्गापरनामधेयं वैष्णवसम्प्रदायं प्रवर्त्तयामास।

अत्र मते जीवानामणुत्वं सेवकत्वं च प्रपञ्चभेदसत्यत्वमित्यादयः सिद्धान्ताः प्रायेण मध्वमततुल्या एव। परन्त्वेतावान् विशेषः। वैकुण्ठाधीश्वरो विष्णुर्मुमुक्षुभिः सेव्य इति माध्वाः सङ्गिरन्ते, गोलोकाधीश्वरः पुरुषोत्तमः श्रीकृष्ण एव सेव्य इति तु वल्लभीयाः। तथा चोक्तं सिद्धान्तमुक्तावल्यां श्रीवल्लभाचार्येण—'आत्मानन्दसमुद्रस्थं कृष्णमेव विचिन्तयेत्' इति। व्याख्यातं चेदं गोस्वामिना श्रीविट्ठलेश्वरेण 'कृष्णपदात् पुष्टिमार्गीयभक्तप्रकटितनिरवध्यानन्देषु विहरन्तमित्यर्थः। ते तु व्रजरत्नात्मका इति मन्मतिः। स आनन्दो भगवत्स्वरूपात्मकस्तद्वत्त एव। अतोऽत्रात्मपदं भगवत्परम्' इति।

अङ्कनादिभेदेन त्रिविधा सेवेति माध्वाः। फलरूपा साधनरूपा चेत्येवं द्विविधा सेवेति वल्लभीयाः। तत्र मानसी श्रीकृष्णैकप्रवणतारूपा सेवा फलरूपा। शरीरेण धनादिना वा निर्वर्त्यमाना सेवा साधनरूपेत्याहुः। वैकुण्ठलोकावाप्तिर्मुक्तिरिति माध्वाः। गोलोके परमानन्दसन्दोहे वृन्दावने भगवदनुग्रहेण गोपीभावमवाप्य स्वसेव्यस्य श्रीपुरुषोत्तमस्याखण्डरासोत्सवे निर्भररसावेशेन सेवैव मुक्तिरिति वल्लभीयाः। तथा चोक्तं पुष्टिप्रवाहमर्यादानामकग्रन्थे श्रीवल्लभाचार्येण—

तस्माज्जीवाः पुष्टिमार्गे भिन्ना एव न संशयः।
भगवद्रूपसेवार्थं तत्सृष्टिर्नान्यथा भवेत्॥
स्वरूपेणावतारेण लिङ्गेन च गुणेन च।

तारतम्यं न स्वरूपे देहे वा तत्क्रियासु वा ॥
तथापि यावता कार्यं तावत्तस्य करोति हि ॥ इति।

विवृतं चैतत् कल्याणरायेण—'यस्मात् सर्वोत्कृष्टास्तस्माच्छुद्धपुष्टिमार्गीया जीवास्तेभ्योऽन्यजीवेभ्यो भिन्ना एवेत्यर्थः। विपक्षे बाधकमाहुः—भगवदिति। यदि भक्तिमार्गीयाः सर्वोत्कृष्टा न स्युस्तदा साक्षात् पुरुषोत्तमस्वरूपसेवार्थं तत्सृष्टिर्न भवेदिति। भगवतो लीलान्तःपातिनां भक्तानां च स्वरूपादिभिस्तुल्यत्वं न तूत्कर्षापकर्षाविति स्वरूपेणेत्यादिश्लोकस्यार्थः। तथापीति। स्वरूपादेस्तुल्यत्वेऽपि भगवान् स्वस्य कार्यं रमणं स्वभक्तानां च यावता तारतम्येन सिध्यति तावत्तारतम्यं प्रकटयति। हि युक्तोऽयमर्थः। उत्कर्षापकर्षवैचित्र्यैर्विना सम्यग्रमणासिद्धेः। अत एव बाललीलादयो युक्तरूपा भवन्ती' ति। किञ्च वल्लभीया वस्तुतो द्वैतं प्रतिपद्यमाना अपि स्वसिद्धान्ते शुद्धाद्वैतं प्रतिपाद्यं वदन्ति—शुद्धावेव जीवात्मपरमात्मानौ। यत्तु पराभिमतं तयोर्मायाद्युपाधिवैशिष्ट्यं तत् सर्वथा नास्त्येव। तस्माद्वह्निविस्फुलिङ्गयोरिव शुद्धयोरेव जीवात्मपरमात्मनोरैक्यमित्यादिरीत्या शुद्धाद्वैतमततात्पर्यं वर्णयन्तीति दिक्।

---

अथात्र माहेश्वरमतानि सङ्गृह्यन्ते।

तत्र वैष्णवमतं दासत्वादिपदवेदनीयं पारतन्त्र्यदुःखावहत्वान्नेप्सितास्पदमित्यरोचयमानाः पारमैश्वर्यं कामयमानाः पाशुपता मन्यन्ते—पराभिमता मुक्ता न भवन्ति परतन्त्रत्वादस्मदादिवत्। मुक्तात्मानश्च परमेश्वरगुणसम्बन्धिनः पुरुषत्वे सति समस्तदुःखबीजविधुरत्वात् परमेश्वरवदित्यनुमानं प्रमाणं प्रतिपद्यमानाः परमपुरुषार्थसाधनं पञ्चार्थप्रपञ्चनपरं पाशुपतशास्त्रमाश्रयन्ते। तस्येदमादिमं सूत्रम्—'अथातः पशुपतेः पाशुपतयोगविधिं व्याख्यास्यामः' इति। अथशब्दः पूर्वप्रकृतापेक्षः। पूर्वप्रकृतश्च गुरुं प्रति शिष्यस्य प्रश्नः। गुरुस्वरूपं च गणकारिकायामुक्तम्—

पञ्चकास्त्वष्ट विज्ञेया गणश्चैकस्त्रिकात्मकः।
वेत्ता नवगणस्यास्य संस्कर्त्ता गुरुरुच्यते ॥ इति।

लाभपञ्चकं मलपञ्चकमुपायपञ्चकं देशपञ्चकमवस्थापञ्चकं शुद्धि-

पञ्चकं दीक्षाकारिपञ्चकं बलपञ्चकं चेत्यष्टौ पञ्चकानि। पञ्चमललघूकरणार्थं मानापमानविरोधिनो येऽर्जनोपाया भैक्ष्योत्सृष्टयथालब्धास्त्रयो वृत्तिपदव्यपदेश्यास्तेषामेको गणस्त्रिकात्मको गण इत्येवं गणनवकस्य ज्ञानवान् गुरुरित्यर्थः।

तत्र लाभो नाम विधीयमानमुपायफलम्। तत् पञ्चविधम्। यदाह हरदत्ताचार्यः—'ज्ञानं तपोऽथ नित्यत्वं स्थितिः शुद्धिश्च पञ्चमम्।' इति।

आत्माश्रितो दुष्टभावो मलः। सोऽपि पञ्चधा, यदाह—

मिथ्याज्ञानमधर्मश्च सक्तिर्हेतुश्च्युतिस्तथा।
पशुत्वमूलं पञ्चैते तन्त्रे हेया विवेकतः॥ इति।

साधकस्य सिद्धिहेतुरुपायः। स पञ्चविधः—

वासचर्या जपो ध्यानं सदा रुद्रस्मृतिस्तथा।
प्रतिपत्तिश्च लाभानामुपायाः पञ्च निश्चिताः॥ इति।

येनार्थानुसन्धानपूर्वकं ज्ञानतपश्चर्यादिकं वृद्धिं प्राप्नोति स देशः।

यदाह—

गुरुर्जनो गुहा देशः श्मशानं रुद्र एव च। इति।

वासचर्याजपादीनां पञ्चानामुपायानामेकैकस्मिन् आलाभप्राप्तेर्यद्वस्थानं साऽवस्था। सापि वासचर्यादिविषयभेदात् पञ्चधा।

मिथ्याज्ञानादीनां पञ्चानां मलानामत्यन्तव्यपोहो विशुद्धिः। सापि व्यपोहनीयानां मलानां भेदात् पञ्चधा भिद्यते।

दीक्षाकारिपञ्चकं चोक्तम्—

'द्रव्यं कालः क्रिया मूर्तिर्गुरुश्चैव हि पञ्चमः' इति।

बलपञ्चकं चोक्तम्—

गुरुभक्तिः प्रसादश्च मतेर्द्वन्द्वजयस्तथा।
धर्मश्चैवाप्रमादश्च बलं पञ्चविधं स्मृतम्॥ इति।

सर्वमिदं पञ्चार्थप्रपञ्चनं तच्छास्त्रीयाकरग्रन्थतोऽवगन्तव्यम्।

प्रकृतसूत्रे अथशब्देन दुःखान्तस्य प्रतिपादनम्। आध्यात्मिकादिदुःखव्यपोहप्रश्नार्थत्वात् तस्य। पशुशब्देन कार्यवर्गस्य। परतन्त्रवचनत्वात् तस्य। पतिशब्देन कारणस्य। 'ईश्वरः पतिरीशिता' इति जगत्कारणत्वात् तस्य।

तत्र दुःखान्तो द्विविधः—सात्मकोऽनात्मकश्च। तत्रानात्मकः

सर्वदुःखानामत्यन्तोच्छेदः । सात्मकस्तु दृक्शक्तिक्रियाशक्तिलक्षण-मैश्वर्यम् ।

यदस्वतन्त्रं तत् सर्वं कार्यजातं त्रिविधम्-विद्या-कला-पशुभेदात् । विद्या द्विविधा-बोधस्वभावा चाबोधस्वभावा च । चेतनपरतन्त्रत्वे सत्यचेतना कला । सापि द्विविधा-कार्याख्या कारणाख्या च । तत्र पृथिव्यादीनि पञ्च तत्त्वानि, रूपादयः पञ्च गुणाश्चेति दशधा कार्याख्या । कारणाख्या तु त्रयोदशधा-ज्ञानेन्द्रियपञ्चकं कर्मेन्द्रियपञ्चकमध्यवसायोऽभिमानः संकल्पश्चेति वृत्तित्रयम् ।

पशुर्द्विविधः-साञ्जनो निरञ्जनश्च । तत्र शरीरेन्द्रियसम्बन्धवानाद्यः । तद्रहितो द्वितीयः । तत्प्रपञ्चस्तु पञ्चार्थभाष्यदीपिकादौ द्रष्टव्यः ।

समस्तसृष्टिसंहारानुग्रहकारि कारणम् । स चैकः परमेश्वर एव पतिप्रतिशब्दवेदनीयः ।

चित्तद्वारेणात्मेश्वरसम्बन्धो योगः । स द्विविधः-क्रियालक्षणः क्रियोपरमलक्षणश्चेति भेदात् । तत्र जपध्यानादिरूप आद्यः । संविद्गत्यादिरूपस्तु द्वितीयः ।

धर्म्मार्थसाधको व्यापारो विधिः । सोऽपि द्विविधः प्रधानभूतो गुणभूतश्च । प्रधानभूतः साक्षाद्धर्म्महेतुश्चर्या । सापि द्विविधा-व्रतं द्वाराणि च । व्रतं चोक्तं भगवता नकुलीशेन-'भस्मना त्रिषवणं स्नायीत भस्मनि शयीत' इति । तथा षडङ्गनियमोऽपि व्रतम् । तदुक्तं सूत्रकारेण-'हसित-गीत-नृत्य-डुड्डुकार-नमस्कार-जप्येतिषडङ्गोपहारेणोपतिष्ठेत' इति । द्वाराणि तु क्राथनस्पन्दनादीनि । तत्रासुप्तस्यैव सुप्तलिङ्गवद्दर्शनं क्राथनम् । वाताभिभूतस्येव शरीरावयवानां कम्पनं स्पन्दनम् । गुणभूतस्तु विधिश्चर्याऽनुग्राहकोऽनुसन्ध्यं स्नाननिर्माल्यलिङ्गधारणादिः । एतेषां यथायथं सविस्तरं व्याख्यानं तद्ग्रन्थेभ्योऽवगन्तव्यम् ।

अत्रेदमवधेयम्-तन्त्रान्तरे दुःखनिवृत्तिरेव दुःखान्तः । इह तु पारमैश्वर्यप्राप्तिरपि । अन्यत्र अभूत्वा भावि कार्यम् । इह तु पश्वादि । अन्यत्रान्यसापेक्षं कारणम् । इह तु निरपेक्षो महेश्वर एव । अन्यत्र कैवल्यादिफलको योगः । इह तु पारमैश्वर्यदुःखान्तफलकः । ननु यन्निरपेक्षो महेश्वरः कारणमिति महदेतदिन्द्रजालम् । तथा सति कर्म्मवैफल्यं सर्वकार्याणां समसमयसमुत्पादश्चेति चेत् ? मैवम्, व्यधिकरणत्वात् । कर्म्मवैफल्ये किमायातम् । प्रयोजनाभाव इति चेत्,

कस्य सः ? किं कर्म्मिणः किं वा महेश्वरस्य । नाद्यः, ईश्वरेच्छानुगृहीतस्यैव कर्म्मणः सफलत्वनियमात् । न चैवं कर्म्मस्वप्रवृत्तिः, पशूनां प्रवृत्तेरीश्वरेच्छाधीनत्वात् । नापि द्वितीयः । महेश्वरस्यावाप्तकामत्वेन कर्म्मसाध्यप्रयोजनापेक्षाया अभावात् । यदुक्तं समसमयसमुत्पाद इति; तदप्ययुक्तम् । अचिन्त्यशक्तेर्म्महेश्वरस्येच्छानुविधायिन्या अव्याहतक्रियाशक्तेः कार्यकारित्वाभ्युपगमादिति सर्वं सुस्थम् । तस्मात् पुरुषार्थकामैः पुरुषधौरेयैर्दुःखान्तः पशुः पतिर्योगो विधिश्चेतिपञ्चार्थप्रतिपादनपरं पाशुपतशास्त्रमाश्रयणीयमिति वदन्तीति दिक् ।

॥ इति पाशुपतमतदर्शनम् ॥

---

केचन माहेश्वराः पूर्वोपपादितं कर्म्मादिनिरपेक्षः परमेश्वरः कारणम् इति पक्षं वैषम्यनैर्घृण्यदोषदूषितत्वात् प्रतिक्षिपन्तः, शैवागमसिद्धान्ततत्त्वं यथावदीक्षमाणाः कर्म्मादिसापेक्षः परमेश्वरः कारणम् इति मतमास्थिषत । अयं हि तेषां मतसङ्ग्रहः ।

त्रिपदार्थं चतुष्पादं महातन्त्रं जगद्गुरुः ।
सूत्रेणैकेन सङ्क्षिप्य प्राह विस्तरतः पुनः ॥ इति ।

अस्यार्थः—पति–पशु–पाशरूपास्त्रयः पदार्था यत्रेति त्रिपदार्थम् । विद्यापादः क्रियापादो योगपादश्चर्यापादश्चेति चत्वारः पादा यत्रेति चतुष्पादम् । स्पष्टमवशिष्टम् ।

अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः ।
ईश्वरप्रेरितो गच्छेत् स्वर्गं वा श्वभ्रमेव वा ॥

इति न्यायात् स्वक्ष्यमाणप्राणिकर्म्मापेक्षया जगत्कर्त्तास्ति परमेश्वरः । न च स्वतन्त्रताभङ्गः, करणादिसापेक्षस्य कर्त्तुः स्वातन्त्र्यहानेरनुपलम्भात् । नहि कोषाध्यक्षापेक्षो राजा प्रसाददानादावस्वतन्त्र इति गीयते । यथोक्तं सिद्धगुरुभिः—

स्वतन्त्रस्याप्रयोज्यत्वं करणादिप्रयोक्तृता ।
कर्त्तुः स्वातन्त्र्यमेतद्धि न कर्म्माद्यनपेक्षता ॥ इति ॥

ननु शरीरवता कुलालादिना घटादिकार्यस्य क्रियमाणत्वदर्शनात् जगत्कर्त्तापि परमेश्वरः शरीरी स्यात् । तथासत्यस्मदादिवत् क्लेशवानसर्वज्ञः परिमितशक्तिमांश्च स्यादिति चेत् ? मैवम्, प्राकृतशरीरवत

एव क्लेशवत्त्वादिनियमात्। परमेश्वरस्य मलकर्म्मादिपाशजालासम्भवेनास्मदादिवत् प्राकृतशरीराभावात्। ईशानादिमन्त्रकल्पिताभिः पञ्चभिः शक्तिभिस्तस्य शाक्तशरीरवत्त्वेन श्रुतत्वाच्च। तथा चोक्तं श्रीमृगेन्द्रेण—

सर्वज्ञः सर्वकर्तृत्वात् साधनाङ्गफलैः सह।
यो यज्जानाति कुरुते स तदेवेति सुस्थितम्॥
मलाद्यसम्भवाच्छाक्तं वपुर्नैतादृशं प्रभोः।
तद्वपुः पञ्चभिर्मन्त्रैः पञ्चकृत्योपयोगिभिः॥
ईशतत्पुरुषाघोरवामाद्यैर्मस्तकादिमत्॥ इति।

'ईशानः सर्वविद्यानाम्' इत्यादि मन्त्रपञ्चकं शतरुद्रीये प्रसिद्धम्। कृत्यपञ्चकं च प्रपञ्चितं भोजराजेन—

पञ्चविधं तत्कृत्यं सृष्टिस्थितिसंहारतिरोभावाः।
तद्वदनुग्रहकरणं प्रोक्तं सततोदितस्यास्य॥ इति।

ननु 'पञ्चवक्त्रस्त्रिपञ्चदृग्' इत्यादिना आगमेषु मुख्यत एव परमेश्वरस्य शरीरयोगः श्रूयते इति चेत्? सत्यम्। निराकारे ध्यानपूजाद्यसम्भवेन भक्तानुग्रहार्थं तत्तदाकारग्रहणाविरोधात्। तदुक्तम्—'आकारवांस्त्वं नियमादुपास्यो न वस्त्वनाकारमुपैति बुद्धिः।' इति। तदित्थं पतिपदार्थो निरूपितः।

पशुपदार्थ उक्तः सोमशम्भुना—

विज्ञानाकलनामैको द्वितीयः प्रलयाकलः।
तृतीयः सकलः शास्त्रेऽनुग्राह्यास्त्रिविधा मताः॥
तत्राद्यो मलमात्रेण युक्तोऽन्यो मलकर्म्मभिः।
कलादिभूमिपर्यन्ततत्त्वैस्तु सकलो मतः॥

तथा च पशुस्त्रिविधः। विज्ञानाकलः प्रलयाकलः सकलश्चेति भेदात्। तत्र कला नाम मायाबन्धो यस्य नास्ति सोऽकलः। विज्ञानेनाकलो विज्ञानाकल इति व्युत्पत्त्या प्रथमो विज्ञानयोगसंन्यासैर्भोगेन च कर्म्मक्षये सति मायाबन्धस्याभावात् केवलवक्ष्यमाणमलमात्रयुक्तो विज्ञानाकल इति व्यपदिश्यते। द्वितीयस्तु प्रलयेन कलादेरुपसंहारान्मलकर्म्मयुक्तः प्रलयाकल इति व्यपदिश्यते। अयमेव सृष्टिसमये मलमायाकर्म्मात्मकबन्धत्रययुक्तो भूत्वा तृतीयः सकलपदव्यपदेश्यो भवति। सोऽयं पशुपदार्थो निरूपितः।

अथ पाशश्चतुर्विधः। मल-कर्म्म-माया-रोधशक्तिभेदात्। तत्र स्वाभाविकी अशुचिता मलः। अनेन हि पुरुषस्याशिवत्वं भवति। तथा चोक्तम्—

एकोऽप्यनेकशक्तिर्दृक्क्रिययोश्छेदको मलः पुंसः।
तण्डुलतुषवत् ज्ञेयस्ताम्राश्रितकालिकावद्वा॥ इति।

यत् फलार्थिभिः क्रियते तत् कर्म्म। तच्च धर्म्माधर्म्मात्मकं द्विविधमप्यनादि। मात्यस्यां प्रलये शक्तिरूपेण सर्वं जगत्, सृष्टौ तु व्यक्तिं यातीति माया। रोधशक्तिः स्फुटार्था।

तदित्थं पदार्थत्रितयं संक्षिप्योक्तं शैवागमसारे—

शैवागमेषु मुख्यं पतिपशुपाशा इति क्रमात् त्रितयम्।
तत्र पतिः शिव उक्तः पशवो ह्यणवोऽर्थपञ्चकं पाशाः॥ इति।

अणवो जीवाः। अर्थपञ्चकं शब्दादिविषयपञ्चकम्। तच्चोक्तचतुर्विधपाशोपलक्षकमिति दिक्।

॥ इति शैवमतदर्शनम्॥

---

अपरे माहेश्वरा मतान्तरमन्विष्यन्तः परमेश्वरेच्छावशादेव जगन्निर्माणं परिघुष्यन्तः स्वसंवेदनोपपत्त्याऽऽगमसिद्धप्रत्यगात्मतादात्म्ये सति नानाविधमानमेयादिभेदाभेदशाली परमेश्वरोऽनन्यमुखप्रेक्षित्वरूपस्वातन्त्र्यभाक् स्वात्मदर्पणे भावान् प्रतिबिम्बवदवभासयतीति भणन्तो बाह्याभ्यन्तरपरिचर्याप्राणायामादिक्लेशवैधुर्येण सर्वसुलभमभिनवं प्रत्यभिज्ञामात्रं परापरसिद्ध्युपायमभ्युपगच्छन्तः प्रत्यभिज्ञाशास्त्रमभ्यस्यन्ति। तस्येदं श्लोकात्मकमादिमं सूत्रम्—

कथंचिदासाद्य महेश्वरः स्यादास्यं जनस्याप्युपकारमिच्छन्।
समस्तसंपत्समवाप्तिहेतुं तत्प्रत्यभिज्ञामुपपादयामि॥ इति।

कथंचिदिति महेश्वराभिन्नगुरुचरणारविन्दसमाराधनेन परमेश्वरघटितेनैवेत्यर्थः। ननु कोऽसौ परमेश्वरो यदभेदो गुरावुपदिश्यत इति चेत्। उच्यते सोमानन्दनाथैः—

निरुपादानसम्भारमभित्तावेव तन्वते।
जगच्चित्रं नमस्तस्मै कलाश्लाघ्याय शूलिने॥ इति।

तथा। एकवारं प्रणामेन शास्त्राद्वा गुरुवाक्यतः।
ज्ञाते शिवत्वे सर्वस्थे प्रतिपत्त्या दृढात्मना॥
करणेन नास्ति कृत्यं क्वापि भावनया सकृत्।
ज्ञाते सुवर्णे करणं भावानां च परित्यजेत्॥ इति।

ननु प्रत्यगात्मनः परमेश्वराभिन्नत्वे कथं तस्य संसारबन्ध इति चेत्। अत्रोच्यते तैरेव—

एष प्रमाता मायान्धः संसारी कर्म्मबन्धनः।
विद्यादिज्ञापितैश्वर्यश्चिद्घनो मुक्त उच्यते॥ इति।

विद्या च 'सदा शिवात्मना वेत्ति सदा वेत्ति मदात्मना' इत्यादिप्रकारा प्रत्यभिज्ञा सोमानन्दनाथपादैरुपदिष्टा। अभिनवगुप्तादिभिराचार्यैः कृतप्रतानोऽप्ययं सिद्धान्तः संक्षेपतः संग्रहमुपक्रममाणैरस्माभिरुपेक्ष्यते।

॥ इति प्रत्यभिज्ञामतदर्शनम्॥

---

अपरे माहेश्वराः परमेश्वरतादात्म्यवादिनोऽपि पिण्डस्थैर्ये सर्वाभिमता जीवन्मुक्तिः सेत्स्यति इत्यास्थाय पारदपदवाच्यं रसमेव संगिरन्ते। तथा चोक्तं तैः 'संसारस्य परं पारं दत्तेऽसौ पारदः स्मृतः' इति। रसार्णवेऽप्युक्तम्—

षड्दर्शनेपि मुक्तिर्या दर्शिता पिण्डपातने॥
करामलकवत् सा हि प्रत्यक्षा नोपलभ्यते॥
तस्मात् तं रक्षयेत् पिण्डं रसैश्चैव रसायनैः। इति।

ननु विनश्वरतया दृष्टस्य देहस्य कथं नित्यत्वमवसीयत इति चेत्। मैवं मंस्थाः। षाट्कौशिकस्य शरीरस्यानित्यत्वेपि रसाभ्रकपदाभिलप्यमानहरगौरीसृष्टिजातस्य तस्य नित्यत्वोपपत्तेः।

तथा चोक्तं रसहृदये—

ये चात्यक्तशरीरा हरगौरीसृष्टिजान्तरं प्राप्ताः।
वन्द्यास्ते रससिद्धा मन्त्रगणः किङ्करो येषाम्॥ इति।

तस्माज्जीवनमुक्तिं समीहमानेन योगिना प्रथमं दिव्यतनुर्विधेया। तत्रोपायश्चोक्तो गौरीं प्रति शिवेन—

अभ्रकस्तव बीजं तु मम बीजं तु पारदः।
अनयोर्मेलनं देवि मृत्युदारिद्र्यनाशनम्॥ इति।

अन्यच्च—

आयतनं विद्यानां मूलं धर्म्मार्थकाममोक्षाणाम्।
श्रेयः परं किमन्यच्छरीरमजरामरं विहायैकम्॥
एकोऽसौ रसराजः शरीरमजरामरं कुरुते॥ इति।

रसमाहात्म्यमुक्तं रसार्णवे—

दर्शनात् स्पर्शनात् तस्य भक्षणात् स्मरणादपि।
पूजनाद्रसदानाच्च दृश्यते षड्विधं फलम्॥ इति।

न चेदमदृष्टचरमिति मन्तव्यम्, विष्णुस्वामिमतानुसारिभिर्नृपञ्चास्यशरीरस्य नित्यत्वोपपादनात्। अतोऽस्मदिष्टं देहनित्यत्वमत्यन्तादृष्टं न भवतीत्यफलं प्रपञ्चेन।

॥ इति रसेश्वरमतदर्शनम्॥

---

इदमत्रावधेयम्। एवमादयो बहवो माहेश्वराः सम्बभूवुः। तेषां केचिन्माहेश्वराः शङ्कराचार्यात् पुरातनाः सन्ति, आनन्दगिरिकृते शंकरदिग्विजये शैवपाशुपतमतस्योपन्यस्तत्वात्। नन्वेवं सति वैष्णवमतमरोचयमानाः पाशुपता इति पूर्वोक्तं विरुध्येतेति चेत्। नायं विरोधः, विष्णुपुराणपञ्चरात्रादिसिद्धं वैष्णवमतं दासत्वादिपदवेदनीयं पाशुपता न रोचयन्ते इत्यर्थस्य तत्र विवक्षणादिति।

---

अथ कश्चिदयोध्याप्रान्ताभिजनः सहजानन्दनामा प्राकृतयतिः सौराष्ट्रगुर्जरादिदेशानागत्य तत्तद्देशनिवासिभिर्बहुभिः प्राकृतजनैर्वर्त्तमानधर्मनामकं स्वोत्प्रेक्षितं मार्गं ग्राहयित्वा स्वामिनारायणपथाह्वयं स्वीयसम्प्रदायं प्रवर्त्तयामास। अयं सम्प्रदायो विक्रमार्कशककालस्य त्रिंशदधिकेऽष्टादशे शतके १८३० प्रववृते। एतत्पथानुयायिनः केचिदभिज्ञाः सम्प्रति स्वसम्प्रदायस्य नामान्तरमुद्धवसम्प्रदाय इति व्यपदिशन्ति।

एवं बहवः सम्प्रदायमार्गा यद्यपि क्वचित् क्वचित् प्रादुर्भवन्त उपलभ्यन्ते, तथापि न ते प्रौढविचारपरिष्कृता इत्युपेक्ष्यन्ते इति बोध्यम्।

॥ इतिभट्टयज्ञेश्वरोन्नीते आर्यविद्यासुधाकरे चतुर्थः प्रकाशः॥

---

# पञ्चमः प्रकाशः

चतुर्भिः सज्जनानन्दकरैरार्यसुधाकरे ।
स्थितैः प्रकाशैर्यद्वेद्यं तदिदानीं निरूप्यते ॥

तत्र तावत् समनुक्रान्तैस्त्रिभिः प्रकाशैः प्रवृत्तलक्षणधर्मस्य श्रौत-स्मार्त्तभेदेन द्विविधस्यापि वेदमूलकत्वेन सप्रमाणस्य स्वरूपमुपदर्शितम् । चतुर्थप्रकाशे तु योगशास्त्रब्रह्ममीमांसामतदर्शनेन निवृत्तलक्षण-धर्म्मस्य ज्ञानमार्गापरनामधेयस्य स्वरूपं प्रदर्शितम् । एवं च वेदेन तन्मूलकधर्म्मशास्त्रेण वोपदिष्ट एव धर्म्मः श्रेयस्कामैर्द्विजैरनुष्ठेय इति स्थितम् । नन्वेवमपि पाखण्डिभिश्चार्वाकबौद्धादिभिरुपदिष्टान् वेदबाह्य-मार्गान् भूयांस आर्यजना अनुसंचेरुः । किं चार्वाचीनैः शैवशाक्तवैष्णवापसदैः स्वोत्प्रेक्षितमताभिनिवेशात् स्वानभिमतार्थबोधकपुराणादिवाक्यान्यनार्षत्वासुरत्वादिकल्पनाभिर्दूषयित्वा प्रायः श्रौताध्वनोऽपि विध्वंसाय प्रवर्त्तितान्नानाविधसम्प्रदायाभासानप्यार्यजना अनुतस्थुः । कोऽत्र हेतुरिति चेत् । कलिकाल एवात्र कारणमिति प्रतीमः । यतः कलिकालवशात् प्रणष्टयथार्थज्ञानदृष्टयोऽमी जना अन्धा इव येन केनाप्युपदिष्टेन कुपथेनानुसञ्चरन्ति । नहि ते स्वयं सत्पथमवगन्तुमीशते । तथा चोक्तं विष्णुपुराणे 'वर्णाश्रमाचारवती प्रवृत्तिर्न कलौ युगे' इति । तथा मनुरपि स्मृतवान्—

चतुष्पात् सकलो धर्म्मः सत्यं चैव कृते युगे ।
नाधर्म्मेणागमः कश्चिन्मनुष्यान् प्रति वर्त्तते ॥
इतरेष्वागमाद्धर्म्मः पादशस्त्ववरोपितः ।
चौरिकानृतमायाभिर्धर्म्मश्चापैति पादशः ॥

(मनु० १।८१-८२) इति ।

अत्र सत्ययुगेतरैस्त्रेतादियुगैः सह चौर्यानृतच्छद्मनां न यथासंख्यम् । सर्वत्र सर्वेषां दर्शनात् । एवं च पूर्वपूर्वयुगापेक्षयोत्तरोत्तरयुगेषु चौर्यानृतच्छद्मोपलक्षितेनाधर्म्मेणाभिभूतः पादपादहान्या प्रचरितो धर्म्मः

१ अधर्मेण धर्मशास्त्रातिक्रमेण कश्चित् कोऽपि आगमः धनविद्याद्युपार्जनलक्षणः ।

कलियुगे चतुर्थांशरूपेणावशिष्टोऽपि कालेनाधर्मभूयिष्ठेन लोपमापत्स्यत इति बोध्यम्।

ननु—

तपः परं कृतयुगे त्रेतायां ज्ञानमुच्यते।
द्वापरे यज्ञमेवाहुर्दानमेकं कलौ युगे॥
(मनु० १।८६)

इति मनुवचनेन कलौ केवलं दानधर्म्म एवानुष्ठेय इति लभ्यते। किञ्च कलियुगीयधर्म्मख्यापनार्थं प्रवृत्तेन पराशरस्मृतिग्रन्थेन तु यथायथं सकलो वर्णाश्रमधर्म्मोऽनुष्ठेय एवेति प्रतिपाद्यते। तथा च परस्परमनयोर्विरोध इति चेत्। न। 'एकोऽन्यार्थे प्रधाने च प्रथमे केवले तथा' इति कोशात् प्रधानार्थकैकशब्दघटितेन प्रकृतमनुवचनेन 'कलौ दानं प्रधानं महाफलम्' इत्यर्थस्य ज्ञापनेऽपि दानेतरस्य तपोयज्ञादिलक्षणस्य वर्णाश्रमधर्म्मस्य कलावननुष्ठेयत्वबोधनाभावात्। तथा चैतद्वचनव्याख्यानशेषे कुल्लुकभट्टो बभाषे "यद्यपि तपःप्रभृतीनि सर्वाणि सर्वयुगेष्वनुष्ठेयानि तथापि सत्ययुगे तपः प्रधानं महाफलमिति ज्ञाप्यते। एवमात्मज्ञानं त्रेतायुगे, द्वापरे यज्ञः, कलौ दानम्" इति।

अत्रेदमवधेयम्–निवृत्तिलक्षणधर्म्मस्य प्रवृत्तिपूर्वकत्वनियमाद्वेदे प्रथमतो यज्ञदानतपःस्वाध्यायादिलक्षणं कर्म्मकाण्डं समाम्नाय पश्चादुपनिषद्भागेन ज्ञानकाण्डं समाम्नातम्। तत्र यथावर्णं स्वस्वशाखानुसारेण यादृशं यस्य नित्यनैमित्तिकादिकं कर्म वेदे तदुपबृंहकस्मृत्यादौ चोपदिश्यते तादृशं तेनानुष्ठेयमेव। अन्यथा प्रत्यवायः प्रसज्येत। किञ्च स्मृतिपुराणादिबोधितो विष्ण्वाद्याराधनरूपोऽपि धर्म्मो यथायथं भावानुसारेणानुष्ठातव्य इति।

स्यादेतत् पुराणप्रतिपाद्यो विष्ण्वाद्याराधनलक्षणो धर्म्मो नानुष्ठेयत्वमर्हति। पुराणानां परस्परं विमतिदर्शनेन व्यामोहजनकत्वात्। तथाहि—केषुचिल्लिङ्गादिपुराणेषु रुद्र एव जगदीश्वर इति, विष्णुपुराणादिषु विष्णुरेव जगदीश्वर इति, देवीभागवतादिषु देवी भगवती जगदीश्वरी इत्यादि निरूप्यते। न चैकस्यैव जगन्नियन्तुः परमेश्वरस्य शिवविष्ण्वादिशब्दैर्निरूपणात् शब्दभेदमात्रं न वस्तुभेद इत्यविरोध इति वाच्यम्। यत्र रुद्रो जगदीश्वर इति वर्ण्यते तत्र विष्ण्वादीनां, यत्र वा विष्णुर्जगदीश्वर इति वर्ण्यते तत्र रुद्रादीनां तदाज्ञावशवर्त्तित्वा-

दिलक्षणापकर्षस्यापि निरूपणात् । एकस्यैव हि युगपदुत्कर्षापकर्षयो-रसम्भवाच्च । किञ्च–बहवो जगदीश्वरा इति न सम्भवति । जगत्सृ-ष्ट्यादिनियमस्याव्यवस्थापत्तेः । न वा कस्यचित् पुराणस्य प्रामाण्यं कस्यचित्त्वप्रामाण्यमित्यपि सम्भवति । सर्वेषां व्यासप्रणीतत्वाविशेषेण तथा कल्पयितुमशक्यत्वात् । अप्रमाणार्थनिरूपणे व्यासस्य प्रतारक-त्वप्रसङ्गाच्चेति ।

अत्र केचित् समादधते । एक एव जगदीश्वरोऽस्य विश्वस्य सर्जनाय राजसम्, परिपालनाय सात्त्विकम्, संहाराय तामसं लीलाविग्रहमु-पादत्ते । तत्तल्लीलाविग्रहोपहितश्च परमेश्वरो ब्रह्मविष्णुरुद्रादिशब्दै-र्व्यपदिश्यते । लीलाविग्रहाणामानन्त्येऽपि ब्रह्मविष्णुरुद्राणां नानन्त्यम् । ब्रह्मत्वादिविभाजकानां रजःप्रभृतिगुणानां परिगणितत्वात् । एवं चैको विष्णुरेको रुद्र इत्याकारिका पौराणिकी प्रसिद्धिरप्युपपद्यते । रुद्रादीनां प्रत्येकमनन्तलीलाविग्रहशालित्वं तु इष्यत एव । "सहस्राणि सहस्रशो ये रुद्रा अधि भूम्याम्" इत्यादिश्रुतेः । "नमोऽस्त्वनन्ताय सहस्रमूर्तये" इत्यादिस्मृतेश्च । रुद्राराधनविधिशेषतया लिङ्गादिपुराणेषु विष्णुप्रभृ-तीनामपकर्षवचनम्, विष्ण्वाराधनविधिशेषतया च विष्णुपुराणादिषु रुद्राद्यपकर्षवचनं न दोषाय । "नहि निन्दा निन्द्यं निन्दितुं प्रवर्त्तते अपि तु स्तुत्यं स्तोतुम्" इति न्यायात् ।

लीलाविग्रहभेदं चेत्थमुदाहरन्ति—

गङ्गा मूर्द्धनि शीतदीधितिकला मौलौ ललाटस्थले
ज्वाला हौतवही गले गरलजा लेखा च नीलाकृतिः ।
सर्वाङ्गेऽपि च दृष्टिकर्षणकरी कर्पूरकान्तिः परा
यस्याङ्केऽपि च कापि पङ्कजमुखी कस्मैचिदस्मै नमः ॥

तथा—

यस्याङ्के जलदद्युतिः कटितटे सौवर्णवर्णा पटी
नेत्रे फुल्लसरोरुहप्रतिमता वक्त्रे शशाङ्काकृतिः ॥
कण्ठे कौस्तुभकान्तिरुज्ज्वलतमा वक्षःस्थले चोत्तमा
काप्यम्भोजमुखी पदे सुरसरित् कस्मै चिदस्मै नमः ॥ इति ।

एवं च तत्तल्लीलाविग्रहभेदमात्रं न वस्तुभेद इति न कश्चिद्विरोध इति ।

---

१ वाजसनेयिमाध्यन्दिनयजुःसंहितायाः षोडशेऽध्याये ५३, ५४ तमौ मन्त्रावत्र द्रष्टव्यौ । ( मं० दे० शा० )

अपरे त्वेवं समादधते—

> इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान् ।
> एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः ॥
> ( ऋ० १।१६४।४६ )

इति ऋग्वेदे श्रवणात्, "एकं सन्तं बहुधा कल्पयन्ति" (ऋ०१०।११४।५), "यो देवानां नामधा एक एव" ( ऋ० १०।८२।३ ) इति, तथा,

> एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा ।
> कर्म्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च ॥
> ( श्वे० उ० ६।११ )

इत्याद्यन्यत्रापि श्रवणाच्चैक एव परमात्मा समस्तोपाधिवर्जितो निराकारोऽपि निजाचिन्त्यवैभवेन निग्रहानुग्रहसमर्थः सर्वान् लोकान् नियमयतीति परमेश्वर इत्यभिधीयते। स एव चैहिकामुष्मिकश्रेयस्कामैर्जनैरुपासितव्यः । तस्मिंश्च निराकारे परब्रह्मण्युपासकानां चित्तावतरणायावलम्बनीयानामाकारविशेषाणामवश्यापेक्षणीयत्वे[1] ब्रह्मविष्णुशिवादिरूपैरग्निवायुसूर्यादिरूपैर्वा तस्यैव भूम्नः परमात्मनो विभूतिविग्रहान् ज्ञापयित्वा यत्र वैदिके सूक्तादौ यत्र वा पुराणादौ यो यो देवः स्तुत्यत्वेनाभिप्रेयते तस्य तस्य परब्रह्मत्वेन विवक्षणाद्युज्यत एव सर्वोत्तमत्वेन वर्णनम्। तथा प्रस्तुतदेवप्रशंसार्थमेव वर्ण्येतरदेवानां कार्यब्रह्मत्वेन विवक्षणादपकर्षाभिधानमपि युज्यत एवेति न वर्ण्येतरनिन्दायाः स्वार्थे किञ्चित्तात्पर्यमस्ति । तथा च न्यायविदो वदन्ति—'न हि निन्दा निन्द्यं निन्दितुं प्रवर्त्ततेऽपि तु स्तुत्यं स्तोतुम्' इति। स्पष्टश्चायमर्थो महाभारते शान्तिपर्वणि मोक्षधर्मे जापकोपाख्याने। तत्र हि सकामैर्भेददर्शिभिर्जापकैः प्राप्याणां तत्तद्देवलोकानां नरकत्वमुक्तं भीष्मेण। ततः प्रसिद्धं निरयपदार्थमवबुध्य कथं शुभकर्म्मकारिणामप्यशुभनरकप्राप्तिरित्याश्चर्यवति युधिष्ठिरे 'कीदृशं निरयं यान्ति जापका वर्णयस्व मे' इति पृच्छति सति भीष्म उवाच—

> अमूनि यानि स्थानानि देवानां परमात्मनाम्[2] ।
> नानासंस्थानवर्णानि नानारूपफलानि च ॥

---

१ उपासकचित्तवृत्तीनां स्वभावतो वैचित्र्याच्चिन्तनीयाकाराणामपि यथायथं बहुविधत्वमावश्यकमिति भावः ।

२ महाबुद्धीनाम् ।

दिव्यानि कामचाराणि विमानानि सभास्तथा ।
[1]आक्रीडा विविधा राजन् पद्मिन्यश्चैव काञ्चनाः ॥
चतुर्णां लोकपालानां शुक्रस्य च बृहस्पतेः ।
रुद्रादित्यवसूनां च तथान्येषां दिवौकसाम् ॥
एते वै निरयास्तात स्थानस्य परमात्मनः ।
[2]अभयं चानिमित्तं च न तत् क्लेशसमावृतम् ॥
[3]द्वाभ्यां मुक्तं त्रिभिर्मुक्तमष्टाभिस्त्रिभिरेव च
[4]चतुर्लक्षणवर्ज्यं तु [5]चतुष्कोणविवर्जितम् ॥
[6]अप्रहर्षमनानन्दमशोकं विगतक्लमम् ।
[7]आत्मकेवलतां प्राप्य तत्र गत्वा न शोचति ॥
[8]ईदृशं परमं स्थानं निरयास्ते च तादृशाः । इति ।

---

१ क्रीडास्थानानि उद्यानानीत्यर्थः ।

२ परमात्माभिन्नं स्थानं विवृणोति अभयमित्यादिना । अभयं भयशून्यं यतोऽनिमित्तं स्वभावसिद्धम् । क्लेशैरविद्यास्मितारागद्वेषाभिनिवेशाख्यैः समावृतं तत् स्थानं न भवति । असंगत्वादागन्तुकमपि भयं तत्र नास्तीति भावः ।

३ द्वाभ्यां प्रियाप्रियाभ्यां मुक्तम् । "अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः" इति श्रुतेः । यतस्त्रिभिः प्रियाप्रियहेतुभिर्गुणैर्मुक्तम् । तथा "भूतेन्द्रियमनोबुद्धिवासनाकर्म्मवायवः । अविद्या चेत्यमुं वर्गमाहुः पुर्यष्टकं बुधाः" इत्युक्ताभिरष्टाभिः पुरीभिर्मुक्तम् । एतदपि कुत इति चेद्यतस्त्रिभिः ज्ञेयज्ञानज्ञातृभावैर्मुक्तम् ।

४ इदमपि कुतः । यतश्चतुर्लक्षणवर्जितम् । लक्ष्यते ज्ञायते विषयस्वरूपं यैस्तानि लक्षणानि दृष्टिश्रुतिमतिविज्ञातिरूपाणि । तत्र रूपादिहीनत्वान्न प्रत्यक्षस्य विषयः। जातिगुणक्रियाशून्यत्वान्न शब्दस्य । असङ्गत्वेन सम्बन्धाग्रहान्नानुमानस्य । सर्वसाक्षित्वेनाजडत्वाच्च न बुद्धेः । तथा च श्रुतिः । "न दृष्टेर्द्रष्टारं पश्येर्न श्रुतेः श्रोतारं शृणुयान्न मतेर्मन्तारं मन्वीथा न विज्ञातेर्विज्ञातारं विजानीयाः" इति ।

५ उक्तैरेव दृष्ट्यादिविषयहेतुभूतै रूपादिमत्त्वादिभिश्चतुर्भिः कोणैर्वर्जितम् । तथा च "अस्थूलमनणु" इत्याद्याः श्रुतयः परमात्मनि सर्वविशेषान्निषेधन्ति ।

६ प्रहर्ष इष्टलाभजं सुखम् आनन्दस्तद्भोगजं सुखं ताभ्यां हीनमप्रहर्षमनानन्दम् । शोक आभ्यन्तरं दुःखम्, क्लमो बाह्यं दुःखं ताभ्यां हीनम् ।

७ विगलिताशेषविशेषतया आत्मकैवल्यं प्राप्तः सन् न शोचति । "तरति शोकमात्मवित्", "ब्रह्म वेद ब्रह्मैव भवति"इत्यादिश्रुतेः ।

८ ईदृशम् उक्तलक्षणं परमं निरतिशयस्वरूपं स्थानम् । ते च पूर्वोक्ताः तादृशाः सातिशयत्वेन हर्षशोकप्रदास्तत्तद्देवलोका निरया वेदितव्या इत्यर्थः ।

तथा चोक्तरीत्या विष्णुपुराणे विष्णोः परब्रह्मत्वेन विवक्षणादितरदेवानां तु कार्यब्रह्मत्वेन विवक्षणाद्भावनातारतम्येनैश्वर्यवत्तया तत्तल्लोकानां सातिशयत्वेन दुःखकरत्वान्नरकशब्दव्यवहार्यत्वमभिप्रेयते। एवमन्यदप्युदाहर्त्तव्यम्। किञ्च विष्णुभजनं शिवभजनं वा न सुरापानादिवद्रागतः प्राप्तम्। येन निन्दार्थवादानुमितनिषेधबलादनर्थकरं स्यात्। एवं च स्वस्वभावानुसारेण तैस्तैरुपासकैर्हरिहराद्याकारभेदेनापि तदेवैकं परं ब्रह्म विविधलिपिभेदेन समानमक्षरमिवाधिगम्यते। किञ्च "तं यथा यथोपासते तथेतः प्रेत्य भवन्ती"ति श्रुतेस्तत्तद्भावनावतां वैकुण्ठकैलासादिलोकप्राप्तिस्तत्सारूप्यप्राप्तिश्च कीटभृङ्गन्यायेन सम्पद्यते। सर्वथापि तत्तद्देवतोपासनाबोधकविधीनामद्वितीयपरब्रह्मभावनायामेव पर्यवसानम्, न तु द्वैतभावनायामिति तत्त्वम्।

तमिमं पौराणं भाषाभेदमजानन्तोऽर्वाचीनाः शैववैष्णवापसदाः पारमार्थिकं श्रुतिसिद्धमैकात्म्यं बाधमाना मुधैव परस्परं कलहायमानाः परमप्रयोजनात् च्यवन्त एव। तथा च स्मर्यते—

ब्रह्माणं केशवं रुद्रं भेदभावेन मोहिताः।
पश्यन्त्येकं न जानन्ति पाषण्डोपहता जनाः॥

इति।

सांख्यन्यायमीमांसादिदर्शनानामप्यापाततो भासमानो विसंवादः प्रोक्तयैव दिशा परिहर्त्तव्यः। तथाहि शून्यमात्मेति माध्यमिका बौद्धाः। क्षणिकं विज्ञानमेवात्मेत्यपरे बौद्धाः। अस्ति नित्यस्थायी कश्चिदात्मेति जैनाः। कर्त्तेति नैयायिका मीमांसकाश्च। सांख्यास्तु नायमात्मा कर्त्ता किन्तु भोक्तैवेति वदन्ति। समस्तोपाधिशून्यं शुद्धचैतन्यमात्मेत्यौपनिषदाः प्रमाणयन्ति। तथा चैवंरूपाभिर्वादिविप्रतिपत्तिभिर्यद्यपि व्यवहारदशायामात्मस्वरूपे सन्त्वनेके विकल्पास्तथापि "सर्वं ज्ञानं धर्मिण्यभ्रान्तं प्रकारे तु विपर्ययः" इति न्यायाद्यथा घटवस्तुनि तत्साक्षात्कारसाधने चक्षुरुन्मीलनादौ च सर्वेषामविसंवाद एव, तथा निरस्तसमस्तविषयदर्शनं मुक्तिरिति मुक्तात्मस्वरूपे शमदमोपरतितितिक्षाद्यात्मके तत्साधने च सर्ववादिनामविवाद एवेत्यैकमत्यं सर्वदर्शनानामवगन्तव्यम्।

एतदेवाभिसन्धाय महिम्नःस्तोत्रे पुष्पदन्तेनाभ्यधायि—

त्रयी सांख्यं योगः पशुपतिमतं वैष्णवमिति
प्रभिन्ने प्रस्थाने परमिदमदः पथ्यमिति च।

रुचीनां वैचित्र्यादृजुकुटिलनानापथजुषां
नृणामेको गम्यस्त्वमसि पयसामर्णव इव ॥
इति ।

इदमत्रावधातव्यम्—

यः कश्चिन्न्याय्य आचारः सर्वं शास्त्रमिति श्रुतिः ।
यदन्याय्यमशास्त्रं तदित्येषा श्रूयते श्रुतिः ॥

इति स्मरणात् सर्वोऽपि न्याय्यः सदाचारलक्षणो धर्म्मः सप्रमाण एव । तत्र मन्दाधिकारिणा विशुद्धज्ञानोदयाय मलिनवासनाकलुषितस्य निजान्तःकरणस्य परां शुद्धिमाकाङ्क्षमाणेन कोऽपि न्याय्यः पन्था अधिगन्तव्य इति प्राप्ते यो यस्य कुलक्रमागतः स तस्याभयप्रद इत्यार्यजनसिद्धान्तः ।

यदाह भगवान् मनुश्चतुर्थेऽध्याये—

येनास्य पितरो याता येन याताः पितामहाः ।
तेन यायात् सतां मार्गं तेन गच्छन् न रिष्यते ॥

( मनु० ४।१७८ ) इति ।

एवं शास्त्रविहितं धर्म्ममनुतिष्ठन् धनाद्यभावेनावसीदन्नपि कदाचिन्नाधर्म्मे बुद्धिं कुर्यात् । यद्यप्यधर्म्मव्यवहारिण आपाततो धनादिसम्पद्भागिनोऽपि केचित् दृश्यन्ते, तथापि तेषां पापाचाराणां शीघ्रं धनादिविपर्ययोऽपि बहुशो दृश्यत एव । किञ्च परिपालितः पशुर्गवादिर्यथा वाहदोहाभ्यां सद्यः फलति, नैवमधर्मः । किन्तु क्रमेणावर्त्तमानो रूढपदो रोग इव कालेन फलोन्मुखीभवन्नयमधर्मः स्वाश्रयं पुमांसं समूलघातं हन्ति ।

अत एव स्मर्यते—

धर्म्मं शनैः सञ्चिनुयाद्वल्मीकमिव पुत्तिकाः ।
परलोकसहायार्थं सर्वभूतान्यपीडयन् ॥
नामुत्र हि सहायार्थं पिता माता च तिष्ठतः ।
न पुत्रदारं न ज्ञातिर्धर्म्मस्तिष्ठति केवलः ॥

(मनु० ४।२३८-२३९)

---

१ इदं वचनं महाभारते मोक्षधर्मे गोकपिलीयाख्याने "यद्यदाचरते शास्त्रमर्थ्यसर्वप्रवृत्तिषु" इतिश्लोकव्याख्यायां नीलकण्ठभट्टेनोपन्यस्तम् ।

तस्माद्धर्म्मं सहायार्थं नित्यं सञ्चिनुयाच्छनैः।
धर्म्मेण हि सहायेन तमस्तरति दुस्तरम्॥
(मनु० ४।२४२) इति।

तस्मात् स्वस्य निःश्रेयसमिच्छता मनुजेन प्रथमतः सद्धर्म्मपथमनुसृत्य यमनियमनिषेवणेन समनस्कानीन्द्रियाणि निरुध्यात्मवशं नयेत् (? नेतव्यानि)। तथा सतीन्द्रियप्रणालिकयान्तःकरणे संक्रामन्तीनां मलिनवासनानां द्वारगुप्त्या संक्रामाभावात् संक्रान्तपूर्वाणां च तासां सुकृतसलिलप्रवाहेण प्रक्षालनाच्च परा विशुद्धिश्चित्तस्य सम्पद्यते। यद्यपीन्द्रियनिरोधोऽतीव दुष्करस्तथापि तदुपायः प्रदर्शितो महाभारते मोक्षधर्म्मे २६९ अध्याये—

नाक्षैर्दीव्येन्नादद्दीतान्यवित्तं न वायोनीयस्य वित्तं प्रगृह्णात्।
क्रुद्धो न चैव प्रहरेत धीमांस्तथास्य स्यात् पाणिपादं सुगुप्तम्॥
नाक्रोशमृच्छेन्न मृषा वदेच्च न पैशुनं जनवादं च कुर्यात्।
सत्यव्रतो मितभाषोऽप्रमत्तस्तथाऽस्य वाग्द्वारमथो सुगुप्तम्॥
नानाशनः स्यान्न महाशनः स्यादलोलुपः साधुभिरागतः स्यात्।
यात्रार्थमाहारमिहाददीत तथाऽस्य स्याज्जाठरी द्वारगुप्तिः॥
न वीरपत्नीं विहरेत नारीं न चापि नारीमनृतावाह्वयीत।
भार्याव्रतं ह्यात्मनि धारयीत तथास्योपस्थद्वारगुप्तिर्भवेत॥

---

१ दुस्तरं तमः नरकादिदुःखमधर्मजन्यम्।

२ ब्रह्मचर्यं दया क्षान्तिर्ध्यानं सत्यमकल्कता। अहिंसाऽस्तेयमाधुर्ये दमश्चेति यमाः स्मृताः॥ स्नानं मौनोपवासेज्यास्वाध्यायोपस्थनिग्रहाः। नियमा गुरुशुश्रूषाशौचाक्रोधाप्रमादताः (या० स्मृ० ३।३१२–३१३) इति याज्ञवल्क्योक्ता यमादयः। (अकल्कता अकुटिलतेत्यर्थः)

३ अन्यस्य परस्य वित्तं धनं नाददीत चौर्यकापट्यादिना नात्मसात् कुर्यात्। तथा योनौ कुले भवतीति योनीयः कुलीनस्तथा न भवतीत्ययोनीयस्तस्यासत्पुरुषस्य वित्तं न प्रतिगृण्हीयात् असत्प्रतिग्रहान्निवर्त्तेतेत्यर्थः।

४ आक्रोशं न ऋच्छेत् न कस्यापि निन्दां प्रत्यभिगच्छेत् न कंचिदपि निन्देदित्यर्थः।

५ देहयात्रानिर्वाहार्थम्।

६ वीरपत्नीं नारीं न विहरेत पराङ्गनोपभोगं वर्जयेदिति भावः। वीरपदं परपुरुषोपलक्षणम्। अपि च नारीं स्वपत्नीमनृतौ ऋतुकालादन्यत्र नाह्वयीत।

मोघान्यगुप्तद्वारस्य सर्वाण्येव भवन्त्युत ।
किं तस्य तपसा कार्यं किं यज्ञेन किमात्मना ॥ इति ।

तदेवं यथायथं सद्धर्मानुष्ठानेन प्रक्षीणसमूलमलिनवासनो नितान्तनिर्मलस्वान्तो नरोत्तमो विदितवेद्यः सन् कृतार्थः सम्पद्यते ।

यदाह भगवान् मनुः--

इन्द्रियाणां निरोधेन रागद्वेषक्षयेण च ।
अहिंसया च भूतानाममृतत्वाय कल्पते ॥
( मनु० ६।६० )

इति सर्वेष्टसिद्धिः ।

श्रुतिस्मृत्यादिवाक्यानि ग्रन्थकारवचांसि च ।
प्रमाणमनुरुध्यैव विचारोऽत्र मया कृतः ॥
अथापि चेन्मनुष्यत्वात् स्खलनं मम लेखने ।
क्षन्तुमर्हन्ति विद्वांसः सारमार्या हि गृह्णते ॥
चिमणाजीतनूजेन दाक्षिणात्यद्विजन्मना ।
यज्ञेश्वरेण विप्रेण ग्रन्थ एष समग्रथि ॥
शालिवाहनशाकेऽस्मिन् नागेभर्षिधरा ( १७८८ ) मिते ।
शुक्ले नभस्ये पूर्णोऽभूद् ग्रन्थोऽयं प्रतिपत्तिथौ ॥
वेदादिग्रन्थपाथोधिमन्थनेन समुद्धृतः ।
विद्यासुधाकरः सोऽयमानन्दयतु सज्जनान् ॥

॥ इति श्रीभट्टयज्ञेश्वरोन्नीते आर्यविद्यासुधाकरे पञ्चमः प्रकाशः ॥

॥ समाप्तोऽयं ग्रन्थः ॥

---

संभोगायेति शेषः । ननु तर्हि सामान्यवनितया यथाकामं विहारोऽभ्यनुज्ञायत इत्याशङ्कायामाह—भार्याव्रतमिति । व्रतशब्दोऽत्र तन्मात्रोपभोगे वर्त्तते पयोव्रतमित्यादौ यथा ।

# शुद्धिपत्रम् ।

सूचना—१५६ तम पृष्ठ 'पाषण्डिनो' इत्यस्य स्थाने 'पाखण्डिनो' इत्येषोऽप्रामाणिकः पाठः समाश्रितो ग्रन्थकर्त्रैव । एतादृशानामप्रामाणिकानां ग्रन्थकर्त्रैव समाश्रितानां पाठानां प्रायेण नात्रोल्लेख इति विभावनीयं विद्वद्भिः ।

| पृ० | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३ | १३ | सहस्रांशु- | सहस्रांशु- |
| ५ | १ | –सनकोः | –सेनकाः |
| ( ९ | २३ | 'पौण्ड्रकाश्चोड'– | इत्ययं पाठो द्वितीयसंस्करणे तच्छुद्धिपत्रे च ) |
| ,, | ३२ | वहिर्– | बहिर्– |
| १३ | ३२ | –वर्त्ती | –वर्ती |
| १४ | १७ | अमस्माकं | अस्माकं |
| १५ | १३ | –संहितायाा | –संहितायाः |
| ,, | १९ | निबघ्नन्ति | निबध्नन्ति |
| १७ | ३ | –क्ष्यित | –क्ष्यत |
| ,, | १० | वभूव | बभूव |
| ,, | २२ | –ईयायेति | –इयायेति |

( प्रथमद्वितीयसंस्करणयोस्तु 'ईयायेति' इत्येव पाठः )

| पृ० | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १८ | १७ | सुवासा | सुवासाः |
| ,, | ३२ | शाखासु | च शाखासु |
| १९ | १५ | वेदो | वेदे |
| २० | १३ | अनुष्टुभ. | अनुष्टुभः |
| २१ | १६ | कर्त्तम् | कर्त्तुम् |
| ,, | २१ | –भाव | –र्भाव |
| २२ | ६ | आङ्कायाम् | आशङ्कायाम् |
| २४ | १७ | –वायव | –वायक |

| पृ० | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २५ | ३२ | –त्र– | –त्र– |
| २६ | १४ | –धनीा– | –धना– |
| २७ | २८ | वेदितव्य | वेदितव्ये |
| ( ,, | ३३ | 'पाठभेदः' इत्यनन्तरम् 'इति दाधिमथाः' इति पठनीयम् ) | |
| २८ | २६ | सप्त | सप्त |
| २९ | ६ | स्वाध्यायैकः | स्वाध्यायैकदेशः |
| ३० | १८ | –देताकं | –देवताकं |
| ३१ | २९ | ऋषिरित्येव सामान्यतो ( नाम ) | नाम ऋषिरित्येव सामान्यतो |
| ३२ | ६ | आङ्गरा | अङ्गिरा |
| ,, | ११ | राज्ञ | राज्ञः |
| ३९ | १ | वातायना | वातायनाः |
| ,, | २९ | –नाम्ति | –नाम्नि |
| ४५ | २६ | आलभन्त | अलभन्त |
| ४९ | २१ | विश्वा– | विश्व– |
| ५० | २ | स्पष्ट | स्पष्टम् |
| ( ५१–६३ | | शीर्षकेषु 'द्वितीयो प्रकाशः' इति पाठः 'द्वितीयः प्रकाशः' इत्येवं शोधनीयः ) | |
| ५२ | १८ | जगृह | जगृहे |
| ५३ | १५ | एककपाल– | एकादशकपाल–(?) |
| ५४ | ३ | विनियागः | विनियोगः |
| ,, | २४ | अध्वयुर् | अध्वर्युर् |
| ५५ | ५ | दशमं | नवममग्निहोत्रम्,दशमं |
| ५६ | ४ | व्रीहिस्थान | व्रीहिस्थाने |
| ५७ | २७ | तोषहतवे | तोषहेतवे |
| ५९ | ३२ | –पूर्वकं | –पूर्वकं |
| ६० | २६ | ८—८३ | ८२—८३ |
| ६१ | २१ | प्रवेशयित्वा | प्रवेशयित्वा (?) |
| ६३ | १५ | क्षक्ष्यत्येकः | शक्ष्यत्येकः |
| ६४ | ४ | युत | युतं |
| ,, | १० | –ानहित– | –निहित– |

